# प्राचीनभारतस्य भौगोलिकस्वरूपम्




कृष्णकुमार

# प्राचीनभारतस्य भौगोलिकस्वरूपम्

## (प्राचीनसंस्कृतरूपकाणां सन्दर्भेण)



विद्यामार्तण्ड डा० कृष्णकुमार आयुर्वेदालंकार
एम० ए०, साहित्याचार्य,
पी-एच० डी०, डी०लिट्०
अवकाशप्राप्त विभागाध्यक्ष संस्कृत,
गढ़वाल विश्वविद्यालय श्रीनगर

**मयंक प्रकाशन**
**मिश्रा बाग, हनुमानगढ़ी**
**कनखल (हरिद्वार)**

## प्रकाशित कृतियां

१. भारतीय संस्कृति के आधार तत्त्व
२. अलंकारशास्त्र का इतिहास
३. वैदिक साहित्य का इतिहास
४. संस्कृत साहित्य का इतिहास
५ प० अम्बिकादत्त व्याय - एक अध्ययन
६. ऋक्यसूक्त-सुधाकर
७. ऋक्सूक्त-संग्रह
८. चतुर्वेद-ऋक्सूक्त-संग्रह
९. वैदिक-ऋक्सूक्त-संग्रह
१०. विषविज्ञान
११. पोषण के लिये खनिज और विटामिन
१२. संस्कृत नाटक सूक्तरङ्गिणी
१३. छन्दोऽलंकार प्रकाश
१४. प्राचीन कथायें
१५. गढ़वाल के प्रमुख तीर्थ
१६. गढ़वाल के संस्कृत अभिलेख
१७. उदयनचरितम् (संस्कृत उपन्यास)
१८. ध्वन्यालोक व्याख्या
१९. अभिज्ञान शाकुन्तलम् व्याख्या
२०. प्रियदर्शिका व्याख्या
२१. प्रतिमानाटकम् व्याख्या
२२. ह चिरितम् पञ्चम् उच्छ्वास व्याख्या
२३. किरातार्जुनीयम् प्रथम सर्ग व्याख्या
२४. रघूवंशम् द्वितीय सर्ग व्याख्या
२५. रघूवंशम् त्रयोदश सर्ग व्याख्या
२६. कुसुम लक्ष्मी व्याख्या
२७. शिवराजविजय व्याख्या
२८. कुन्दमाला व्याख्या
२९. अस्ति कश्चिद् वागर्थीयम् (संस्कृत नाटक)
३०. संस्कृत नाटकों का भौगोलिक परिवेश
३१. Deseriptive Catalogue of Sanskrit Manuscripts - I
३२. Deseriptive Catalogue of Sanskrit Manuscripts - II
३३. Deseriptive Catalogue of Sanskrit Manuscripts - III
३४. संस्कृत नाटकों का वानस्पतिक पर्यावरण
३५. संस्कृत नाटकों का जीवन-जगत्
३६. चौरपञ्चाशिका
३७. अस्ति कश्चिद् वाग्विशेष:
३८. अन्त:स्रावी ग्रन्थियां
३९. प्राचीन भारत का सांस्कृतिक इतिहास
४०. तपोवनवासिनी (संस्कृत उपन्यास)
४१. तपोवनवासिनी (हिन्दी उपन्यास)
४२. केदारखण्ड पुराण (चार खण्डों में)
४३. मेघदूतानुशीलनम्
४४. गढ़वाल के प्राचीन अभिलेख एवं उनका ऐतिहासिक महत्त्व
४५. प्राचीन भारत की राजनीतिक एवं प्रशासनिक संस्थायें
४६. विधिपौरुषम् (संस्कृत उपन्यास)
४७. भाग्य और पुरुषार्थ (हिन्दी अनुवाद)

# प्राचीनभारतस्य भौगोलिकस्वरूपम्

## (प्राचीनसंस्कृतरूपकाणां विशेषसन्दर्भेण)

डा० कृष्णकुमार



# THE GEOGRAPHY OF ANCIENT INDIA

# प्राचीनभारतस्य भौगोलिकस्वरूपम्

## (प्राचीनसंस्कृतरूपकाणां विशेषसन्दर्भेण)

डा० कृष्णकुमार

प्रकाशन

मयंक प्रकाशन
मिश्रा बाग, हनुमानगढ़ी
कनखल (हरिद्वार)





मूल्य:
२००२ ई०

मुद्रक:

मनोजकुमार
राज कम्प्युटर्स
२७८, गोविन्दपुरी
हरिद्वार (उत्तरांचल)

आशैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासारशीतात्
तीरान्तान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य।
आगत्याऽऽगत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूड़ारत्नांशुगर्भास्तव चरणयुगस्याऽङ्गुलीरन्ध्रभागाः।।

मुद्राराक्षस ३.१९

# प्राक्कथन

प्राचीनसमये भारतीयमनीषिभिर्भूगोलविषयमधिकृत्य वर्तमानकालसदृशं न तथा विशिष्टं व्यवस्थितञ्च साहित्यं सृष्टं, तथापि तेषां भौगोलिकज्ञानं नाऽतिन्यूनं हीनकोटिकं वाऽवर्तत। अनेकेषु पुराणेषु भौगोलिकवर्णनानामुपस्थितिः प्राचुर्येण समुपलभ्यत एव। अथ चाऽन्योऽपि प्राचीनसाहित्यसन्दोहो भौगोलिकज्ञानं वैशद्येन समुपस्थापयति। साहित्यमेतत् प्राचीनभारतीयमनीषिणां विदुषां च भौगोलिकज्ञानदाक्ष्यं प्रमाणीकरोति। मनीषिणो विद्वांसस्तेऽतिविस्तृत-भारतीयैर्भूभागैर्निश्चयेन परिचिता अवर्तन्त। विशेषरूपेण च भारतीयभूभागसंलग्नजनपददेशसमुद्रद्वीपादिभिस्तेषां परिचितिं प्राचीनभारतीयसाहित्यं वैशद्येन प्रकटीकरोति।

प्राचीनसाहित्ये प्रस्तुतानां विविधस्थाननाम्नामेकत्वं वर्तमानकालीननामभिः सह विद्वद्भिर्याथार्थ्येन समीक्षितम्। प्राचीनकालवर्तिनो महर्षयः सम्पूर्णभारतभुवो भौगोलिकज्ञानं समग्रमधिगम्योदीच्यामाहिमालयोत्तुङ्गगिरिशिखरेभ्यो दक्षिणदिशि कुमार्यन्तरीपपर्यन्तं प्रतीच्यामावंक्षुसरित्तटवर्तिभूमिभागेभ्यः प्राच्यां कामरूपमणिपुरपर्यन्तमस्य राष्ट्रस्य भावनात्मकं सांस्कृतिकं राजनीतिकञ्चैक्यं सुप्रतिष्ठापयामासुः।

प्राचीनकालीनसाहित्यनिबद्धविवरणानि प्रतिपादयन्ति, यद् वंक्षुसरित् भारतराष्ट्रस्य पश्चिमोत्तरसीमारेखा निर्धारिताऽवर्तत। काकुत्स्थवंशोद्भवस्य सम्राजो रघोः सैन्यानि वंक्षुसरित्तटमुपगम्य प्रचण्डदुर्दान्तहूणान् पराजयन्त। प्राचीनकाले सुविस्तृतेऽस्मिन्नतिविशाले

भारतराष्ट्रे स्वतन्त्रैरनेकै राजनीतिकैककैर्विभाजिते सत्यप्यत्र धार्मिकं सांस्कृतिकञ्चैक्यमद्भुतं ध्रुवमवर्तत, येन सकलमिदं भारतराष्ट्रमेकसूत्रे पिनद्धम्। संस्कृतकवयः समग्रभारतीयोपमहाद्वीपस्य राजनीतिकमैक्यमपि सततमकल्पयन्।

प्राचीनभारतीयाः मनीषिणो वीरपुरुषाश्च भारतेतरदेशैर्द्वीप-द्वीपान्तरैः सागरमहासागरैश्च ध्रुवं भृशं परिचिता आसन्। महोत्साहसम्भृतास्ते भृशं बुद्धियुक्तिसम्भृतास्तान् प्रदेशान् सम्प्राप्य धार्मिकसांस्कृतिकराजनीतिकोपनिवेशांश्च संस्थाप्य भारतयशःपताकाः दिग्दिगन्तरेषु प्रसारयामासुः। महर्षयस्तपस्विनश्च भारतीय-धर्मसंस्कृत्यादितत्त्वानां सकलैशियामहाद्वीपे दक्षिणपूर्वीयद्वीपसमूहे तद्दूरेषु तददूरेषु च प्रदेशेषु प्रसारणे समर्था अभूवन्।

भारतीयवीरजनाः महोत्साहसाहससम्पन्नास्तान् प्रदेशान् गत्वा राजनीतिकं प्रभुत्वं प्रसार्य तत्रत्यानसभ्यान् निवासिनः सभ्यांश्चक्रुः। भारतीयव्यापारिणोऽपि यशःपताकाः प्रसारयन्तो भारतनिर्मितैः निजपोतैर्बङ्गसमुद्रं प्रशान्तमहासागरमारब्यसागरं हिन्दमहासागरं भू-मध्यसागरञ्चापि समुत्तीर्य समुद्रपारीयैः देशैः सह व्यापारसम्बन्धं संस्थापयामासुः। दक्षिणपूर्वीयद्वीपसमूहेन अफीकामहाद्वीपेन चीनदेशेन आरब्यदेशैः यूरोपीयदेशैश्च सह तेषां व्यापारिकसम्बन्धः सुतरां सततञ्चाऽवर्धत, ध्रुवमत्रैतिहासिकप्रमाणानि प्राचुर्येण समुपलभ्यन्ते।

प्राचीनसाहित्ये रामायणमहाभारतपुराणादिषु तत्कालीना प्रमातुमशक्याऽमूल्या विविधविषयवती सामग्री सुरक्षिता वर्तते। वेदादिशास्त्रीयग्रन्थेषु ज्योतिषधर्मशास्त्रार्थशास्त्रालङ्कार-

शास्त्रायुर्वेदादिवैज्ञानिकविषयसम्बद्धेषु पुस्तकेषु प्राचीनकालीनं भौगोलिकज्ञानमप्यन्यैर्विषयैः सह सन्निहितं लक्ष्यते। पाणिनीयाष्टाध्यायी पातञ्जलमहाभाष्यञ्चापि विविधग्रन्थाः प्राचीनभौगोलिकसूचनासन्दोहस्य स्रोतांसि वर्तन्ते। राजशेखरकृतकाव्यमीमांसा चाऽप्यत्र महत्त्वशालिनी गण्यते। संस्कृतकाव्यान्यपि महनीयं भौगोलिकज्ञानं प्रकटयन्ति। कालिदासभारविमाघश्रीहर्षादिमहाकविकृतकाव्येषु प्राचीनभौगोलिकज्ञानं ध्रुवं सन्निहितम्।

बुद्धकालीनं बुद्धोत्तरकालीनञ्च भारतं विज्ञातुं संस्कृतभाषानिबद्धं बौद्धसाहित्यमत्रोल्लेखनीयं वर्तते। बौद्धसाहित्यमत्र ख्रीष्टात्षष्ठशताब्दिपूर्ववर्तिनां षोडशमहाजनपदानां स्थितिं याथार्थ्येन बोधयति। त्रिपिटकजातकदीपवंशमहावंशललितविस्तरावदानादिसाहित्यं प्राचीनकालीनस्थाननाम्नां महाकोषरूपेणाऽवतिष्ठते। प्राचीनजैनसाहित्यञ्चापि प्राचीनभौगोलिकस्थानानि परिचाययति। प्राचीनाभिलेखमुद्रादीनां संग्रहः प्राचीनस्थानपरिचयनिर्धारणे सहायको वर्तते, नास्त्यत्र कश्चिदपि सन्देहः।

प्राचीनसमये बहुभिर्वैदेशिकैः पर्यटकैर्यात्रिभिर्ज्ञानविज्ञानपिपासुभिर्भारतवर्षस्य बहुकालपर्यन्तं समग्रत्वेन भ्रमणं विहितम्। निजसंस्मरणेषु तैरनेकेषां स्थानानां विशदपरिचयो वर्णितः। हिकेटियसः(५४९-४८६ ख्रिष्टाब्दपूर्वम्), हेरोडोटसः (४८४-४४३ ख्रिष्टाब्दपूर्वम्), टेसियश्च (३९८ ख्रिष्टाब्दपूर्वम्) इत्यनेके यात्रिणः स्वसंस्मरणेषु भारतवर्षवर्तीनि स्थानान्युल्लिलिखुः। सिकन्दरेण सह समागताः यूनानदेशवास्तव्या इतिहासविदस्तात्कालिकीं

भारतीयभौगोलिकसामग्रीं निर्दिदिषुः।

मौर्यसाम्राज्यसंस्थापकस्य चन्द्रगुप्तस्य राजसभायां संस्थितो मेगास्थनीजमहोदय इण्डिकेतिनाम्ना प्रसिद्धं संस्मरणं लिलेख। तत्र तेन तत्कालीना बहुविधा भौगोलिकसामग्री सन्निवेशिता। एरियस-प्लिनी-पेरीप्लस ऑफ दि एरीथ्रियन सी- टालेमीत्यादि- ग्रन्थनिबद्धानि वर्णनानि प्राचीनभौगोलिकज्ञानस्योत्कृष्टानि स्रोतांसि वर्तन्ते।

प्राचीनसमयेऽनेके तीर्थयात्रिणो ज्ञानपिपासवो विद्यार्थिनश्च भारतवर्षं बभ्रमुः। तेषां संस्मरणानि लिखितरूपेण वर्तमानसमयेऽपि समुपलभ्यन्ते। ख्रिष्टस्य पञ्चमशताब्द्यां फाहियानमहोदयस्य, सप्तमशताब्द्यां ह्वेनसांगेत्सिंगसुंगयुंगमहोदयानां भारतभ्रमणसंस्मरणानि तात्कालिकीं भौगोलिकसामग्रीं वैशद्येन प्रस्तुवन्ति। प्राक्कालिकभौगोलिक ज्ञानमधिगन्तुं मोहम्मदीयाः पर्यटकाः लेखकाश्चाऽपि सहायकाः वर्तन्ते। अत्र अलबरूनीमहोदयः प्रमुखः। भारतवर्णनविषयकं "तहरीक-ए-हिन्दे' ति पुस्तकं विरच्य तेनाऽस्य देशस्य भौगोलिकस्थितिरप्यन्यविषयैः सह प्रकाशिता।

वर्तमानसमयेऽनेकैः समीक्षकैर्मनीषिभिर्भारतवर्षस्य प्राचीन-भौगोलिकस्थितिं प्रकाशयितुं प्रचुरं सुविस्तृतं व्यापकञ्च कार्यं सम्पादितम्। प्राचीनभारतीयसाहित्यसन्दोहं प्राचीनवैदेशिकानां यात्रिणां लेखकानाञ्च संस्मरणान्यन्यांश्चाभिलेखादीनाश्रित्य विद्वद्भिः समीक्षकैर्भारतवर्षस्य प्राचीनभौगोलिकस्थानस्वरूपनिर्धारणे विभिन्नस्थानस्थितिसुनिश्चिती करणे च महान् प्रयासो विहितः।

सम्भवतोऽत्र प्रथमो महनीयः प्रयासो जनरलकनिंघममहोदयस्य विद्यते -'एन्शिएन्ट ज्योग्राफी आफ इन्डिया'। पुस्तकमिदं विदुषा ग्रन्थकृता सामान्यतश्चीनदेशवास्तव्यानां यात्रिणां यूनानदेशीयलेखकानाञ्च संस्मरणान्यधिकृत्य निबद्धम्। तदनन्तरं विषयमेनमधिकृत्य बहुभिर्भारतीयैः पाश्चात्यैश्च मनीषिभिः समीक्षकैश्च लेखनी स्वहस्तगता विहिता। तेषामतिदीर्घा सूची विद्यते, न च सा पूर्णरूपेण प्रस्तोतुं शक्यते। विमलचरणसाहामहोदयेन 'प्राचीन भारत का ऐतिहासिक भूगोल (Historical Geography of Ancient India) इति ग्रन्थे तथाभूतानां ग्रन्थानां विस्तृता सूची स्वग्रन्थप्रस्तावनायां प्रस्तुता। अनेनाऽस्य कार्यस्य महत्त्वं स्वयमेव सिद्धम्।

प्राचीनभारतस्य क्रमबद्धेतिहासः ख्रिष्टपूर्वषष्ठशताब्दिकालादुपलभ्यते। समयोऽयं वर्तते भगवतो बुद्धस्य तदुत्तरवर्ती च। महाभारतयुद्धानन्तरं बुद्धपर्यन्तं भारतवर्षे शक्तिशालिनां विविधराजतन्त्राणां प्रजातन्त्राणाञ्च स्थापनपरम्परा समवर्तत। ख्रिष्टपूर्वषष्ठशताब्दिसमये षोडशमहाजनपदानां स्थितिरितिहासविद्भिरितिहासप्रसिद्धा प्रमाणीक्रियते। भारतवर्षस्य प्राचीनेतिहासक्रमे युगमिदं मोहम्मदीयाक्रमणपूर्वकालीनं दशमशताब्दिपर्यन्तं हिन्दुयुगमित्युच्यते। सुदीर्घेऽस्मिन् काले भारतीयधर्मसंस्कृत्यादितत्त्वानां सुसंगठितं प्रचारप्रसारादिकं समवर्तत। तात्कालिकीमैतिहासिकीं च भौगोलिकस्थितिं विज्ञातुं प्रमाणयितुञ्च बाह्याभ्यन्तराणि स्रोतांसि प्राचुर्येण समुपलभ्यन्ते। प्राचीनसंस्कृतरूपकाण्यप्यत्र प्रामाणिकानि स्रोतांसि वर्तन्ते।

संस्कृतकाव्येतिहासक्रमे रूपकलेखनपरम्पराऽतिप्राचीना। अत्र भासो नाम महाकविः प्राचीनतमो गण्यते। तस्य कृतय एव समुप लब्धं प्राचीनतमं नाट्यसाहित्यं वर्तते। कविरयं सम्भाव्यते ख्रिष्टपूर्वक श्चतुर्थशताब्दिकालीनः। दिङ्नागाभिध ानो नाट्यकर्ता ख्रिष्टीय दशमशताब्दिकालीनः। अतः प्राचीनसाहित्यं विशेषतश्च संस्कृतरूपकाण्याश्रित्य प्राचीनभारतीयभौगोलिकस्थितिमध्येतुं भासादारभ्य दिङ्नागपर्यन्तं संस्कृतरूपकसमीक्षणं समुचितम्।

भारतीयेतिहासक्रमे ख्रिष्टपूर्वचतुर्थशताब्दितः ख्रिष्टीयदशम-शताब्दिपर्यन्तं कालोऽयं महनीयो गौरवास्पदश्च गण्यते। रामायण-महाभारतकीर्तितराजवंशानन्तरं ख्रिष्टपूर्वचतुर्थशताब्दिजाताः मौर्यवंशीया नरपतय एव तथाभूताः सार्वमौमाः सम्राजश्चक्रवर्तिनो बभूवु-रावंक्षुनदतटाद् ये कामरूपपर्यन्तमाकैलासभूधराच्च दक्षिणसमुद्रतट-वर्तिकुमार्यन्तरीपं यावत् समग्रं भरतखण्डमेकशासनान्तर्गतं समावेश्य शासनसूत्रं समचालयन्।

तदन्तरमपि बहवो महत्त्वाकांक्षिणः पार्थिवाः भरतखण्डान्तर्गतान् विभिन्नान् स्वतन्त्रशासनान् जनपदान् राजनीतिकैकसूत्रे सुसम्बद्धान् विधातुं प्रयेतिरे। तत्र शुंगनरपतयो गुप्तवंशीयाः पार्थिवाः वध र्निकुलोत्पन्नाश्च राजानो भारतीयेतिहासक्रमेऽतितरां प्रथिताः बभूवुः। एतत्कालीनाः कवयोऽपि काव्येषु नाटकेषु च भरतखण्डस्य राजनीतिकैक्यसम्पादने महान्तमादर्शं प्रास्तुवन्। गुप्तवंशीयस्य सम्राजश्चन्द्रगुप्तस्य समकालीनो विशाखदत्तो मुद्राराक्षसनाटकप्रणेता

आहिमालयाद् दक्षिणसमुद्रं यावदेनं समग्रं भरतखण्डमेकशासन-सूत्रबद्धमवलोकयितुं चकांक्षे।[1]

प्रस्तुते भौगोलिकाध्ययनेऽस्मिन् ख्रिष्टपूर्वचतुर्थशताब्दि-कालीनभासकवेरारभ्य ख्रिष्टीयदशमशताब्द्युत्तरार्धजातदिङ्नागक-विपर्यन्तं रूपकाणि प्राचीनेनान्येन बहुतरेण साहित्येन सार्धमाश्रितानि वर्तन्ते। सम्भवतः कौटिल्यश्चाणक्योऽप्यस्मिन्नेव समये बभूव।

भासस्य त्रयोदशसु रूपकेषु भारतवर्षस्य तत्कालीनः सुविस्तृतो भौगोलिकपरिचयः समुपलभ्यते। तदनन्तरं शूद्रकः(ख्रिष्टपूर्व द्वितीयशताब्दी), कालिदासः (ख्रिष्टपूर्व प्रथमशताब्दी) विशाखदत्तः (ख्रिष्टस्य चतुर्थशताब्दी), चतुर्भाणीलेखकाः शूद्रकेश्वरदत्तवररु-चिश्यामिलकाः (ख्रिष्टस्य पञ्चमशताब्दी), हर्षो (ख्रिष्टस्य सप्तमशताब्दी), भट्टनारायणो (सप्तम शताब्दी), भवभूतिः (सप्तम शताब्दी), महेन्द्रविक्रमवर्मा (सप्तम शताब्दी), बिज्जिका (सप्तम शताब्दी), यशोवर्मा (अष्टम शताब्दी), मुरारिः (अष्टमशताब्दी), अनङ्गहर्षः (अष्टम-नवम शताब्दी), शक्तिभद्रः (नवम शताब्दी), कुलशेखरवर्मा (नवम शताब्दी), दामोदरमिश्रः (नवम शताब्दी), क्षेमीश्वरः (नवम-दशम शताब्दी), राजशेखरः (नवम-दशम शताब्दी), दिङ्नागश्च (दशम शताब्दी), इत्येवमादयः कवयः स्वस्वरूपकेषु भारतवर्षस्य भौगोलिकस्थानानि सूचयन्तस्तेषां गौरवं प्रादर्शयन्। विभिन्नसमयेषु कृतानि कविकाव्यवर्णनानि तात्कालिकीं व्यवस्थितां भौगोलिकसंस्थितिं ज्ञापयन्ति।

---

१ आशैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासारशीतात्
तीरान्तान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य।
आगत्याऽऽगत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूड़ारत्नांशुगर्भास्तव चरणयुगस्याऽङ्गुलीरन्ध्रभागाः।।
मुद्राराक्षस ३.१९

प्राचीनसंस्कृतपुस्तकानि, विशेषतः सस्कृतरूपकाणि बोधयन्ति सुस्पष्टं यदार्यसभ्यतायाः प्रचारः प्रसारश्च न केवलं भारतचर्षे बभूव, विदेशीया अपि जनपदाः भारतीयसंस्कृतिप्रभावक्षेत्रान्तर्गता अभूवन् । राजनीतिकप्रभावश्चाऽपि पराक्रमशालिनां भारतीयवीरपुरुषाणां प्रासरत् । भारतीयवणिजां पोताः सार्थाश्च सकलविश्वमालोडयामासुः ।

समयेऽस्मिन् भरतखण्डस्य सीमानो ह्युत्तरपश्चिमदिशि हिन्दूकुशगिरिमुल्लंघ्य वर्तमानकालीनाफगानिस्तानदेशोत्तर-भूमिभागपर्यन्तं सुविस्तृता आसन् । परं समये व्यतीते क्रमशो भारतवर्षस्य पश्चिमोत्तरसीमानो निरन्तरं सङ्कोचमवापुः । बाह्याक्रमणकारिणो, विशेषतो मोहम्मदीयाः पश्चिमदिशो भारतवर्षं प्राविशन्, देशं चैनमाक्रम्य पददलितं विधाय आर्याणां धर्मं सभ्यतां संस्कृतिञ्च विनाशयामासुः । महतो दुःखस्य चेयं वार्ता, यत् सप्तचत्वारिंशदुत्तरैकोनविंशतिसहस्रतमेऽब्दे (१९४७)भारतवर्षस्य विभाजनोत्तरं भारतीयदिक्सीमान इरावतीनद्योऽपि पूर्ववर्तिनः समभूवन् । न केवलं पश्चिमोत्तरदिश्येव भारतीयसीम्नां सङ्कोचो जातः, पूर्वदिश्यपि भारतदेशस्य विशालो भूखण्डो वैदेशिकः संवृत्तः ।

एवञ्च भारतवर्षस्य विशालाः भूखण्डाः पूर्वदिशि पश्चिमदिशि च विदेशीयाः सञ्जाताः । ते च भूखण्डाः न केवलं राजनीतिकप्रशासन-दृष्ट्यैव विशालभारतदेशात् पृथग्भूताः, तेषु प्रदेशेष्वार्यधर्म-संस्कृतिसभ्यतादीनामपि तत्त्वानां समग्ररूपेण विलोपः सञ्जातः ।

भारतीयशिक्षायाः प्रसिद्धं विद्याकेन्द्रं तक्षशिलाविश्वविद्यालयो, यत्र सकलविश्वदेशेभ्यो विद्यार्थिनः समागत्य स्वं स्वं चरित्रमग्रजन्मभ्यो गुरुभ्य आचार्येभ्यः शिक्षन्ते स्म, न नाममात्रमपि क्वचिदवशिष्टो लभ्यते । वर्तमानसमये स्वल्पावशिष्टभारतीयसीमास्वपि प्राचीनार्य-संस्कृतिसभ्यताधर्मादीनां ह्रासो नैरन्तर्येण सुस्पष्टं लक्ष्यते । इतिहास-प्रसिद्धेयं किम्वदन्ती, यन्नैषधीयचरितमहाकाव्यस्य रचयिता श्रीहर्षः

श्रेष्ठत्वं स्वमहाकाव्यस्य प्रमाणयितुं काश्मीरजनपदस्य राजधानी-मनन्तपुरीं (वर्तमानसमयेऽनन्तनागम्) जगाम। काश्मीरजेन महाकविना बिह्लणेन विक्रमाङ्कदेवचरितमहाकाव्ये लिखितम् - काश्मीरदेश एव सरस्वत्याः महादेव्याः निवासः। नाऽन्यत्र तादृशीनां कवितानां प्ररोहः संलक्ष्यते।[१]

प्राचीनसंकृतसाहित्यमाश्रित्य प्राचीनभारतीयभौगोलिकस्थितिं प्रस्तोतुं प्रकाशयितुञ्चाऽनेके प्रयासाः विद्वद्भिः समीक्षकैर्विहिताः। तत्र संस्कृतनाटकानामपि महती उपयोगिता निश्चयेन वर्तते, न च तथा विदुषां प्रयासः संलक्ष्यते। नाटकेभ्यो यथा लोकजीवन-सत्यमभिव्यज्यते, न तथा साहित्यस्याऽन्याः विधाः प्रकटयन्ति। अतोऽत्र प्रतिबिम्बिततथ्यानि सुस्पष्टत्वादधिकसत्यनिष्ठत्वाच्च सहृदयहृदयग्राह्यानि सामान्यतो भवन्ति। समुपस्थितास्वपि कासुचित् कल्पनासु यथार्थसत्यं, विशेषरूपेण भौगोलिकसत्यस्थितिर्यथार्थरूपेण निश्चेतुं शक्यते। अतो रूपकाणां माध्यमेन भौगोलिकस्थितिज्ञानं महतीमुपयोगितां धत्ते, भावोद्दीपकञ्च वर्तते।

बहुव्यापाको ऽयं भूगोलविषयः सुविशालस्य भारतदेशस्य विभिन्न-प्रदेशानां जलवाय्वादिविभिन्नपारिस्थितिकीनां निवासव्यवहाराणां कृषिखनिजोद्योगव्यवसायादीनां विवरणानि भूगोलविषयान्तर्गतानि संदृश्यन्ते। तथापि तेषां विवरणानां विस्तृतप्रस्तुतिर्महान्तं प्रयासमपेक्षते। परन्त्वध्ययनमस्माकमिदं सीमितमेव। अत्र केवलं प्राचीनसंस्कृत-रूपकान्त र्गतानामेव विशेषतो भौगोलिकस्थानानां सङ्केतो लेखकेन विधीयते। अथ चाऽऽधुनिकसमयनामभिस्तेषां परिचयोऽपि सम्बध्यते।



---

१ सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः।।
विक्रमाङ्कदेवचरितम् १.२१।।

विविधविषयसंकुला विस्तीर्णा च वर्तते। अतः प्रबन्धेऽस्मिन् तेषामनेक-वर्गविभाजितानां प्रस्तुतिः सप्तस्वध्यायेषु विधीयते।

प्रबन्धेऽस्मिन् प्रथमेऽध्याये ब्रह्माण्डस्य पृथिव्याः भारतवर्षस्य च भौगोलिकविभाजनं निर्दिष्टम्। द्वितीयेऽध्याये वनपर्वतसमुद्राणां परिचयो विद्यते। तृतीयेऽध्याये सरितां सरित्सङ्गमानाञ्च विवरणानि सन्ति। चतुर्थेऽध्याये प्राचीनभारतीयजनपदानां स्थितिः समादिष्टा। पञ्चमेऽध्याये भारतवर्षस्य जातीयराज्यानां जनपदानाञ्च वर्णनानि सन्ति। षष्ठेऽध्याये भारतीयनगराणां ग्रामाणाञ्च परिचयो विद्यते। सप्तमे चाऽध्याये तीर्थानां भारतीयर्षीणामाश्रमाणाञ्च विवरणानि सन्ति। प्रबन्धसमाप्तिश्च द्वाभ्यां परिशिष्टाभ्यां परिपूरिता। प्रथमे परिशिष्टे समीक्षितरूपकाणां परिचयो वर्तते द्वितीये च सन्दर्भग्रन्थसूची निर्दिष्टा। प्रबन्धेऽस्मिन् द्वे मानचित्रे वनपर्वतसरित्सङ्गमजनपदनगरतीर्थाश्रमादीनां स्थितिं स्पष्टीकुरुतः।

प्राचीनसंस्कृतसाहित्यं समाश्रित्य विशेषतो नाटकान्याश्रित्य प्राचीनभारतस्य भौगोलिकस्थितीनामध्ययनमिदं ज्ञानपिपासुभ्यो विद्यार्थिभ्यः साधारणजनेभ्यश्च रुचिकरं सन्महतीमुपयोगितां धत्ते। अध्ययनमिदं भारतदेशस्य गौरवमयीनां परम्पराणां प्रकाशकमस्ति। एवञ्चाऽयं प्रबन्धो भारतीयजनानां हृत्सु मनस्सु च स्वदेशं प्रति गौरवश्रद्धात्मविश्वासादीनां भावनानां जागरणे समुल्लासे च समर्थः।

**रामनवमी** **विदुषां वशंवदः**
**वैशाखसुदी नवमी २०५९** **कृष्णकुमारः**
**२१ अप्रैल २००२**

# विषय-सूची

# प्रथमोऽध्यायः

## विषय-प्रवेशः

१. **रूपकेषु भौगोलिकस्थितिज्ञानस्य विवेचनम्**

२. **ब्रह्माण्डस्य पृथिव्याश्च भौगोलिकविभाजनम्**

(क) सप्त समुद्राः

(ख) दश दिशः

(ग) सप्तकुलपर्वताः

(घ) चतुर्दश लोकाः

(ङ) वायुमण्डलम्

(च) नभोमण्डलम्

(छ) पृथिवीलोकः

३. **भारतवर्षस्य भौगोलिकविभाजनम्**

# प्रथमोऽध्यायः

## विषय-प्रवेशः

प्राचीनभारतीयां संस्कृतिमिहासञ्चाऽध्येतुं देशस्याऽस्य भौगोलिक-परिवेशविज्ञानमनिवार्यमेवाऽवगन्तव्यम्। भौगोलिकपरिवेश-स्तत्तत्प्रदेशनिवासिनो विविधपरिस्थितींश्च नियतं प्रभावयति। प्राचीनभौगोलिकपरिस्थितयस्तत्कालीनसाहित्यमधीत्य विज्ञातुं शाक्यते। रूपकाण्यपि ज्ञानस्याऽस्य विशेषेण स्रोतांसि सन्ति। अतः प्राचीनसंस्कृत-रूपकाण्याश्रित्य तत्कालीनभौगोलिकस्थितीनामध्ययनं रुचिकरं वर्तति महतीमुपयोगितां च दधाति।

### १. प्राचीनसंस्कृतरूपकेषु भौगोलिकस्थितिज्ञानस्य विवेचनम्-

प्राचीनसंस्कृतरूपकाणि भारतवर्षस्य प्राचीनभौगोलिक-परिवेशपरिचयप्रदाने प्राचुर्येण नियतं सक्षमाणि सन्ति। ज्ञानस्याऽस्या-ऽधिगमने स्पष्टरूपेण न पर्याप्तानि प्रमाणानि सन्ति। अतः स्पष्टीभवनाभावात् काठिन्यमपि कदाचिदनुभूयते संशयाश्च समुत्पद्यन्ते। प्रमुखहेतुश्चाऽत्र पौराणिकपरम्परासु विश्वासः कवीनाञ्च कल्पनासु निमज्जनमुड्डयनञ्च। उदाहरणान्यत्र वर्तन्ते -

मुरारिकृतानर्घराघवनाटके भौगोलिकवर्णनानि। कविना तेन हिमवत्प्रभवस्रोतःप्रपातवर्णनानि दक्षिणसमुद्रे प्रदर्शितानि। अथ च दीप्तिमदौषधिसम्भृतगिरिखण्डैर्दक्षिणसमुद्रे सेतुनिर्माणप्रक्रियाऽपि तेन वर्णिता[१]। हिमगिरिप्रभवजलस्रोतांसि सरितश्च पूर्वसमुद्रे पश्चिमसमुद्रे वा विलीयन्ते, दीप्तिमदौषधीनाञ्च प्रभवस्थानं वर्तति भारतवर्षोत्तर-

दिग्वर्ती हिमालयो नाम नगाधिराजः।

प्राचीनरूपकेषु पारम्परिकपौराणिकवर्णनान्येतानि यत्र तत्र रूपकाणामेतेषां भौगोलिकसंस्थितीनां याथार्थ्यस्याऽवगमने कठिन्यमवरोधं सन्देहञ्चोत्पादयन्ति। अथ च यथा अनर्घराघवे नाटके मुरारिकविना निर्दिष्टम् -

रामस्य पुष्पकविमानं लङ्कातः प्रस्थितं व्योम्न्युत्पतन् प्रथमं हिमगिरिं सम्प्राप्तम्। ततो विमानमिदं मन्दराचले कैलासशिखरेषु च परिभ्रमत् मेरुगिरिं ययौ। पर्वतस्याऽस्योपत्यकासु चन्दनपादपाः वर्तन्ते। तस्माद् भूधरादिदं पुष्पकं नाम विमानं चन्द्रलोकं निकषा गत्वा पुनस्ततोऽप्यवतीर्य समुद्रतटवर्तिभूमिभागं सम्प्राप्याऽगस्त्यमुनेराश्रमपदमध्यगच्छत्। ततश्चाऽनेन विमानेन पुनरप्युत्तरदिशि प्रस्थितम्[२]।

नाट्यकर्तृभिर्भारतवर्षस्य सीमानो न स्पष्टरूपेण निर्दिष्टाः। राष्ट्रमिदं ते कवयः जम्बूद्वीपार्यावर्तान्तर्वेदिभारतवर्षादिनामभिरभिदधति। अभिधानानामेतेषां याथार्थ्यं विस्तरेण सम्यक् समीक्षमाणा अपि समीक्षकाः न तेषां वैज्ञानिकसंस्थितिमसन्दिग्धरूपेण निर्दिदिशुः। सिंहलद्वीपस्य लंकाद्वीपस्य च स्थितेर्भिन्नत्वमेकत्वं वाऽद्याऽपि विवादास्पदं वर्तते। अभिधाने द्वे अप्येते द्वीपमेकमेव निर्दिशतो भिन्ने वा द्वीपे, इत्यपि न निश्चयेन वक्तुं शक्यते। रूपकाणामेतेषां वर्णनेषु परस्परविरुद्धत्वमप्यवलोक्यते। यथा - हनूमन्नाटके क्वचित् सप्त कुलपर्वताः प्रोक्ताः[३] क्वचिच्च ह्यष्टकुलपर्वताः सङ्केतिताः[४]।

अस्पष्टतासु सन्देहास्पदतासु चैतासु सतीष्वपि प्राचीनसंस्कृतरूपकेभ्योऽधिगतं भौगोलिकज्ञानं महन्महत्त्वमापादयति। अथ चेदमध्ययनं तद्युगीनस्थानाभिधानविषये महनीयं महत्त्वपूर्णं परिचयमभिव्यनक्ति।

प्राचीनसंस्कृतनाटकेभ्यः समुपलब्धानां भौगोलिकसंस्थितीनां

विभाजनं वर्णनसौकर्यहेतुना निम्नविधिना प्रस्तोतुं शक्यते -

(१) ब्रह्माण्डस्य पृथिव्याश्च भारतवर्षस्य च भौगोलिक-विभाजनम्।
(२) भारतवर्षस्य पर्वताः वनानि सरांसि समुद्राश्च।
(३) सरितःसरिताञ्च सङ्गमाः
(४) प्राचीनभारतीयजनपदाः
(५) जातीयराज्यानि विदेशीयाश्च जनपदाः
(६) नगराणि ग्रामाश्च
(७) तीर्था ऋषीणामाश्रमाश्च

प्रस्तुतेऽस्मिन् भौगोलिकविवेचने सर्वेषामेव स्थानानां वर्तमानकालसन्दर्भेणाऽभिज्ञानकरणं परममावश्यकं वर्तते। सप्तसु विभागेषु विभक्तानां भारतीयस्थानानां रूपकमाध्ययेन समीक्षणमस्मिन् पुस्तके क्रमशो विधीयते।

## २. ब्रह्माण्डस्य पृथिव्याश्च भौगोलिकविभाजनम् -

प्राचीनपौराणिकपरम्पराणामनुसरणं कुर्वद्भिः संस्कृतनाट्य-कर्तृभिर्ब्रह्माण्डस्य भौगोलिकविभाजनं निम्नविधिना विहितम् -

ब्रह्माण्डेऽस्मिन् सप्तसमुद्राः दश दिशः, सप्त कुलपर्वताः, पृथिवी, चतुर्दश भुवनानि, वायुमण्डलं, नक्षत्रमण्डलञ्चेति वर्तन्ते[५]। तेषां निरूपणमत्र क्रमशः क्रियते -

### (क) सप्त समुद्राः -

राजशेखरेण काव्यमीमांसायां सप्त समुद्राः निम्नप्रकारेण परिगणिताः -

लावणो रसमयः सुरोदकः सार्पिषो दधिजलः पयःपयः स्वादुवीरि-रुदधिश्च सप्तमस्तान् परीत्य त इमे व्यवस्थिताः[६]।

बालरामायणनाटकेऽपि राजशेखरः सप्तसमुद्रानवर्णयत् -

लवणेक्षुरससुरासर्पिर्दधिदुग्धजलाः सप्त समुद्राःवर्तन्ते[७]।

समुद्रसंख्याविषये राजशेखरोऽन्येषामप्याचार्याणां मतानि प्रास्तौत्। केचनाऽऽचार्या: केवलमेकं लवणमेव समुद्रमामनन्ति[८]। अन्य आचार्यास्त्रीन् समुद्रानन्ये[९] चतुरो[१०]ऽपरे च सप्त समुद्रान्[११] कथयन्ति। हनूमन्नाटके सप्त समुद्राणां गणना विद्यते[१२]। कुलशेखरवर्मणा सकला भूरियं सप्तसमुद्रा प्रोक्ता[१३]।

**(ख) दश दिश: -**

दिशां संख्या वर्तते दश। अत्र पूर्वपश्चिमोत्तरदक्षिणाश्चतस्र: प्रधाना: दिशो वर्तन्ते। आग्नेयनैऋत्यवायव्येशानाश्चत्वारो वर्तन्ते दिशां कोणा:। अधश्चोपरिष्टाच्चाऽपि वर्तेते द्वे दिशौ। राजशेखरेणेत्थं दश दिशो वर्णिता:[१४]।

**(ग) सप्त कुलपर्वता: -**

ब्रह्माण्डस्य पृथिव्याश्च विभाजनप्रसङ्गे सप्तकुलपर्वतानामुल्लेखो विद्यते। ते धरां धारयन्ति[१५]। कुलपर्वतानामेतेषां नामानि सन्ति- विन्ध्यपरियात्रशुक्तिमदृक्षमहेन्द्रसह्यमलया:[१६]। हनूमन्नाटके कविनैकस्मिन् प्रसङ्गे ह्यष्टकुलपर्वतानां वर्णनं कृतम्।

कविनैते दिगद्रय: प्रोक्ता:। एतेषां नामानि सन्ति -

विजयकुमुदनीलनिषधहिमवज्जयन्तकालविषमवाहीका:[१७]।

**(घ) चतुर्दश लोका:-**

लोकानां संख्या चतुर्दश विद्यते। साहित्ये सामान्यतस्त्रयो लोका: प्रसिद्धा:- भूलोकस्वर्गलोकपाताललोका:। परं चतुर्दशलोकानां भुवनानामपि विशदं विवरणमुपलभ्यते। अत्र सप्तलोका:- भूर्भुव:स्वोमहोजनस्तप:सत्यमिति ह्युपर्युपरि वर्तन्ते। सत्यलोको ब्रह्मलोक इत्यपि कथ्यते। अन्ये सप्त लोका: - अतलवितलसुतलरसातल- तलातलमहातलपाताललोका: पृथिव्या अधोऽधो वर्तन्ते। पृथिव्या अध: स्थिता: लोका: सामान्यत: पातालपदेनाऽपि लोके प्रसिद्धा:। पृथिव्या अधो वर्तमानानां लोकानां यात्रा तत्र च स्थितिरतिकठिना

दुष्करा चाऽविद्यत। परं वीराः मनस्विनश्च जनास्तेषां लोकानां यात्रामकुर्वन्नेव[१८]।

लोकानामेतेषां कल्पनाऽन्येन प्रकारेणाऽपि विद्यते- सुरलोकमनुजलोकपाताललोकाः[१९]। अत्र सुरलोको वर्तते स्वर्गलोको, मनुजलोको विद्यते पृथिवी, असुरलोकश्चाऽस्ति पाताललोकः।

**(ङ) वायुमण्डलम् -**

धरेयं परितो वायुमण्डलेनाऽऽवृता वर्तते। वायुमण्डलस्य सप्त आवरणानि सन्ति - आवहप्रवहोद्वहसंवहसुवहपरिवहपरावहाः[२०]। स्वर्गपृथिव्योर्मध्यान्तराले सप्तानामेतेषामावरणभूतानां वायूनां स्थितिरस्ति। राजशेखरेणैतान्यावरणानि सप्तस्कन्धाः मार्गाः वा वायोः प्रोक्ताः। एतेषां गणना पृथिवीलोकात् स्वर्गलोकपर्यन्तं क्रियते। पृथिवीलोकसंलग्नं वायुमण्डलं प्रथमो वायुस्कन्धो विद्यते, स्वर्गलोकसलंग्नञ्च वायुमण्डलं सप्तमो वायुस्कन्धः[२१]। कालिदासेनाऽन्तरिक्षे विद्यमानस्य परिवहाभिधानस्य वायुमार्गस्योल्लेखः कृतः[२२]। अयं वायुमार्गः पृथिव्याः षष्ठो वर्तते।

**(च) नभोमण्डलम् (नक्षत्रमण्डलम्) -**

पृथिव्या उपरि स्थितानां नक्षत्राणां गणना तेषामनन्तत्वान्न कर्तुं सम्भवा। अतस्तानि सर्वाणि एकमेव नभोमण्डलमिति विचारणीयानि।

**(छ) पृथिवीलोकः -**

मानवजातिवसतिः पृथिवीलोकः (भूः) इत्युच्यते। चतुर्दशसु लोकेषु पृथिवीलोकोऽयमेकतमः। अत्राऽष्टादशद्वीपानामवस्थितिरस्ति[२३]। पृथिव्याः विभाजनं सप्तसु महाद्वीपेष्वपि प्राचीनैर्महामुनिभिः प्रदर्शितम्[२४]। ते च द्वीपाः सन्ति - जम्बूद्वीपः प्लक्षद्वीपः शाल्मलिद्वीपः कुशद्वीपः क्रौञ्चद्वीपः शाकद्वीपः पुष्करद्वीपश्च[२५]। केषुचित् स्थानेषु पृथिव्यां नव द्वीपाः[२६] कुत्रचिच्च त्रयोदशद्वीपाः[२७] कुत्रचिच्चाष्टादश

द्वीपा: प्राचीनकविभि: प्रोक्ता: । वर्तमानसमये द्वीपानामेतेषामभिज्ञानं स्थितिर्वा न निश्चयेन निर्णेतुं शक्यते ।

पुराणेषु मुख्यतस्त्रय एव लोका: निगदिता: - स्वर्गलोक:, पृथिवीलोक: पाताललोकश्च । पृथिवीलोकाऽयं मध्यमलोको वर्तते । कालिदासेन वर्णितम् - मध्यमलोकस्य पराक्रमिणां नरपतीनां साहाय्यं देवराजो महेन्द्रोऽप्यपेक्षते[२८]

## ३. भारतवर्षस्य भौगोलिकविभाजनम् -

संस्कृतरूपकेषु भारतवर्षस्य भौगोलिकविभाजनं विशदरूपेण संलक्ष्यते । अथ चाऽस्य देशस्य विभिन्नभागानां विवरणानि समुपलभ्यन्ते[२९] । उज्जयिनी नगरी जम्बूद्वीपस्य तिलकमिति पादताडितकरूपके रूपककारेण श्यामिलकेन सूचितम् । गुप्तवंशीयैर्नरपतिभिर्नगरीयं गुप्तसाम्राज्यस्य द्वितीया राजधानी सुनिश्चिता । इतिहासविद: प्रमाणयन्ति यद् गुप्तसाम्राज्यस्य सीमानो गान्धारजनपदादारभ्य कामरूपपर्यन्तमथ च त्रिविष्टपादारभ्य केरलजनपदपर्यन्तं सुविस्तृता आसन् । एवं जम्बूद्वीपो भारतवर्षश्चेति द्वे पदे समानार्थके अवगन्तव्ये ।

बौद्धसाहित्ये जम्बूद्वीप एव भारतवर्ष: सूच्यते । साहित्यकारा: कवयोऽस्य द्वीपस्य कल्याणं समृद्धिञ्च कामयन्ते[३०] । परं राजशेखरेण भारतवर्षो जम्बूद्वीपश्चेति पदे न समानार्थके मते । तेनोद्घाटितं यद् भारतवर्ष: सुविस्तृतस्य जम्बूद्वीपस्यैवैक: खण्डोऽवर्तत । मेरुपर्वतोऽन्ये च त्रयो वर्षा: जम्बूद्वीपान्तर्गता अवर्तन्त । त्रयो वर्षा आसन् - हरिवर्षकिम्पुरुषवर्षभारतवर्षा: । अत्र भारतवर्षो मेरुपर्वताद् दक्षिणदिशि वर्तते[३१] । राजशेखर: सम्भवतो ह्येशियामहाद्वीपमेव जम्बूद्वीपं जगाद ।

संस्कृतकवयो भारतवर्षमुत्तरदिशि हिमालयादारभ्य दक्षिणदिशि दक्षिणसमुद्रपर्यन्तं सुविस्तीर्णसीमानमाहु: । उत्तरस्यां हिमालयो नाम नगाधिराज: पूर्वसमुद्रात् पश्चिमसमुद्रपर्यन्तं विस्तृत: पृथिव्या: मानदण्ड

इव प्रतीयमानो भारतवर्षं रक्षति[३२]।

सम्भवतो हिमवन्तं प्रति भारतीयजनानां कवीनाञ्चेयं भावना कालिदाससमये ह्येव लोके प्रसारं प्राप्ता। कालिदासस्तदुत्तरवर्तिनश्च कवयो दक्षिणसमुद्राद्धिमालयपर्यन्तं समग्रं भारतवर्षमेकशासनान्तर्गतमकामयन्त। परन्तु कालिदासपूर्ववर्ती भासो नाम महाकविर्नाट्यकर्ता हिमवद्विन्ध्यमध्यवर्तिनीमेव भारतभुवं तथा कामयते। "द्वयोः समुद्रयोर्मध्यगतां हिमवद्विन्ध्यमध्यवर्तिनीं भूमिं राजसिंहः प्रशास्तु" प्ररोचनेति तस्य रूपकेष्ववलोक्यते। पर्वतयुगलमिदं पृथिव्याः कुण्डलयुगलं वर्तते।[३३]

भासोत्तरकवीनां दृष्टयोऽधिकविशालतामध्यगच्छन्। विन्ध्यदक्षिणभुवमपि भारतीयसीमासु सम्मिलितामवलोकयितुं तेऽकामयन्त। समग्र एवाऽयं भूभाग एकस्यैव चक्रवर्तिनः सम्राजः शासनान्तर्गतो भूयादिति तैराशंसा प्रस्तुता। चन्द्रगुप्तस्य गुरुर्महामन्त्री च चाणक्यः स्वशिष्यायाऽऽशीर्वचांसि व्यतारीद् यदाहिमालयाद् दक्षिणसमुद्रपर्यन्तं स्थितेभ्यो जनपदेभ्य आगत्याऽऽगत्य राजानस्तव चरणेषु प्रणमन्तु[३४]। कालिदासेन भारतवर्षस्य तथैव सीमाः प्रतिपादिताः। सागरजलस्पर्शपवित्रीकृताः सीमा एताः भारतीयां भुवं परिवारयन्ति। सकला चेयं धरित्री ह्येकशासनान्तर्गता भवेदिति[३५]। चक्रवर्तिनां सम्राजामेतदेव कर्तव्यं यत्ते लक्ष्यमिदं प्राप्नुयुः। एतत्सीमापर्यन्तं स्वसाम्राज्यं ते विस्तारयन्तु।

कालिदासस्य काव्यानि भारतीयमानचित्रं त्रिषु भागेषु विभक्तं प्रदर्शयन्ति -

(१) हिमालयस्य विशालाः पर्वतश्रेणयः।

(२) सिन्धु-गङ्गा-ब्रह्मपुत्रादिसरिद्भिर्निर्मिता सिञ्चिता च मध्यवर्तिनी चोर्वरा भूमिः।

(३) भारतीयोपमहाद्वीपस्य सुविस्तृता दक्षिणदिग्वर्तिनी

प्रस्तारभूमि:।

संस्कृतनाटकेषु समुपस्थितानि जनपदानां राज्यानाञ्च विवरणानि प्रमाणयन्ति, यदयं महान् विशालो भारतवर्ष: पूर्वदिशि ह्याकामरूपबङ्गादिजनपदेभ्य: पश्चिमदिशि कुभासरित्पर्यन्तम् (काबुलपर्यन्तम्), उत्तरस्यामाहिमवतो दक्षिणदिशि सिंहलद्वीपपर्यन्तं विस्तृतोऽवर्तत। मुरारीकविना नाटकेऽनर्घराघवे वर्णितम् -

रामस्य व्योमयानं लङ्कायां सुवेलपपर्वतादुड्डीय[३६] समुद्रमुत्तीर्य कैलासपर्वतमधिरोहति[३७]।

चतुर्भाणीति भाणसङ्ग्रहे प्रदेशानामनेकेषां जनपदानाञ्च वर्णनानि विद्यन्ते। तानि वर्णनानि भारतीयसीमानो यत्किञ्चिदभि-व्यञ्जयन्ति। सर्वेभ्योऽपि प्रदेशेभ्यो जनपदेभ्यश्च समागत्य समागत्य जना उज्जयिन्यां निवासाय स्पृहयन्ति। उज्जयिनी भारतराष्ट्रस्य केन्द्रभूता राजधानी ह्यवर्तत। अत: स्पृहैषा जनानां स्वाभाविकी। अत्रोज्जयिन्यामपरान्त[३८]- सह्याद्रिपश्चिमसमुद्रतटगतभूमिभागेभ्य: केरल[३९]सिंहल[४०] कलिङ्गबङ्ग[४१] मलद[४२] प्रदेशेभ्यो गान्धार[४३] पारसीकजनपदेभ्यो मध्यवर्तिजनपदेभ्यश्च समागत्य जना उज्जयिन्यां निवसन्ति स्म। वर्णनैरेभिर्भारतवर्षस्य सीमान: कल्पयितुं शक्यन्ते।

विष्णुपुराणे हिमालयदक्षिणवर्ती समुद्रोत्तरवर्ती च भूभागो भारतवर्ष: प्रोक्त:[४४]।

प्राचीनसंस्कृतकवीनां नाट्यकर्तृणाञ्च वर्णनेषु भारतवर्षस्य द्वौ मुख्यौ विभागौ प्रोक्तौ - उत्तरापथो दक्षिणापयश्च[४५]। तयोर्विभाजको वर्तते - विन्ध्यगिरि:। एवमस्य देशस्य त्रयो विभागा अवर्तन्त - उत्तरापथो दक्षिणापथो विन्ध्यभूमिश्च।

### (i) उत्तरापथ: -

भारतवर्षस्योत्तरीयो भूभागो ह्युत्तरापथो वर्तते। आर्या-

वर्तश्चाऽप्ययमुच्यते। राजशेखरेणाऽयमार्यावर्तः प्रोक्तः। अतो दक्षिणतो दक्षिणदेशः प्रारभते[४६]। प्राचीनसाहित्ये पूर्वपश्चिमसमुद्रयोर्हिमवद्विन्ध्यपर्वतयोश्च मध्यवर्ती भूभाग आर्यावर्तः प्रोक्तः[४७]। बौधायनधर्मसूत्रे गङ्गायमुनयोर्मध्यवर्ती प्रदेशो ह्यार्यावर्तो विद्यते[४८]।

उत्तरापथान्तगर्ता वर्तते चाऽप्यन्तर्वेदी। राजशेखरेण प्रदेशोऽयमुल्लिखितः[४९]। सांस्कृतिकरूपेण श्रेष्ठोऽयं प्रदेशः पश्चिमदिशि विनशनप्रदेशादारभ्य ( सरस्वतीसरितो विलुप्तिस्थानम् ) पूर्वदिशि प्रयागपर्यन्तं गंगायमुनयोर्मध्यवर्ती भूभागोऽन्तर्वेदीति ज्ञायते[५०]। मुरारिकविना वर्णनं कृतं यदन्तर्वेद्यां कृष्णवर्णा यमुना श्वेतवर्णायां भागीरथ्यां विलीयते[५१]।

**(ii) दक्षिणापथः -**

भारतवर्षस्य दाक्षिणात्यो भूभागो दक्षिणापथः प्रोक्तः। आर्यावर्ताद् दक्षिणदिग्वर्त्ययं प्रदेशः[५२]। आर्यावर्तस्य दक्षिणायां विन्ध्यगिरिस्तदनन्तरञ्च दक्षिणापथः। भासोऽवर्णयत् - सुग्रीवेण सीताया अन्वेषणायाऽङ्गदो दक्षिणापथे प्रहितः[५३]। दक्षिणापथनरपतेर्दुहिता विभ्रमलेखा राज्ञा चन्द्रपालेन सह विवाहितेति राजशेखरेण लिखितम्[५४]। दक्षिणापथनिवासिनो दाक्षिणात्याः कथ्यन्ते स्म[५५]।

**(iii) विन्ध्यभूमिः-**

आर्यावर्तदक्षिणापथमध्यवर्तिप्रदेशस्तयोर्विभाजनकारी विन्ध्यदेश इति प्रसिद्धोऽवर्तत। विन्ध्यगिरिभूमिरियं विन्ध्यभूमिनाम्ना प्रथिता बभूव। अत्र ह्याटविकानां प्रशासनमासीत्[५६]।

भारतवर्षस्य भौगोलिकविभाजनमन्येन प्रकारेणाऽपि प्राचीनाचार्यैः प्रदर्शितम्। वराहमिहिरेणाऽस्य नवखण्डाः प्रोक्ताः[५७]- मध्यः, पूर्वो, दक्षिणपूर्वो, दक्षिणो, दक्षिणपश्चिमः, पश्चिम, उत्तरपश्चिम, उत्तरपूर्व, उत्तरश्च। अत्र विभिन्नखण्डानां प्रमुखाः जनपदाः विद्यन्ते -

मध्यखण्डस्य पञ्चालाः, पूर्वखण्डस्य मगधाः, दक्षिणपूर्वखण्डस्य

कलिङ्गाः, दक्षिणखण्डस्य आवन्ताः, दक्षिणपश्चिमखण्डस्य आनर्ताः, पश्चिमखण्डस्य सिन्धुसौवीराः, उत्तरपश्चिमखण्डस्य हरदौराः उत्तरपूर्वखण्डस्य च कौणिन्दाः उत्तरखण्डस्य मद्राः ।

भारतवर्षस्य नवखण्डानां वर्णनान्यन्येषु ग्रन्थेष्वन्येन प्रकारेणाऽपि समुपलभ्यन्ते । महाभारते पुराणेषु च नव खण्डा अनेन प्रकारेण सन्ति - इन्द्रः, कसेरुमान्, ताम्रपर्णी, गभस्तिमान्, कुमारिका, नागः, सौम्यो, वरुणो गन्धर्वश्च[५८] । भास्कराचार्येण खण्डानां विभाजनमेतत् स्वीकृतम्[५९] । नवखण्डानामुल्लेखो राजशेखरेणाऽपि विहितम्[६०] ।

प्राचीनविवरणान्यवलोक्य प्रतीयते, यद् भारतवर्षस्य नवखण्डेषु कुमारिकाखण्डः प्रमुखतमोऽविद्यत । वराहपुराणे भारतवर्षस्य नवखण्डाः नवद्वीपाश्च प्रोक्ताः । अस्मिन् पुराणे नवद्वीपानां नामानि सामान्यतः तान्येव सन्ति, परं कुमारिकाखण्डो भरतखण्डः प्रोक्तः[६१] ।

परं भारतवर्षस्येदं नवधा विभाजनं न लोकप्रियं बभूव । अधिकसंख्यकैर्विचारकैर्मनीषिभिश्चास्य देशस्य विभाजनं पञ्चसु भागेषु विहितम् - मध्यपूर्वदक्षिणपश्चिमोत्तराः ।

मध्यभागे कुरुपाञ्चाला, पूर्वभागे कामरूपासमाः, दक्षिणभागे पुण्ड्रकलिङ्गाः, पश्चिमभागे सुराष्ट्रसुराभीरार्बुदकारुषमालवसौवीर-सैन्धवाः उत्तरभागे च हूणशाल्वशाकलरामाम्बष्ठपारसीकाः प्रमुखाः जनपदा अवर्तन्त[६२] ।

अतिप्राचीनभारतीयसाहित्येऽपि भारतवर्षस्य विभाजनमेतेष्वेव पञ्चसु भागेषु ॠषिभिः कृतम् । परन्त्वेते विभागाः दिक्पदेन प्रोक्ताः । ऐतरेयब्राह्मणे भारतवर्षस्य विभाजनं पञ्चसु दिक्षु वर्तते - प्राची, दक्षिणा, प्रतीची, उदीची ध्रुवा च[६३] ।

अथर्ववेदे[६४] यजुर्वेदे[६५] चाऽपि विभाजनमिदमनेनैव प्रकारेण विद्यते । उत्तरवर्तिनि साहित्ये दिक्स्थाने दिशापदस्य प्रयोगो बभूव ।

काव्यामीमांसायां भारतराष्ट्रस्य विभाजनं पञ्चसु प्रमुखेषु खण्डेषु देशेषु वा राजशेखरेण कृतम् - पूर्वदक्षिणपश्चिमोत्तरमध्यखण्डाः। खण्डेष्वेतेषु जनपदानां गणना निम्नप्रकारेण वर्तते -

**(i) पूर्वदेशाः -**

वाराणास्याः पूर्वस्यां दिशि पूर्वदिशाः वर्तन्ते। ते च सन्ति - अङ्बङ्गकलिङ्गकोसलतोसलोत्कलमगधमुद्गरविदेहनेपालपुण्ड्र-प्राग्ज्योतिषताम्रलिप्तकमलदमल्लनर्तकसुह्मब्रह्मादयो जनपदाः[६६]।

**(ii) दक्षिणदेशाः ( दक्षिणापथः)**

माहिष्मत्याः दक्षिणतो दक्षिणदेशाः विद्यन्ते। ते च सन्ति - महाराष्ट्रमहिषकाश्मकविदर्भकुन्तलक्रथकैशिकसूर्पासककाञ्ची-केरलकावेरमुरलवानवासकसिंहलचोलदण्डकपाण्ड्यपल्लवगाङ्ग-नासिक्यकोंकणकोल्लगिरिवेल्लरादयो जनपदाः[६७]।

**(iii) पश्चिमदेशाः -**

देवसमपरतो पश्चिमदेशाः सन्ति। ते च विद्यन्ते - देवसम-सुराष्ट्रदाशेरकत्रणणभृगुकच्छीयानर्तार्बुदब्राह्मणबाह्यवनादयो जनपदाः[६८]।

**(iv) उत्तरदेशाः ( उत्तरापथः)-**

उत्तरस्यां दिशि जनपदाः वर्तन्ते - शककेकयवीवकाण-वाणायुजकाम्बोजबाह्लीकबाह्लवलिम्पाककुलूतकीरतंगणतुषार-तुरुष्कबर्बरहरहूरबहुहूकसहूडहंसमार्गरमठकरकण्ठादयः[६९]।

**(v) मध्यदेशा :-**

विनशन (कुरुक्षेत्र) प्रदेशात् पूर्वस्यां प्रयागाच्च प्रतीच्यां हिमवद्विन्ध्ययोर्मध्ये च सकलं क्षेत्रं मध्यदेश इत्युच्यते[७०]।

राजशेखरेण मध्यदेशस्य जनपदानां गणना न विहिता। तेषामतिप्रसिद्धत्वात् सम्भवतस्तेन तथाऽनुभूतम्। गरुडपुराणे मध्यदेशजनपदाः निम्नप्रकारेण वर्णिताः वर्तन्ते -

पञ्चालकुरुमत्स्ययौधेयपटच्चरकुन्तिशूरसेनाः[७१]। मनुनाऽपि मध्यदेशस्य सीमा एवं प्रोक्ताः -

उत्तरस्यां हिमालयादारभ्य दक्षिणायां विन्ध्यगिरिपर्यन्तं प्रतीच्यां विनशनादारभ्य प्राच्यां प्रयागपर्यन्तं विस्तृतो देशः मध्यदेशो विद्यते।[७२]

प्राचीनकाले भारतवर्षस्येदं पञ्चसु खण्डेषु विभाजनं चीनदेशीयाः विदुषोऽपि विदुः। सप्तमशताब्द्यां चीनदेशस्य थंगवंशीयनरपतीनामभिलेखेषु भारतवर्षस्य पञ्च खण्डाः वर्णिताः सन्ति - प्राच्यप्रतीच्योदीच्यदक्षिणमध्याः। एवञ्चैषो देशः पञ्चभारतमिति प्रोक्तः (**Five Indias**)[७३]। आधुनिकभूगोलविदोऽपि भारतभुवं पञ्चसु भागेषु विभजन्ति-

**(i) पूर्वभारतम् -**

अत्र बिहारबंगासमाः समीपस्थाश्च जनपदाः सम्मिलिताः सन्ति।

**(ii) पश्चिमभारतम् -**

अत्र सिन्धुपञ्जाबराजस्थानारब्यसागरतटवर्तिनश्च जनपदाः सम्मिलिताः गण्यन्ते।

**(iii) उत्तरभारतम् -**

अत्र अफगानिस्तानप्रदेशादारभ्य नेपालपर्यन्तं हिमालयतटवर्तिनो भूविभागाः सम्मिलिताः वर्तन्ते।

**(iv) दक्षिणभारतम् -**

नर्मदातो दक्षिणवर्तिनो जनपदाः दक्षिणभारतवर्तिनो वर्तन्ते।

**(v) मध्यभारतम् -**

हिमवद्विन्ध्ययोर्मध्यवर्तिनो जनपदाः मध्यभारते गण्यन्ते।

भारतवर्षस्येदं पञ्चसु भागेषु विभाजनं प्रायशः सर्वैरेव विद्वद्भिर्मनीषिभिः स्वीकृतम्। चीनदेशवास्तव्यो तीर्थयात्री हवेन्त्सांगमहोदयः स्वयात्राविवरणेषु भारतवर्षस्य भौगोलिकस्थितिमनेनैव रूपेण प्रास्तौत् तथैव चाऽसौ स्वकीययात्रामायुयोज[७४]।

## संदर्भ ग्रंथ


१. अनर्घराघव सप्तम अंक

२. हनूमन्नाटकम् सप्तम अंक

३. हनूमन्नाटकम् १३.१२

४. वही १.२६

५. सप्ताम्भोनिधयो दशैव च दिशः सप्तैव गोत्राचलाः।
पृथ्व्यादीनि चतुर्दशैव भुवनान्येकं नभोमण्डलम्।।
एतावत्परिमाणमात्रकटके ब्रह्माण्डभाण्डोदरे।।
हनूमन्नाटक १३.१२

६. काव्यमीमांसा ९१.१-२

७. बालरामायण पृ० ४५१

८. काव्यामीमांसा ९१.३।।

९. वही ९१.८।।

१०. वही ९१.१७-१८।।

११. वही ९१.२०-२१।।

१२. हनूमन्नाटक १.३२।।

१३. सुभद्राधनञ्जय पृ० १५०।।

१४. विद्धसालभञ्जिका ३.१।।

१५. आश्चर्यचूडामणि पृ० २२१

१६(क) विन्ध्यश्च पारियात्रश्च शुक्तिमानृक्षपर्वतः।
महेन्द्रसह्यमलयाः सप्तैते कुलपर्वताः।। काव्यमीमांसा ९२.१६-१७

(ख) महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः।।
मार्कण्डेयपुराणम् ५७. १०-११

१७. हनूमन्नाटकम् १.३२।।

१८. यदि व्रजसि पातालम् ।। मृच्छकटिक २.३।।

१९. सुभद्राधनञ्जय पृ० ९।।

२०. भूवायुरावह इह प्रवहस्तदूर्ध्वं
स्यादुद्वहस्तदनु संवहसंज्ञकश्च।
अन्यस्ततोऽपि सुवहः परिपूर्वको स्याद्
बाह्यः परावह इमे पवनाः प्रसिद्धाः।। सिद्धान्तशिरोमणि

२१. बालरामायण पृ० २०५

२२. अभिज्ञानशाकुन्तलम् ७.६

२३. काव्यमीमांसा ९१.४-७, नैषधीयचरितम् १.१८

२४. काव्यमीमांसा ९०.१३-१४,
सप्तद्वीपवती मही।। ब्रह्माण्डपुराण ३७.१३

२५. विष्णुपुराण २.२.५

२६. पद्मपुराण स्वर्गखण्ड ७.२६

२७. पद्मपुराण आदिखण्ड ७४.१९

२८. उपस्थितसम्परायो महेन्द्रोऽपि मध्यमलोकात्
सबहुमानमाहूय। विक्रमोर्वशीयम् पृ० १५७

२९. पादताडितक पृ० १६९

३०. अयं जम्बूद्वीपो इद्धो चैव भविस्सदि फीतो च।
कुक्कुटसम्पादिता गामनिगमराजधानीयो।।
दिघनिकाय भाग ३ पृ० ५९

३१. काव्यमीमांसा ९२.७

३२. अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः।।
कुमारसम्भव १.१।।

३३. इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम्।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः।।
स्वप्नवासवदत्तम् ६.१० : बालचरितम् ५.२० :
दूतघटोत्कचम् १.५६

३४. आशैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासारशीता-
त्तीरान्तान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य।
आगत्याऽऽगत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूड़ारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः।।

मुद्राराक्षसम् ३.१९

३५. नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीम्।
एकः कृत्स्वां वलयपरिघप्रांशुबाहुर्भुनक्ति।।

अभिज्ञानशाकुन्तल २.५

३६. अनर्घराघव पृ० ३२०

३७. वही पृ० ३४३

३८. पादताडितक श्लोक - २४

३९. वही पृ० २२३

४०. वही श्लोक २४

४१. वही पृ० १९३

४२. वही पृ० २२४

४३. वही श्लोक २४

४४. उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः।।

विष्णुपुराण २.३१

४५. आश्चर्यचूड़ामणि पृ० ४

४६. बालरामायण पृ० ३६४

४७.(क)आसमुद्रात्तु वै पूर्वादासमुद्रात्तु दक्षिणात्।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः।। मनुस्मृति २.२२

(ख) पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तरमार्यावर्तः।
तस्मिंश्चातुर्वर्ण्यं चातुराश्रमञ्च यन्मूलं सदाचारः।

काव्यमीमांसा ९३.१७-१८

४८. बौधायन धर्मसूत्र १.२८

४९. बालरामायण ६.३८

५०. विनशनप्रयागयोः गङ्गायमुनयोश्चान्तरमन्तर्वेदीति।
काव्यमीमांसा ९४.१८

५१. अनर्घराघव पृ० ३८

५२. बालरामायण ६.३८

५३. दक्षिणापथमुखस्य कुमाराङ्गदस्य।
अभिषेकनाटक पृ० २३

५४. कर्पूरमञ्जरी पृ० १७

५५. बालरामायण पृ० ५

५६. प्रियदर्शिका पृ० १४

५७. वराहसंहिता १४.७-९

५८. दी ज्योग्राफिकल डिक्शनरी ऑफ एन्शिएन्ट एण्ड मिडीवल इन्डिया - पृ० ६-७

५९. सिद्धान्तशिरोमणि ३.४१

६०. काव्यमीमांसा ९२.७-९

६१. इन्द्रकसेरुताम्रपर्णीगभस्तिनागद्वीपाः।
तथा सौम्यो गान्धर्वो वारुणो भारतं वेति।।
वराहपुराण अध्याय ८५

६२. दी ज्योग्राफिकल डिक्शनरी ऑफ एन्शिएन्ट एण्ड मिडीवल इन्डिया - पृ० ६-७

६३. ऐतरेय ब्राह्मण ८.१४

६४. अथर्ववेद ३.२७, ४.४०

६५. यजुर्वेद - तैत्तिरीयसंहिता ४.४.१२,
वाजसनेयिसंहिता १५.१०-१४

६६. काव्यमीमांसा ९३.२०-२२

६७. वही ९३.२५-२८

६८. वही ९४.४-५

६९. वही ९४.९-११

७०. वही ९४.१७-१८

७१. पञ्चालाः कुरवो मत्स्याः यौधेयाः सपटच्चराः।
कुन्तयः शूरसेनाश्च मध्यदेशजनाः स्मृताः।।
गरुडपुराण ५५.१०

७२. हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः।। मनुस्मृति २.२१

७३. दी ज्योग्राफी ऑफ एन्शिएन्ट एण्ड मिडीवल इन्डिया -पृ० ११

७४. वही - पृ० ९

# द्वितीयोऽध्याय:

## पर्वता: वनानि सरांसि जलनिधयो द्वीपाश्च

### १. पर्वता: –

(i) विन्ध्यपर्वत:
(ii) पारियात्र:
(iii) शुक्तिमान्
(iv) ऋक्ष:
(v) महेन्द्र:
(vi) सह्य:
(vii) मलय:
(viii) रैवतक:
(ix) हिमालय:
(x) मन्दराचल:
(xi) गन्धमादन:
(xii) कैलास:
(xiii) हेमकूट:
(xiv) मेरु:
(xv) क्रौञ्च:
(xvi) मैनाक:
(xvii) सुवेल:
(xviii) त्रिकूट:
(xix) रोहणाचल:
(xx) माल्यवान्
(xxi) ऋष्यमूक:
(xxii) चित्रकूट:
(xxiii) मदगन्धीर:
(xxiv) श्रीपर्वत:

### २. वनानि –

(i) विन्ध्यारण्यम्
(ii) दक्षिणारण्यम्
(iii) दण्डकारण्यम्
(iv) जनस्थानम्
(v) पञ्चवटी
(vi) तपनवनम्
(vii) नैमिषारण्यम्
(viii) कुमारवनम्
(ix) वेणुवनम्
(x) नागवनम्

### ३. सरांसि –

(i) मानससर:
(ii) पम्पासर:

### ४. जलनिधयो द्वीपाश्च

# द्वितीयोऽध्यायः

## पर्वताः वनानि सरांसि जलनिधयो द्वीपाश्च

संस्कृतरूपकेष्वनेकेषां गिरीणां वनानां सरसां जलनिधीनां द्वीपानाञ्च वर्णनानि सन्ति। तेषां स्थितिरत्र समीक्ष्यते।

### १. पर्वताः

संस्कृतनाट्यकृद्भिः पर्वताः बहव उल्लिखिताः। प्राचीनसंस्कृतसाहित्ये सप्तकुलपर्वतानां कल्पना मनीषिभिः कृता संलक्ष्यते, ये धरां धारयन्ति। ते च सन्ति – विन्ध्यपारियात्रशुक्तिमदृक्षमहेन्द्रसह्यमलयाः[१]। राजशेखरकृतबालरामायणनाटके नवप्रमुखपर्वतानामुल्लेखो विद्यते – कैलासकलिन्दमलयमन्दरमेरुविन्ध्यसह्यमहेन्द्रहिमवताम्[२]। अथ च अष्टप्रमुखगिरयो वर्तन्ते – मेरुहिमालयमन्दरकैलासगन्धमादनाञ्जनाचलविन्ध्यरोहणगिरयश्च[३]। शिखरिणामेतेषां शिखरानुत्पाट्य वानरयूथैस्तैः समुद्रे सेतुर्निर्मितः।

महाकविर्भवभूतिर्दक्षिणभारतस्य पर्वतीयसौन्दर्यस्य मनोरमत्वमवर्णयत्। शिखरिणां शिखरा अत्र विशालशिलाखण्डमयाः सन्ति। सततमेते मेघैराच्छन्ना अवलोक्यन्ते। अत्र मयूराणां केकाध्वनिः सततं श्रूयते। चन्दनसालसरलपाटलकदम्बजम्बूवृक्षैरत्र भूमिरावृता[४]। सल्लकीवल्लर्यो गम्भार्यारग्वधतिनिशतरवश्च सघनाः सर्वत्रोपलभ्यन्ते। सरितां तीरेष्वश्मन्तकतृणविशेषाः सर्वत्रोऽत्र प्ररोहन्ति[५]। गोदावरीसरिदत्र प्रवहति[६]। मयूरपूर्णिकदात्यूहककुभादिपतत्रिणोऽत्र वियति भूतले च विलसन्ति। गिरिगुहासु भल्लूकानां गर्जनानि गुञ्जन्ति[७]।

समालोच्यसंस्कृतरूपकेषु निम्नलिखितानां गिरीणां वर्णनान्युपलभ्यन्ते -

### (१) विन्ध्यपर्वतः -

कुलपर्वतेषु विन्ध्यगिरिः प्रमुखो मतः[८]। पर्वतोऽयमुत्तरभारतीयानां दक्षिणभारतीयानाञ्च भूभागानां विभाजको विद्यते। वनवासावधिं व्यत्येतुं रामो विन्ध्यगिरिममिमुखो बभूव[९]। विन्ध्यदेशाभिधास्वत्रत्यासु भूमिष्वाटविकानां शासनं विद्यते[१०]। पुराणेषु कथा प्रसिद्धा -

सततमुच्चैरुद्गच्छता विन्ध्यभूधरेण सूर्यपथावरोधनं प्रारब्धम्। तस्मिन्नवसरे मुनिनाऽगस्त्येन विन्ध्यभूधरस्य सा वृद्धिरवरोधिता। तदनन्तरमसौ महामुनिः विन्ध्यगिरिमुल्लंध्य दक्षिणभारतमगच्छत्[११]।

विन्ध्यपर्वतस्य स्थितिः सुनिश्चिता विवादरहिता च वर्तते। भारतवर्षस्य मध्यभागे गिरिरयमापश्चिमसमुद्रात् पूर्वसमुद्रपर्यन्तं स्थितः पृथिव्याः मानदण्ड इव प्रतिभाति। बिहारमगधकलिंगगुर्जरप्रान्तपर्यन्तं सुविस्तृताः पर्वतशृङ्खलाः विन्ध्यगिरिणैव सुसम्बद्धाः वर्तन्ते। मध्यप्रदेशेऽस्य भूधरस्य विस्तृतरूपेण विस्तारः संलक्ष्यते। ऋक्षपारियात्रशुक्तिमच्चित्रकूटामरकण्टकादिगिरयो विन्ध्यशृङ्खलाया एव विभागाः सन्ति।

विन्ध्यगिरिरयं कविभिर्विशेषरूपेण समृद्धिशाली वर्णितः। अत्र वनस्पतिजखनिजसम्पदां प्राचुर्यमुपलभ्यते। अनन्तानि जलसाधनान्यत्र संलक्ष्यन्ते। पर्वतशृङ्खलास्वत्र कविभिरनुपमं प्राकृतिकसौन्दर्यं समीक्षितम्। वर्षर्तावत्र मूधरे विद्युल्लेखास्तथा चमचमायन्ते यथा जलदपंक्तिभिरसौ विद्युद्रज्जुकशाभिस्ताड्यमानो विभाति[१२]। विन्ध्यपर्वतोपत्यकासु प्रवहन्त्याः रेवासरितो मनोरमं चित्रं कालिदासेन चित्रितं सहृदयानां मनांस्यावर्जयति[१३]।

### (२) पारियात्रपर्वतः -

पारियात्रपर्वतो मनीषिभिः प्राचीनैः कुलपर्वतेषु परिगणितः। विन्ध्यपर्वतस्यैवाऽयमेको विभागः। विन्ध्याचलस्य पश्चिमभागेनाऽयं

परिचीयते। संभवतोऽरावली पर्वतश्रेणयः प्राचीनसमये परियात्रनाम्ना प्रसिद्धा अवर्तन्त[१४]।

बाल्मीकिना महर्षिणा वर्णितम् -

सुग्रीवस्यादेशेन सीतामन्वेष्टुं गताः केचन वानराः पश्चिमदिशि पारियात्रपर्वतमपि सम्प्रापुः[१५]। सौन्दरानन्दमहाकाव्ये पारियात्रगिरिर्मध्यदेशस्य दक्षिणसीमारूपेण प्रोक्तः। कालिदासेन रघुवंशे पारियात्रभूधराणामुच्चैस्तरत्वं वर्णितम्[१६]। भण्डारकरमहोदयः पारियात्रगिरिं विन्ध्यपर्वतस्यैवैकमंशं ब्रवीति। अयं चम्बलवेत्रवत्योः सरितोरुद्गमस्थानं वर्तते। रायचौधरीमहोदयेन पारियात्रपर्वतस्य स्थितिः भोपालप्रदेशे पश्चिमवर्तिनि भूभागे प्रतिपादिता[१७]।

विवरणान्येतानि साधयन्ति यद् विन्ध्यपर्वतस्य पश्चिमभूभागादारभ्य खम्बातसमुद्रबंकपर्यन्तं विस्तीर्णा अरावलीपर्वतश्रेणयः पारियात्रगिरिनाम्ना प्रसिद्धा अवर्तन्त।

## (३) शुक्तिमान्

शुक्तिमान् गिरिरपि कुलपर्वतेषु परिगणितः। सुविशालविन्ध्यगिरेरेवाऽयमेको विभागो वर्तते। कनिंधममहोदयेन प्रोक्तम् -

शुक्तिमतो गिरेर्विस्तारश्छत्तीसगढ़वस्तरप्रदेशयोर्मध्ये हजारीबागप्रदेशोत्तरवर्ती मन्तव्यः। पर्वतादस्मात् केनसरित् प्रभवति[१८]।

डेमहोदयस्याऽभिमतमस्ति - शुक्तिमत्पर्वतान्तर्गताः गोंडवाना-छोटानागपुरमहेन्द्रगिरिश्रेणयोऽवगन्तव्याः[१९]।

केचन समीक्षकाः काठियावाडप्रदेशस्य पर्वतीयान् प्रदेशान् शुक्तिमन्तं गिरिमाचक्षते[२०]। परमन्ये हैदराबादगोलकुण्डाप्रदेशयोः पर्वतीयं भूभागं शुक्तिमन्तं पर्वतं कथयन्ति[२१]। अत्र रायचौधरीमहोदयस्याऽभिमतं विद्यते यन्मध्यप्रदेशस्य रायगढ़जनपदस्य शुक्तिप्रदेशादारम्य बिहार-प्रान्तस्य मानभूमसन्थालजनपदपर्यन्तं विस्तृतः पर्वतीयो भूमिभागः शुक्तिमान् गिरिवगन्तव्यः[२२]।

प्राचीनविवरणैः सुस्पष्टमिदं यच्छुक्तिमतः पर्वतस्य स्थिति-र्विन्ध्यपूर्ववर्तिनी वर्तते। अतोऽत्र डा० रायचौधरी महोदयस्य मतस्यैव समीचीनत्वमवगन्तव्यम्।

## (४) ऋक्षः -

ऋक्षपर्वतस्य गणनाऽपि कुलपर्वतेषु क्रियते। अयमपि गिरि-र्विन्ध्याचलस्यैवैको विभागो रेवासरित उपत्यकासु स्थितः। ऋक्षाणां बाहुल्यात् पर्वतोऽयमृक्षाभिधानो बभूव[२३]। कालिदासेनाऽस्य भूधरस्य प्राकृतिकरामणीयकमभिव्यञ्जितम्। इन्दुमत्याः स्वयंवरं गच्छतो-ऽजनरपतेः सैन्यशिविरं गज एकः समाजगाम। शापग्रस्तोऽयं गजरूपेण परिणतो गन्धर्व ऋक्षपर्वतस्य गैरिकपाषाणान् दन्ताघातैः प्रहरन् नर्मदासरितमवजगाहे[२४]।

ऋक्षपर्वतस्य स्थितिविषये मतान्यनेकानि विद्वद्भिः समालोचकैः प्रकटितानि। भगवतशरणोपाध्यायेन प्रोक्तम् - सतपुड़ापर्वतका एव प्राचीनकाले ऋक्षपर्वतनाम्ना प्रसिद्धा अवर्तन्त[२५]। नन्दलाल डे महोदयस्य मतं वर्तते - वर्तमानगोंडवानाप्रदेशीयाः पर्वतकाः प्राचीनकाले ऋक्षपर्वताभिधाना आसन्[२६]। अन्यत्र ताप्तीपयोष्णीनिर्विन्ध्यासरिता-मुद्भवस्थानमृक्षपर्वताभिधानेन प्रोक्तम्[२७]।

जयचन्द्रविद्यालंकारेण वासुदेवविष्णुमिराशीमहोदयेन च सतपुड़ापर्वतीयभूभाग ऋक्षपर्वतः प्रतिपादितः। ताप्तीवेन-गङ्गासरिद्द्वयं प्रदेशमेनं सिञ्चति। वासुदेवशरणोऽग्रवालो वर्तमान-सतपुड़ाभूभागादारभ्य महादेवपर्वतपूर्वपर्यन्तं भूभागमृक्षं नाम कुलपर्वतं प्रतिपादयंति[२८]। बलदेवोपाध्यायेनाऽपि तस्य मतस्य समर्थनं कृतम्[२९]। अतोऽत्र प्रसङ्गे सतपुड़ाप्रदेशस्थपर्वतीयो भूभाग एव ऋक्षपर्वतोऽवगन्तव्यः।

## (५) महेन्द्रः -

महेन्द्रपर्वतोऽपि कुलपर्वतेषु गण्यते। रामेण पराजितः परशुरामो महेन्द्रपर्वतं स्वनिवासञ्चक्रे। नैषधीयचरितमहाकाव्ये श्रीहर्षो

महेन्द्रपर्वतस्थितिं कलिङ्गेष्ववर्णयत्[३०]। रघुदिग्विजयप्रसङ्गे कालिदासः कलिङ्गराजं महेन्द्रगिरिवासिनमसूचयत्[३१]। भूधरस्याऽस्य शिखरे रघुणा सैन्यस्कन्धावारः संस्थापितः। पूर्वदिशं विजित्यं दक्षिणं प्रति प्रयातो रघुः कलिङ्गान् विजिग्ये।

समीक्षकाः प्रवदन्ति – पूर्वसमुद्रतटवर्तिगिरिशृङ्खलानामुत्तरीयो भाग एव महेन्द्रगिरिरस्ति[३२]। कलिङ्ग (उत्कल) प्रान्तस्य गंजामक्षेत्रसन्निकटवर्तिपर्वतीयभूभागोऽपि लोके महेन्द्रगिरिनाम्ना प्रथितः। समुद्रतलादस्योत्सेधः पञ्चशताधिकपञ्चसहस्रफीटपरिमितो विद्यते। रायचौधरीमहोदयेन साधितम् – आगंजामप्रदेशाद् हेवेनलीपर्यन्तं विस्तृता पर्वतशृङ्खला महेन्द्रगिरिरस्ति[३३]।

### (६) सह्यपर्वतः –

सह्यपर्वतस्य गणनाऽपि कुलपर्वतेषु विधीयते। प्राचीनसाहित्ये गिरिरयं दक्षिणभारतवर्ती वर्णितः। पश्चिमसमुद्रतटवर्तिगिरिश्रेणयः सह्यपर्वतनाम्ना प्रथिताः सन्ति। पर्वतस्याऽस्याऽङ्के कृष्णासरित् प्रवहति[३४]। कुलशेखरेण वर्मणा भूधरोऽयं दक्षिणभारते वर्णितः[३५]। वर्तमानसमयेऽपि पश्चिमसमुद्रतटवर्तिनीयं पर्वतश्रेणी सह्यपर्वतनाम्नैव परिचीयते।

कालिदासेन रघोर्दिग्विजयप्रसङ्गे सह्यपर्वतस्याऽपि परिचयो वर्णितः[३६]। अनेन वर्णनेन प्रतीयते, यत् पश्चिमसमुद्रतटवर्तिनीयं सह्य-पर्वतश्रेणी सागरतटात् किञ्चिद् दूरवर्तिनी स्थानान्तर्गताऽवर्तत। वर्तमानकाले सागरसह्यगिरिमध्ये तन्वी भूमिपट्टिका संलक्ष्यते। प्रसिद्धेयं पौराणिकी कथा, यत् समग्रां पृथिवीं ब्राह्मणेभ्यो वितीर्य परशुरामः सागरराद् भूमिमिमामवाप। रघो सैन्येन समुद्रतटवर्तिनाऽनेनैव मार्गेण प्रयातम्।

### (७) मलयः –

प्राचीनसाहित्ये मलयपर्वतस्य प्राचुर्येण वर्णनानि समुपलभ्यन्ते।

अयमपि गिरिः कुलपर्वतेषु गण्यते। संस्कृतरूपकेषु मलयपर्वतस्य स्थितिः दक्षिणभारतवर्तिनी कविभिः प्रोक्ता[३७]। अगस्त्यस्य महर्षेराश्रमोऽपि मलयगिरिस्थितो ज्ञायते[३८]। जटायोरग्रजस्य सम्पातेरपि निवासो मलयगिरिगुहास्ववर्तत[३९]।

पश्चिमसमुद्रघाटस्य दक्षिणवर्ती पर्वतीयभूभागो मलयाभिधानेन प्रसिद्धः। कोयम्बटूरप्रदेशादारभ्य कुमार्यन्तरीपपर्यन्तं विस्तीर्णा पर्वतीयभूमिर्मलयगिरिरस्ति[४०]। नीलगिरिपर्वतका अस्यैव पर्वतस्यांऽशाः[४१]। भगवतशरणोपाध्यायेन कावेरीदक्षिणत आमहीसूरात् (मैसूर) तिरुअनन्तपुर (भावणकोर) पर्यन्तं विस्तृता पर्वतशृङ्खला मलयाभिधाना प्रोक्ता[४२]।

मलयपर्वतस्य बहुविधवैशिष्ट्यानां रामणीयकस्य च वर्णनं संस्कृतरूपककृद्भिर्विहितम्। पर्वतादस्मात् ताम्रपर्णी सरित् प्रवहति[४३]। कावेरीसरिता चाऽयं गिरिः परिवेष्टितः[४४]। अत्र कृष्णमरिचैला-चन्दनपूगकक्कोलपादपाः बाहुल्ययेनोद्भवन्ति[४५]।

संस्कृतसाहित्ये मलयपर्वनोऽतिरोमाञ्चको ह्युन्मादकश्च प्रोक्तः। अतिसुखद उन्मादकश्च पवनो वसन्तर्तौ प्रवहति[४६]। कालिदासो-ऽवर्णयत्मलयपर्वते चन्दनपादपानां चन्दनलतानाञ्च प्राचुर्यं वर्तते[४७]।

भासेनोक्तम् – मलयपर्वते चन्दनवनानि सन्ति। एतेषां सौरभेण मध्याह्ने सुखदनिद्राया उपलब्धिर्भवति[४८]।

राजशेखरेण कालिदासेन च मलयपर्वतस्य चित्तार्षकराणि मनोरमाणि वर्णनानि कृतानि। पर्वतोऽयं भुजङ्गमपरिवेष्टितचन्दन-तरूणां कवककोलकैलामरिचजातिपुष्पाणाञ्च जन्मभूमिः। अत्र ताम्रपर्णी सरिन्मौक्तिकनिचयान् प्रददाति। विविधानि रत्नान्यत्र प्रभवन्ति। कुम्भोद्भवेन (अगस्त्येन) पर्वतोऽयं पवित्रीकृतः[४९]।

मलयपर्वतस्य कन्दरा अतिपवित्राः रमणीयाश्च प्रोक्ताः। सर्पैः परिवेष्टितानां चन्दनतरूणां स्कन्धाः कृष्णमरिचगुल्मेभ्य उत्पन्नाः

शुकाः पृथिव्याञ्च विप्रकीर्णाः लवङ्गबीजाः मनांसि हरन्ति[५०]।

## (८) रैवतकः -

प्राचीनविद्वद्भिर्नाटचकृद्भिर्द्वारिकासमीपं रैवतकभूधरस्य स्थितिर्वर्णिता। कुलशेखरवर्मणा लिखितम् -

द्वारकापुर्याः नागरिकाः भ्रमणाय रैवतकगिरिमागच्छन्ति स्म। सुभद्रामधिगन्तुमर्जुनो मस्करिवेशधारी भूत्वा तत्र न्यवसत्[५१]।

माघो रैवतकपर्वतस्य नैसर्गिकरामणीयकं व्यानङ्क्त। द्वारकापुर्या इन्द्रप्रस्थं प्रति प्रतिष्ठन् कृष्णः रैवतकगिरेरुपत्यकायां सैन्यशिविरं व्यवास्थापयत्। प्रभाते रैवतकगिरेरेकतस्तूदयतो भास्करस्याऽपरतश्चास्तं गच्छतश्चन्द्रमसः सौन्दर्यस्य सादृश्यं माघेन कविना उभयतो विलम्बिघण्टाद्वयसुशोभितेन गजेन्द्रेणोपमितम्[५२]। अतः कविरयं घण्टा-माघाभिधानेनाऽपि प्रसिद्धिमवाप।

## (९) हिमालयः -

संस्कृतसाहित्ये हिमवतो वर्णनान्यतिविशदानि रमणीयानि रुचिकराणि महत्त्वशालीनि च वर्तन्ते। न केवलं काव्येष्वेव, धार्मिक-ग्रन्थेष्वपि हिमवतो महिमा मनीषिभिः प्रकीर्तिताः। देवभूमिरयं प्रोक्तः। भारतवर्षस्योत्तरीयसीमानोऽयमेव निर्धारयति। उत्तरस्यां पूर्वापरतोय-निधी अवगाहमानोऽयं हिमगिरिः देवानामधिवासभूतः कालिदासेन संकीर्तितः[५३]। कालिदासमेवोद्धृत्य राजशेखरो हिमालयं भारतवर्षस्य प्रहरिणं जगाद[५४]।

हिमालयोऽयं सुविस्तृतराज्यरूपेणाऽपि संस्कृतरूपकेषु वर्णितः। ओषधिप्रस्थमस्य राज्यस्य राजधान्यवर्तत।

पार्वतीपरमेश्वरावत्र पाणिग्रहणसंस्कारेणैकरूपतामधिजग्मतुः[५५]।

पुरुषरूपेणाऽपि हिमालयस्य कल्पना विद्यते। हिमप्रदेशस्या -ऽधिपतिरयं जगन्मातुः पार्वत्याः गौर्याः जनकोऽवर्तत[५६]। ओषधीनामप्ययं महान् भाण्डागारोऽजायत[५७]। हनूमन्नाटके दामोदरकविना वर्णितम्-

हिमावृते हिमवति गिरौ प्रकाशमाना ओषधयः प्रभवन्ति। अस्य द्रोणशिखरे विशल्यशल्या ओषधिर्लभ्यते। लक्ष्मणं चिकित्सितुमेषो वनस्पतिर्हिमालयादुद्धृत्य हनुमताऽऽहृता[५८]।

प्राचीनानां महर्षीणां मनस्विनां कवीनाञ्चाऽयं पर्वतो नितरामादरास्पदमवर्तत। समाजे परमास्पदतां गतानां महामुनीनामत्राऽऽश्रमा आसन्। कुलपतेः कण्वस्याऽपि गुरुकुलमाश्रमरूपं हिमगिरेरुपत्यकारण्येष्वर्तत[५९]। अतस्तस्मात् स्थानात् समायातानां तपस्विनां समाचारमाकर्ण्य दुष्यन्तस्तेषां समुचितमातिथ्यं विधातुमादिदेश।

भासेन हिमालयस्य काचन विशेषता अभिव्यञ्जिताः। उत्तरस्यां दिशि समवस्थितस्य हिमालयस्य बहवः शिखराः वर्तन्ते। तत्र सप्तमे शिखरे देवाधिदेवो महादेवो निवसति। तस्य शिरसो गङ्गा सततं प्रवहति। तत्र हिमालये काञ्चनपार्श्वमृगाः गङ्गाजलमेव पिबन्ति[६०]। हिमालये प्रकाशमाना ओषधयः समुलभ्यन्ते। अतस्तत्र निवासाय सर्वे जनाः स्पृहयन्ति[६१]।

हिमालये चित्ताकर्षकाः रमणीयाः कन्दराः वर्तन्ते। विद्याधरादिदिव्ययोनिजना अपि विविधक्रीडालालसाः प्रलोभननिर्भराभिर्दृष्टिभिरेनं निरीक्षन्ते[६२]।

संस्कृतकविभिर्वर्णिताः मन्दरगन्धमादनकैलासहेमकूटमेरुक्रौञ्चमैनाकादिगिरिश्रेणयो हिमालयान्तर्गता एव विविधानि गिरिशिखराणि वर्तन्ते।

हिमालयस्य स्थितिः सुनिश्चिता वर्तते। पश्चिमदिशि हिन्दूकुशशिखरादारभ्याऽयं पर्वतः पूर्वदिशि ब्रह्मदेशपर्यन्तं विस्तीर्णो वतति। उत्तरदक्षिणपर्यन्तेष्वस्य गिरेर्विस्तारः २४०-३२० किलोमीटरं परिधीयते। अथ चाऽयं भूधरश्चीनभारतदेशयोर्मध्यवर्ती स्थितः।

### (१०) मन्दराचलः -

हिमालयस्योत्तरवर्ती भूभागो मन्दराचलो वर्तते। महतो

हिमालयस्यैवाऽयमेकोंऽशः। रामायणमहाकाव्ये बाल्मीकिनाऽयं गिरिर्महत्सु पञ्चपर्वतेषु महेन्द्रहिमवद्विन्ध्यमन्दरकैलासेषु परिगणितः[६३]। महाभारते चाऽयं हिमवतः शृङ्खलाभूतः प्रोक्तः[६४]। अथ चाऽस्य स्थितिर्गन्धमादनस्य पूर्वस्यां दिशि बदरिकाश्रमस्य चोत्तरस्यां वर्तते[६५]।

काव्येषु वर्णनानि सन्ति - मन्दराचलं मथिं कृत्वा देवदानवैः समुद्रस्य मन्थनं कृतम्[६६]। कुमारसम्भवे कालिदासेन पार्वतीपरमेश्वरयो-र्मेरुमन्दरकैलासगन्धमादनगिरिभ्रमणानि चित्रितानि[६७]।

भासेन वर्णितम् -

मन्दरगिरिकन्दरासु विद्याधरादयो देवयोनिविशेषाः यौवनसुलभ-क्रीडासु निमग्ना अवर्तन्त[६८]।

देवाः दानवाश्च मन्दराचलं मथिं कृत्वा समुद्रं ममन्थुरिति कल्पनाः मन्दराचलस्थितिं समुद्रतटे कल्पयन्ति। रामायणे तथाभूतः सङ्केतोऽप्युपलभ्यते[६९]। परं संस्कृतसाहित्ये मन्दराचलस्य स्थितिर्वर्णनानि हिमवतः क्षेत्रेष्वेव समुपलभ्यन्ते।

**(११) गन्धमादनः -**

हिमालयस्यैवैका गिरिशृङ्खला वर्तते गन्धमादनगिरिः। कालिदासेन वर्णितम् -

परिणयनानन्तरं पुरूरवा उर्वश्या प्रणयविहारार्थं गन्धमादन-पर्वतमानीतः। तत्रैव वर्तते मन्दाकिनी सरित्[७०]। उपगन्धमादनं वर्तते कुमारवनम्। तत्र कामिनीनां प्रवेशो वर्जितोऽवर्तत[७१]।

प्राचीनसाहित्ये गन्धमादनगिरेरुल्लेखाः भूयशो लभ्यन्ते। विष्णु-पुराणे भूधरोऽयं भगवतो विष्णोर्निवासः प्रोक्तः। अत्र पूर्वस्यां दिशि मन्दरगिरिर्दक्षिणायाञ्च गन्धमादनो वर्तते[७२]। अथ च अत्रैव गन्धमादने बदरिकाश्रमो वर्तते[७३]।

वर्तमानसमये हिमालयस्यैकः शिखरो गन्धमादननाम्ना लोके प्रथितः। महाभारते भगवता व्यासेन वर्णितम् -

वानप्रस्थधर्ममङ्गीकृत्य पाण्डुर्हिमवन्तं प्रतस्थे। जैतवनं कालकूटं हिमवन्तञ्चोल्लङ्घ्याऽसौ गन्धमादनगिरिं प्राप्नोत्[७४]। बदरिकाश्रमपूर्वं पाण्डुकेश्वराभिधानं स्थानं पाण्डोस्तपोभूमिरूपेण प्रसिद्धम्। तन्निकटमेव विश्वविख्याता वर्तते पुष्पघाटी। तत्र प्रभूतानि विविधानि सौरभसम्भृतानि पुष्पाणि विकसन्ति। उन्मादककुसुमोद्गमभूयस्त्वात् स एव पर्वतो गन्धमादननाम्ना लोके प्रथितां गतः।

कालिदाससेन गन्धमादनसन्निकटं मन्दाकिनी सरित् प्रोक्ता। गन्धमादनस्योपवनानि समागतानां याचकानामभिलाषान् कल्पवृक्षाः पूरयन्ति। तन्निकटमेवौषधिप्रस्थं हिमवतो राजधानी[७५]।

मन्दाकिनी सरित् केदारनाथसमीपस्थितहिमानीभ्यः प्रभवमासाद्य रुद्रप्रयागे अलकनन्दायां विलीयते।

**वर्णनैरेतैरनुमीयते -**

वेदमहाभारतपुराणादिग्रन्थरचनासमये वर्तमानकालीन-रुद्रप्रयागादारभ्य केदारनाथपर्यन्तं ततश्च बदरीनाथधामपर्यन्तं सकलमेव पर्वतीयक्षेत्रं प्राचीनकाले गन्धमादननाम्ना प्रसिद्धमवर्तत।

क्षेत्रमिदञ्च सिद्धानां गन्धर्वाणामप्सरसां देवानाञ्च क्रीडास्थली ह्यथ च ऋषीणां तपोभूमिरवर्तत।

वर्तमानसमये बदरिकाश्रमस्य (बदरीनाथधामतीर्थस्थलस्य) पूर्वोत्तरदिशि संस्थितः पर्वतो गन्धमादननाम्ना प्रसिद्धः।

## (१२) कैलासः -

मन्दरपर्वतस्योत्तरस्यां दिशि वर्तते कैलासगिरिः[७६]। साक्षाद् भगवतः शिवस्येदं निवासस्थानम्[७७]। शिवस्य क्रीडाभूमिरिति पर्वतोऽयं कैलासनाम्ना सुप्रसिद्धो बभूव (कैलं शिवस्य केलीनां समूह आस्यतेऽत्रेति कैलासः) स्थानस्याऽस्याऽधिपतिः पुराणेषु कुबेरः प्रोक्तः। अतोऽसौ कैलासनाथाभिधानेनाऽप्युच्यते।

बाल्मीकिना पर्वतोऽयं कैलासः पञ्चप्रधानपर्वतेषु परिगणितः[७८]।

अथ चाऽस्य स्थितिर्वर्तते ह्युत्तरस्यां दिशि[७९]। महाभारत[८०] ब्रह्माण्डपुराणादि[८१]ग्रन्थसमीक्षणेन पर्वतस्याऽस्य संस्थितिः कूर्माचलगढ़वालमण्डलयोरुत्तरपश्चिमपर्वतश्रेणीष्वनुमातुं शक्यते। कालिदासकृतवर्णनान्यपि ह्यनुमानमेतं सम्पोषयन्ति[८२]।

शाश्वतहिमावृतोऽयं कैलासगिरिः स्फटिकमणिनिर्मित इव प्रतिभाति। मुकुरभूतेऽस्मिन् गिरौ मुखच्छायामवलोकयन्त्यप्सरसः। उत्तरदिक्लोकपालस्य कुबेरस्य राजधानी अलकापुरी कैलासगिर्युत्सङ्गे समवस्थिता बभूव[८३]। कैलासनाथं कुबेरं संसेव्य निवर्तमाना उर्वशी केशिराक्षसेनाऽपहृता[८४]।

प्राचीनपौराणिकवर्णनेष्वनेकेषु प्रसङ्गेषु कैलासहेमकूटशब्दौ पर्यायवाचिनौ प्रोक्तौ। महाभारते चाऽपि तथाभूताः सङ्केताः समुपलभ्यन्ते[८५]। विष्णुपुराणे मेरुगिरेर्दक्षिणतस्त्रयः पर्वताः प्रोक्ताः - हिमवद्धेमकूटनिषधाः[८६]। परं सामान्यतः प्राचीनसाहित्ये कैलासस्य हेमकूटस्य च पृथक्पृथगेवाऽवस्थितिः संलक्ष्यते।

वर्तमानभौगोलिकविवरणानि प्रदर्शयन्ति यद् गढ़वालमण्डलस्योत्तरस्यां बंदरपुच्छश्रेणीभ्यो यमुनागङ्गालकनन्दासरितः प्रभवन्ति। नन्दलाल डे महोदयस्य मतमिदं यदियं पर्वतशृङ्खलैव वर्तते हेमकूटगिरिः। कैलासबंदरपुच्छगिरिशृङ्खलाः कैलासाऽभिधानेनाऽप्युच्यन्ते[८७]।

कैलासगिरेः स्थितिं वर्तमानसमये त्रिविष्टपदेशे गणयन्ति मनीषिणः। बैटनमहोदयेन कथितम् -

मानससरस उत्तरस्यां चत्वारिंशत्किलोमीटरसुदूरे नीतिपर्वतमार्गस्य पूर्वदिशि कैलासपर्वतः स्थितः। त्रिविष्टपभाषायामयं गिरिः "खंग-रिच-पेचे" इत्युच्यते[८८]। पर्वतोऽयं मानससरस्त्रिषु दिक्षु परिवृणोति। अभिधानकोषलेखानुसारमिदं सरो राक्षससरसोऽशीतिकिलोमीटरविप्रकृष्टान्तराले स्थितः। सिन्धुशतद्रुब्रह्मपुत्रसरितोऽस्मात् सरसः प्रभवन्ति। भोटदेशे सरोवरमिदं "तसि" इत्युच्यते।

गढ़वालभूमेरत्र नीतिपर्वतमार्गमतिक्रम्य गन्तुं शक्यते।

**(१३) हेमकूटः -**

पौराणिकसाहित्ये हेमकूटपर्वतोऽतितरां प्रसिद्धः। अप्सरसां निवासोऽयमभिधीयते। कालिदासेन लिखितम् -

हेमकूटाभिधाने किम्पुरुषपर्वते मारीचो नाम प्रजापतिर्निवसति। पर्वतोऽयं तपसः संसिद्धिक्षेत्रमस्ति[८९]। दुष्यन्तेन निराकृतां शकुन्तलां मेनका स्थानमेतदेवाऽनिनाय। उर्वशीं परित्रातुमुद्यतं केशीराक्षसमनुधावन्तं पुरूरवसमप्सरसोऽकथयन् - हेमकूटपर्वतशिखरे ताः प्रतीक्षिष्यन्ते[९०]।

पौराणिकसाहित्ये भूगोलवर्णनेषु मनीषिभिरियं भूः सप्तसु द्वीपेषु विभक्ता - जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराः। अत्र जम्बूद्वीपे नववर्षाणि वर्तन्ते - कुरुहिरण्मयरम्यकेलावृतहरिकेतुमाल भद्राश्वकिन्नरकिम्पुरुषवर्षाणि। सम्भवतो हिमालयमध्यवर्तिन्यः गिरिभूमय एव किम्पुरुषवर्षाभिधानेन प्रोक्ताः। अस्यैव किम्पुरुषवर्षस्य काचित् पर्वतभूमिर्हेमकूटनाम्ना प्रथिता बभूव। हेमकूटस्य क्षेत्रं पुराणेषु काल्पनिकरूपेण नवतिसहस्रयोजनदीर्घं त्रिसहस्रद्वययोजनविस्तीर्णञ्च प्रोक्तम्।

वराहपुराणे यमुनाभागीरथ्यलकनन्दासरितामुद्गमक्षेत्रस्थितिः हेमकूटगिरौ प्रोक्ता[९१]। नन्दलाल डे महोदयेन बन्दरपुच्छपर्वतशृङ्खलैव हेमकूटपर्वतरूपेणाऽभिमता[९२]।

**(१४) मेरुः -**

संस्कृतसाहित्ये मेरुः सुमेरुर्वा पर्वतो बहुधा ह्युल्लिखितः। स्वर्णनिर्मितोऽयं गिरिर्देवानामधिवासो वर्तते। मुरारिः कैलासस्योत्तरस्यां मेरुपर्वतस्य स्थितिं प्रोवाच[९३]। स्वर्णभूमेरस्य पर्वतस्योपत्यकासु चन्दनपादपाः वर्तन्ते[९४]। कनकाद्रिरप्ययमुच्यते[९५]।

महाभारतकारेण मेरुः सुमेरुर्वा गिरिर्गङ्गासरित उद्गमस्थानमिति

प्रोक्तः[९६]। पद्मपुराणस्याऽपीदमेव वचनम्। अतः मेरुपर्वतस्य स्थितिर्गढ़वालमण्डलस्योत्तरस्यां भुवि मन्तव्या। गङ्गोद्भवस्य गोमुखस्य त्रिषु दिक्षु वर्तमानाः गिरिश्रेणय एव मेरुरित्यनुमेयम्। गिरिश्रेणीनामेतासां हिममण्डितशिखराणि प्रातःसायमादित्यस्याऽऽलोके ज्योत्स्नाद्योतितायाञ्च रजन्यां हिमरश्मिकौमुद्यां सुतप्तकनकराशय इव प्रकाशन्ते।

मत्स्यपुराणे सुमेरुगिरिर्जनपदेनोत्तरकुरुणा परिवृतः प्रतिपादितः[९७]। उत्तरकुरूणां विस्तारमुत्तरगढ़वालादारभ्य शतद्रुव्याससरितोरुत्तरघाटीपर्यन्तमामनन्ति भूगोलशास्त्रविदः।

केषाञ्चिद् विदुषां धारणेयं यत् केदारशृङ्खलैव वर्तते सुमेरुः। वर्तमानसमये विद्वांसः प्रायशो ह्येतां गिरिश्रेणीमेव सुमेरुमवगच्छन्ति[९८]। कालिदासेन मेरुगिरिस्थितिः कैलासगन्धमादनयोर्निकटं प्रोक्ता। परिणयनानन्तरं पार्वतीपरमेश्वराभ्यामस्मिन्नेव भुवि विहृतम्[९९]।

तैत्तिरीयारण्यके महामेरुगिरिरुल्लिखितः प्राचीनमहर्षिभिः। अत्र ह्यष्टकभास्करः सर्वकालेषु विभाति[१००]।

अतः केचन विद्वांसः समीक्षकाः मेरुगिरिस्थितिं ह्युत्तरध्रुवप्रदेशेषु कल्पन्ते[१०१]। केचन समीक्षकाः साइबेरियाप्रदेशे ह्येनं प्रवदन्ति[१०२]।

महाभारतस्य भीष्मपर्वणि मेरुगिरिः शाकद्वीपस्थितोऽपि प्रोक्तः। अतः केचन विद्वांसो मेरुगिरिं पामीरपठारसमीपवर्तिनमपि सूचयन्ति[१०३]। वासुदेवशरणाग्रवालमहोदयेन पामीरपठार एव मेरुः प्रोक्तः[१०४]।

परं पुराणानां कालिदासकृतीनाञ्चाऽध्ययनेन सिद्धमेव यन्मेरुगिरिस्थितिरुत्तरगढ़वालपर्वतीयभूमिष्वेव वर्तते। तन्निकटमेव गन्धमादनकैलासपर्वतौ स्तः।

### (१५) क्रौञ्चः -

प्राचीनभारतीयसाहित्ये हिमालयान्तर्गतभूमिषु क्रौञ्चपर्वतो बहुधा मनीषिभिरुल्लिखितः। कैलासगिरिं गच्छतः परशुरामस्य यात्रायामयं गिरिर्बाधको बभूव। भूधरमेनं बिद्ध्वा तेन क्रौञ्चमार्गो

निर्मितः। मार्गमेतमवलम्ब्याऽसौ मानससरसो यात्रायै प्रातिष्ठत[१०५]। प्राचीनसमये परशुरामेण क्रौञ्चमार्गनिर्मितिः सम्पादितेति कथा नितरां लोकेषु प्रथिता बभूव[१०६]। हंसमार्गोऽप्ययमुच्यते[१०७]।

वर्तमानसमये नीतिमार्ग एव क्रौञ्चरन्ध्रं क्रौञ्चमार्गो वा विद्यते। गढ़वालमण्डलस्य चमोलीजनपदे स्थितोऽयं नीतिमार्गः। ऋषिकेश-देवप्रयाग-श्रीनगर-रुद्रप्रयाग-ज्योतिर्मठादिस्थानान्युल्लंध्य जनास्तपोवनं प्राप्नुवन्ति। तपोवनात् किञ्चिद्विप्रकृष्टान्तरालेन वर्तते नीतिमार्गः। भारतत्रिविष्टपयोर्मध्ये प्रमुखोऽयं व्यापारमार्गो विद्यते[१०८]।

परं वासुदेवशरणाग्रवालस्य मन्तव्यमस्ति यदलमोड़ानगरमुत्क्रम्य लीपूलेकमार्ग एव वर्तते क्रौञ्चमार्गः[१०९]।

## (१६) मैनाकः -

पौराणिकसाहित्ये प्राचीनभारतीयसाहित्यकारैर्मैनाकगिरि-र्हिमालयस्य पुत्ररूपेण कल्पितः। कविभिरपि स्वकाव्यकृतिषु तेषामनुकरणं विहितम्। इन्द्रे पर्वतपक्षच्छेदनतत्परे सति पर्वतोऽयं समुद्रस्य शरणं प्रपन्नः[११०]। कवीनां काव्येषु कथैषा प्रायशः निबद्धोपलभ्यते[१११]।

मैनाकपर्वतस्य भौगोलिकस्थितेर्निर्धारणं याथार्थ्येन सुकठिनमेव। हिमवतः सुतभावादस्य स्थितिर्हिमालयक्षेत्रवर्तिनी सम्भावनीया। केचन समीक्षकाः शिवालकपर्वतशृङ्खलां मैनाकगिरिमामनन्ति। महाभारतस्य[११२] पुराणानाञ्च[११३] वर्णनान्याश्रित्य शिवालकपर्वतश्रेण्येव मैनाकगिरिः सिद्ध्यति[११४]।

पुराणप्रसिद्धाः कथाः मैनाकगिरिं सागरजलान्तर्निमग्नं प्रवदन्ति। सामान्यतोऽयं गिरिर्भारतलङ्काद्वीपमध्यगतः समुद्रान्तर्वर्ती गण्यते। कालिदासेन वर्णितम् - पुष्पकविमानेन लङ्कातोऽयोध्यां निवर्तमानेन रामेण सागरमध्ये निलीनाः शतशो गिरयः इन्द्रवज्रप्रहारभयभीता अवलोकिताः[११५]। अतो भारतवर्षस्य दक्षिणान्ततटवर्तिनी धनुष्कोटितो लङ्काद्वीपपर्यन्तं विस्तीर्णा समुद्रजलनिमग्ना पर्वतशृंखला

मैनाकगिरिरूपेणाऽभिज्ञातुं शक्या।

## (१७) सुवेलः -

सुवेलपर्वतस्य स्थितिः प्राचीनकविभिर्लङ्काद्वीपे प्रोक्ता। सागरमुत्तीर्य लङ्कां सम्प्राप्य रामः सुवेलपर्वतस्योपत्यकायां सैन्यशिविराणि स्थापयितुमादिदेश[११६]। लङ्कातोऽयोध्यां परावर्तमानेन रामेण प्रथमं तावत् सुवेलाद्रिरुल्लंघितः[११७]। लङ्काद्वीपस्य एडम्सशिखरः सुवेलपर्वतरूपेणा-ऽभिज्ञायते[११८]।

## (१८) त्रिकूटः -

त्रिकूटपर्वतस्याऽपि स्थितिः कविभिर्लङ्कायां वर्णिता[११९]। रावणस्य प्रमदवनं त्रिकूटपर्वते निर्मितमविद्यत[१२०]।

परन्त्वनेकैः प्राचीनवर्णनैस्त्रिकूटाद्रेः स्थितिर्भारतवर्षेऽपि सिद्ध्यति। त्रिशिखरः कोऽपि गिरिस्त्रिकूटोऽमिधीयते। हिमालये ऽप्येकस्त्रिकूटगिरिर्वर्तति, यत्र विशिष्टभोज्यपदार्थाः समुपलभ्यन्ते[१२१]।

कालिदासेन रघोः दिग्विजप्रसङ्गे वर्णितम् - रघुणाऽपरान्तजनपदे विजिते सति तस्य सैन्यकरिणस्त्रिकूटं दन्तक्षतैरुत्कीर्य विजयस्तम्भं लिलिखुः[१२२]। त्रिकूटपर्वताद् रघुः स्थलमार्गेण पारसीकदेशं विजेतुं प्रतस्थे[१२३]।

भगवतशरणोपाध्यायेन प्रोक्तम् - नासिकसमीपस्था शिरिशृङ्खलैव त्रिकूटगिरिर्वर्तते[१२४]। अभिधानकोषे त्रिकूटगिरिर्गुर्जरप्रदेशस्य गिरनारपर्वतश्रेण्यन्तर्गतः प्रोक्तः। राधाकुमुदमुकर्जीमहोदस्य मन्तव्यमिदं यदपरान्तप्रदेश एव कोंकणप्रदेशः। तत्र नासिकनगरस्य पश्चिमायां वर्तति त्रिकूटपर्वतस्य स्थितिः[१२५]।

## (१९) रोहणाचलः -

प्राचीनकविभिर्वर्णितम् - दक्षिणभारतेऽगस्त्याश्रमो वर्तति, स तु रोहणाचले स्थितः[१२६]। सम्भवतो मलयगिरेः कोऽपि भागः कविभी रोहणाचलः प्रोक्तः। मुरारिणा मलयाचलस्याऽविप्रकृष्टान्तरालेना-

ऽगस्त्यस्य द्वितीयाश्रमो वर्णितः[१२७]।

अन्यस्मिन्नेकस्मिन् प्रसङ्गेऽसौ समुद्रतटवर्तिन्यां सैकतभूमौ रोहणगिरिमुक्त्वा तत्राऽगस्त्यस्य द्वितीयमाश्रमं सूचयति[१२८]।

## (२०) माल्यवान् -

माल्यवतो गिरेः स्थितिः संस्कृतकविभिर्गोदावरीमुत्तीर्य दक्षिणदिशि वर्णिता। सीतापहरणानन्तरं विरहविकलहृदयो रामः प्रियायै विलपन् माल्यवत्प्रदेशेषु बभ्राम[१२९]। वर्षर्तुश्च रामेण तत्रैव व्यत्यापिता।

राजशेखरोऽवर्णयत् -

माल्यवति गिरौ केतकीपादपाः वंशवनानि कुटजतमालारण्यानि च शोभन्ते[१३०]। गिरिरयं प्रस्रवणाभिधानेनाऽपि प्रोच्यते।

भवभूतिना वर्णितम् -

गोदावरी सरित् माल्यवतः प्रभवति। जनस्थानस्थितोऽयं पर्वतः सघनैररण्यैः समाच्छादितः। गोदावरीसरिदत्र बह्वीनां कन्दराणां निर्माणं चक्रे[१३१]।

मुरारिकविना माल्यवतो गिरेः समीपमुपगोदावरितटं पञ्चवटी वर्णिता। रामेणाऽत्र कुटीरं कृत्वा निवासः कृतः[१३२]।

कालिदासेन वर्णितम् -

लङ्कातोऽयोध्यां निवर्तमानो रामो माल्यवतः शिखरं सीतां प्रादर्शयत्[१३३]। तदग्रे च पम्पासरो वर्तते[१३४]।

समीक्षकैरनुमीयते यदाधुनिकौरंगाबादनगरस्य समीपवर्ती पर्वतीयप्रदेश एव प्रस्रवणगिरिर्वर्तते। पर्जीटरमहोदयोऽब्रवीत् -

माल्यवान् प्रस्रवणश्चैकस्यैव गिरेर्द्वे नामनी स्तः। समग्रोऽयं पर्वतशृङ्खला वर्तते प्रस्रवणगिरिः। अस्या एव शृङ्खलायाः शिखर-मेकं वर्तते माल्यवान्। वर्तमानसमये गिरिरयं देवगिरिनाम्ना प्रसिद्धः[१३५]।

नन्दलाल डे महोदयो ह्यनागुण्डीपर्वतशृङ्खलामेव माल्यवन्तं गिरिं मनुते[१३६]। सीतारामचतुर्वेदी महोदयो माल्यवन्तं रत्नागिरिजनपद-

स्थितमब्रवीत्[१३७]।

## (२१) ऋष्यमूकः -

ऋष्यमूकपर्वतस्य स्थितिः किष्किन्धाराज्येऽवर्तत। बालिना स्थानमिदं सुग्रीवस्य निवासो निर्धारितः[१३८]। पर्वतस्याऽस्योत्सङ्गे मतङ्गमुनेराश्रमोऽविद्यत, तन्निकटञ्चासीत् पम्पासरः[१३९]।

वर्तमानसमये हम्पीग्रामस्थितविरूपाक्षमन्दिराविप्रकृष्टान्तराल-वर्तिनि क्षेत्रे पर्वतीयभूमिरुच्यते ऋष्यमूकगिरिः[१४०]। ऋष्यमूकगिरिरेव सम्भवतः कुञ्जवानिति नाम्नाऽपि प्रसिद्धोऽवर्तत। भवभूतिः पर्वतमेनं जनस्थानेऽवर्णयत्[१४१]।

## (२२) चित्रकूटः -

प्रयागसमीपवर्तिन्याः मन्दाकिन्यास्तटे कविभिश्चित्रकूटगिरि-र्वर्णितः[१४२]। प्रयागाद् यमुनामुत्तीर्य चित्रकूटगामी मार्गो वर्तते। प्राचीन-समयेऽत्रत्यानां वनानामतिसघनत्वाद् भ्रमणमतिदुष्करमासीत्[१४३]। चित्रकूटसंलग्ना जलधारा मन्दाकिनी शुभावहा। अत्र विहृत्य रामश्चित्रकूटं जगाम[१४४]। स्थानमेतदागम्य भरतो राममयोध्यां पुनः निवर्तनाय प्रार्थयामास[१४५]।

कालिदासेन चित्रकूटोपत्यकासु प्रवहन्त्याः मन्दाकिन्या अतिनोरमं वर्णनं कृतम्। धरानायिकायाः कण्ठे सरिदियं मुक्तावलीव शोभते[१४६]।

चित्रकूटस्याऽभिज्ञानेऽपि समीक्षकैर्भ्रान्तिः समुपस्थापिता। बांदाजनपदे झांसीमानिकपुररेलमार्गे चित्रकूटस्टेशनं विद्यते। तस्मात् स्टेशनाच्चिकूटपर्वतस्य स्थितिर्योजनमेकं मार्गमतिक्रम्य वर्तते। चित्रकूटगिरिमारोढुं भक्तजनैः सोपानमार्गो निर्मितः। प्रसिद्धिरियमीदृशी, यदयं मार्गश्छत्रसालनरपतेर्महिष्या निर्मापितम्। रामनवम्यां दीपावल्याञ्चाऽत्र चित्रकूटे महोत्सवानामायोजनं भक्तजनैर्विधीयते।

चित्रकूटस्याभिज्ञानप्रसङ्गे मल्लिनायो विभ्रान्तो बभूव। तेन मेघदूते वर्णितो रामगिरिरेव चित्रकूटो व्याख्यातः। चित्रकूटस्तु वर्तते

प्रयागनिकटवर्ती, परं रामगिरिर्नागपुरनगराच्चत्वारिंशद्योजनात्मकं मार्गमतिक्रम्य स्थितः। वर्तमानसमये गिरियं रामटेकनाम्ना प्रसिद्धः।

**(२३) मदगन्धीरः -**

प्रतिज्ञायौगन्धरायणनाटके मदगन्धीराभिधानो गिरिर्भासकविना समुल्लिखितः। नागवने नीलगजसमुपस्थितिसमाचारमाकर्ण्य वत्सराजो नर्मदामुत्तीर्य वेणुवनं प्राप्नोत्। तत्र स्वपरिजनमुत्सृज्याऽसौ नागवनमगच्छत्। कानिचिद् योजनान्यतिक्रम्य क्रोशमात्रेण मदगन्धीरपर्वतोऽवर्तत[१४७]।

भासस्य विवरणैरेतैः प्रतीयते, यन्मदगन्धीरपर्वतस्य स्थितिर्नर्मदामुत्तीर्य दक्षिणदिशि कतिपययोजनमात्रमवर्तत। मदगन्धीरपर्वतस्य नर्मदातटवर्तिवेणुबनस्य च मध्यवर्तिनि भूभागे नागवनमविद्यत। नर्मदामुत्तीर्य अविप्रकृष्टान्तरालेन वर्तते ऋक्षपर्वतः। सम्भवतोऽस्य पर्वतस्य कश्चिच्छिखरः कविभिर्मदगन्धीरः प्रोक्तः।

**(२४) श्रीपर्वतः -**

प्राचीनकाले कृष्णासरित्तटवर्तिन्यां भूमौ श्रीपर्वतस्य प्रसिद्धिः परमपवित्रतीर्थस्थानरूपेणाऽऽसीत्। शिवस्य द्वादशलिङ्गेषु मल्लिकार्जुनाभिधानस्य शिवलिङ्गस्य स्थानं श्रीपर्वतोऽविद्यत। भवभूतिसमये स्थानमिदं कापालिकानां विशिष्टं प्रसिद्धं केन्द्रमवर्तत। मालतीमाधवप्रकरणे भवभूतिना वर्णितम् -

अघोरघण्टेन कापालिकेन सह तस्य शिष्या कपालकुण्डला श्रीपर्वतात् पद्मावतीं समायाता[१४८]। कपालकुण्डला मालतीमपहृत्य श्रीपर्वतं समाययौ[१४९]। अत्रैव सौदामिनी कापालिकं व्रतं समाचचार[१५०]।

श्रीपर्वतो ज्ञानविज्ञानानां शिक्षायाश्चाऽपि प्रमुखं केन्द्रमासीत्। अत्रत्यः श्रीखण्डदासो नाम वनस्पतिविज्ञानवेत्ता वत्सराजेन निमन्त्रितः कौशाम्बीमाजगाम। तस्य वैज्ञानिकप्रयोगैर्विनाऽपि ऋतुं पादपाः विकसितकुसुमसमाच्छन्नाः बभूवुः[१५१]।

अग्निपुराणे श्रीपर्वतस्य स्थितिः कावेरीनर्मदासरितोः सङ्गमस्थले पुराणकारेण प्रोक्ता। अतिप्रसिद्धमिदं तीर्थस्थलं बभूव[१५२]। परन्तु वर्णनमिदं विचित्रं भ्रान्तिजनकमेव च प्रतीयते। यतः कावेरीनर्मदा सरितौ न कुत्राऽपि संगच्छतः। श्रीपर्वतस्योल्लेखः श्रीमद्भागवतपुराणेऽपि वर्तते[१५३]। ख्रिष्टस्य द्वितीयशताब्द्यामिदं क्षेत्रं महायानसम्प्रदायस्य प्रसिद्धस्याऽऽचार्यस्य नागार्जुनस्य नाम्ना नागार्जुनकौंडाभिधानेनाऽपि प्रथितां गतम्[१५४]।

## (२) वनानि

संस्कृतरूपकेषु वनानामनेकेषां वर्णनानि समुपलभ्यन्ते। प्रायशो रामायणमहाभारतकथानकसम्बद्धानामेव घटनानां वर्णनान्यत्र विद्यन्ते। परं प्रसंगवशात् केषाञ्चिदन्येषामपि वनानां सङ्केताः रूपकेषु समवलोक्यन्ते। प्रमुखानि वनानि निम्नलिखितानि सन्ति -

### (१) विन्ध्यारण्यम् -

भारतवर्षस्योत्तरापथदक्षिणापथयोर्विभाजनं विन्ध्यगिरिणा विधीयते। विन्ध्यगिरिक्षेत्रे विस्तृतं वनं विन्ध्यवनमभिधीयते। चित्रकूटमुल्लंघ्य दक्षिणदिशि विन्ध्यवनं प्रारभते[१५५]।

अतिप्राचीनकालादेव वनमिदमतिभयप्रदं सुदुःसहसंरचणशील-मगण्यत। वन्यहिंस्रजन्तूनां वन्यजातिजनानाञ्च निवासभूमिरिदं वनं सुदुःप्रवेशं भयावहमवर्तत। राजशेखरेण वर्णितम् -

विन्ध्यगिर्युपत्यकासु वन्यकरिणः सञ्चरन्ति, कन्दरासु भल्लूकाः निवसन्ति, क्षुपनिकुञ्जेषु पञ्चाननेभ्यो भीतिरस्ति, घाटीषु चित्रकाणा-मनोकहेषु च गोलाङ्गूलानामातङ्काः प्राचुर्येण वर्तन्ते। पथवीथिकासु वन्यपुलिन्दानां सञ्चारो विद्यते[१५६]।

बहुभिः प्राचीनकविभिर्विन्ध्यवनस्य भयप्रदस्थितिर्वर्णिता। अथ च तस्य प्राकृतिकसौन्दर्यमपि प्रदर्शितम्। अत्र मुनीनामाश्रमा अवर्तन्त। बाणस्य हर्षचरिताख्यायिकायां कादम्बरीकथायाञ्च विन्ध्यवनस्य रोमाञ्चोत्पादकानि वर्णनानि वर्तन्ते। विन्ध्यवासिनी देवी वनस्या-

ऽस्याऽधिष्टात्री देवता सम्मता।

कालिदासेन लिखितम् -

उत्तरभारताद् दक्षिणभारतयात्रायै विन्ध्यवनस्योल्लंघनमनिवार्यं विद्यते। मार्गाणां दुश्चरणशीलत्वाल्लुण्टकानाञ्च बाहुल्याद् यात्रिणो भयग्रस्ताः सर्वेषु कालेषु समवर्तन्त। प्रायशो यात्रिणो लुण्टाकैर्लुण्ठ्यन्ते स्म। मालविकाग्निमित्रनाटकस्य पञ्चमेऽङ्के कालिदासेन वर्णितम् - विदिशां गच्छन्तः पथिकाः विन्ध्यवने लुण्टाकैर्लुण्ठिताः।

## (२) दक्षिणारण्यम् -

बिन्ध्यवनमतिक्रम्य दक्षिणभारतस्य वनानां पंक्तयः प्रारभन्ते। वनान्येतानि समग्ररूपेण दक्षिणारण्यमित्यभिधीयन्ते[१५७]। दक्षिणारण्यमपि बहुविधैर्मांसभक्षिभिर्हिंस्रजन्तुभिः सङ्कीर्णं भयावहो दुरारोहैश्च भूधरैः सुदुःसहसञ्चारशीलैर्गह्वरैश्च सम्भृतमवर्तत[१५८]। दण्डकारण्यं पञ्चवटी जनस्थानमिति सर्वे वनप्रदेशाः दक्षिणारण्यस्यैव भूभागाः ज्ञायन्ते स्म।

## (३) दण्डकारण्यम् -

प्राचीनसाहित्ये दण्डकारण्यं पञ्चवटी जनस्थानञ्चेत्येतानि स्थानान्यरितरां प्रथितानि बभूवुः। दक्षिणारण्यस्यैव विभागभूतानि स्थानान्येतानि रामकथासम्बद्धानि कीर्त्यन्ते। विन्ध्यवनाद् दक्षिणं कृष्णानदीतटपर्यन्तं विस्तृतं भूक्षेत्रं दण्डकारण्यनाम्ना प्रसिद्धं बभूव। पूर्वदिशि लघुनागपुरकलिङ्गजनपदपर्यन्तं विस्तृतमेतदरण्यं पश्चिमदिशि च विदर्भपर्यन्तं विस्तीर्णं बभूव[१५९]।

भवभूतिना लिखितम् -

चित्रकूटमतिक्रम्य जनस्थानञ्चोल्लंघ्य दण्डकारण्ये प्रवेशो भवति। अस्यैवारण्यस्य पर्वतीयो भूभाग एको वर्तति मुञ्जवान् गिरिः। अत्र दनुकबन्धाभिधानस्य रक्षसो निवासोऽवर्तत[१६०]।

प्राचीनसाहित्ये दण्डकारण्यस्य पावित्र्यं प्रसिद्धं वर्तते। अत्राऽनेकेषां तीर्थानां स्थितिरासीत्। अस्मिन्नरण्ये भगवद्भक्तिपरायणाः

जनाः परमपरमेश्वरमयजन्त[१६१]। अगस्त्यमुनेराश्रमोऽस्मिन्नेव क्षेत्रे बभूवः, यत्र बहवो गृहस्थतपस्विनोऽपि न्यवसन्[१६२]।

मुरारिकविसमयेऽस्य दण्डकारण्यस्याऽधिपतिः शासको रामदेवो नृपतिरासीत्[१६३]।

## (४) जनस्थानम् -

जनस्थानं दण्डकारण्यस्यैवैको विभागोऽवर्तत[१६४]। भगवता रामेणाऽत्र वने वनवासावधिपर्यन्तं वनवासः कल्पितः। अतो भारतीयजनमानसेषु जनस्थानमहत्त्वं पावित्र्यञ्च प्रतिष्ठितं बभूव। अस्मादेव वनोद्देशाद् रावणो भगवतीं रामपत्नीं सीतामपजहार। सीतामपहरता तेन घोषितम् -

यदि रामो वर्तते क्षत्रियो युद्धाह्वानमसौ मेऽङ्गीकरोतु[१६५]।

मुरारिकविना जनस्थाने सीता वनदेवताभ्यः प्रणामाञ्जलीः निवेदयन्ती वर्णिता[१६६]।

सम्भवतो जनस्थानं रावणस्याऽधिकारक्षेत्रमवर्तत, यतस्तत्र तेन खरादयो राक्षसाः क्षेत्राधिकारिरूपेण नियुक्ता अवर्तन्त[१६७]।

गोदावरीसरित्तटवर्तिन्याः पञ्चवट्याः संलग्ने जनस्थाने बहूनां मुनीनामाश्रमा अवर्तन्तेति वर्णनानि प्राचीनसाहित्ये बहुधा समुपलभ्यन्ते[१६८]।

जनस्थानारण्यस्याऽभिज्ञानं समीक्षकैर्याथार्थ्येन समीक्षितम्। अरण्यमिदं वर्तमाननासिकप्रदेशसंलग्नमवर्तत।

## (५) पञ्चवटी -

रामायणकालीनघटनानां प्रमुखं स्थानं वर्तते पञ्चवटी। जनस्थानं संप्राप्य रामोऽत्रैव गोदावरीतीरे[१६९] पञ्चवट्यां स्वकुटीरमकल्पयत्।

अत्र पञ्चवटवृक्षाणामवस्थितिरवर्तत। अतः स्थानमिदं पञ्चवटीनाम्ना प्रथितां गतम्। स्थानस्याऽस्य रामणीयकेन हृतहृदयो मुग्धभावमुपगतो रामस्तत्रैव कुटीरनिर्माणाय लक्ष्मणं निर्दिदेश[१७०]।

अस्मादेव स्थानाद् दशग्रीवः सीतामपजहार[१७१]।

पञ्चवट्या अभिज्ञानसम्बन्धे समीक्षकैरुद्घोषितम् - वर्तमान-नासिकप्रदेशाद् विंशतिक्रोशान्तरालेन (२४ मील) गोदावरीतटे पञ्चवट्याः स्थितिरासीत्। पञ्चवट्यामेव लक्ष्मणः शूर्पणखायाः नासिकां कर्णौ च चकर्त। सम्भवतोऽस्मादेव कारणात् स्थानमिदं नासिकनाम्ना प्रसिद्धं बभूव। नासिकनगरस्य स्थितिर्नासिकरोडस्थानात् पश्चिमदिशि योजनमात्रं गोदावरीतटे वर्तते।

## (६) तपनवनम् -

तपतीसंवरणनाटके कविना वर्णितम् -

कुरुवंशीयाः राजानो मृगयायै तपनवनमागच्छन्ति स्म[१७२]। तपन-वनस्य स्थितिरुत्तरकुरुजनपदे हिमालयक्षेत्रे कविना कल्पिता। अस्मिन् क्षेत्रे वामनरूपधारिणोर्विष्णोः कल्याणवामननाम्ना प्रसिद्धं मन्दिरमवर्तत। अत्र भगवान् भास्करो (तपनः) वामनमाराध्य लोकत्रय-प्रकाशनसामर्थ्यमलभत।

गढ़वालमण्डले देवप्रयागक्षेत्रे रघुनाथमन्दिरस्य पृष्ठभागे स्वल्पीयस्यामेकस्यां कन्दरायां वामनगुहायां वामनरूपधारिणः विष्णोः प्रतिमा प्रतिष्ठिता वर्तते। लोके प्रसिद्धिरत्रेदृशी, यद् देवप्रयागेऽसुरराजो बलिर्यज्ञमतनुत। तस्य यज्ञस्य विध्वंसाय भगवान् विष्णुर्वामन-रूपेणाऽवततार। अत्र देवप्रयागं परितो वनं कल्याणवामनमन्दिरभावात् तपनवनमित्यप्युच्यते। प्राचीनभौगोलिकसाहित्ये देवप्रयागग्राम उत्तरकुरुषु समवस्थितः प्रसिद्धः।

## (७) नैमिषारण्यम् -

प्राचीनसाहित्ये नैमिषारण्यमतिपवित्रं तीर्थस्थानं निर्विघ्नतपःसंसिद्धिक्षेत्रं प्रथितं बभूव। तीर्थेष्वन्यतमस्याऽस्य महत्त्वं लोके समादरणीयममन्यत[१७३]। अस्मिन् प्रदेशे पत्रपुष्पफलसमृद्धियुतानाम-नोकहानां सर्वदा प्राचुर्यमविद्यत। जलानि चाऽपि न कदापि

शुष्कतामवापुः। अतो मुनयोऽत्र सर्वेषु कालेषु यज्ञान् सम्पादयन्ति स्म[१७४]। महतां यज्ञानां सम्पादनाय नरपतयः सम्राजोऽत्र समायान्ति स्म।

दिङ्नागेन वर्णितम् -

अश्वमेधयज्ञसम्पादनाय रामो नैमिषारण्यं ययौ[१७५]।

कालिदासोऽपि लिलेख -

प्रतिष्ठानपुरात् समागत्य पुरूरवाः नरपातिर्नैमिषारण्ये यज्ञमतनुत। तदैव तस्योर्वश्याः वियोगो बभूव। अन्यस्मिन् कस्मिंश्चिदपि काले न कदाचिदप्यसौ प्रियायाः वियोगमाप्नोत्[१७६]।

वानप्रस्थजीवनं व्यत्येतुं सुदूरप्रदेशेभ्योऽपि नरपतयोऽत्र निःश्रेयसाय समागच्छन्ति हम[१७७]।

नैमिषारण्यवासिनस्तपस्विनो मुनयो नैमिषीया इति प्रसिद्धाः बभूवुः। प्रभावशालिनां तेषां मुनीनां विचारमात्रेणैव सर्वे पदार्थाः प्रत्यक्षरूपेण समुपस्थिताः भवन्ति स्म[१७८]। दिङ्नागेनाऽत्र वनमध्ये गोमतीसरित्प्रवाहो वर्णितः[१७९]।

नैमिषारण्यस्याऽभिज्ञानमसन्दिग्धमेव। लक्ष्मणपुर (लखनऊ) स्टेशनादुत्तरपश्चिमदिशि नवयोजनमात्रं सीतापुराच्च पञ्चयोजनमात्रं बालामऊमार्गे नैमिषारण्य (नीमसार) रेलवेस्टेशनं विद्यते। तन्निकटमेव नैमिषारण्यमतिपवित्रं तीर्थं सकलजनसमादरणीयं जगन्मान्यं वर्तते।

## (८) कुमारवनम् -

कालिदासो विक्रमोर्वशीयनाटके कुमारवनमुल्लिलेख। गन्धमादनपर्वतक्षेत्रे मन्दाकिनीसमीपमरण्यस्याऽस्य स्थितिः कविना सङ्केतिता। अथ च पुराणेषु प्रसिद्धिरस्ति यदिदं वनं शिवसुतस्य कुमारकार्तिकेयस्य संसिद्धिक्षेत्रमविद्यत। ब्रह्मचारिणा भगवता कार्तिकेयेन स्त्रीणां प्रवेशोऽत्र निषिद्धः[१८०]। पुरूरवसो रोषमानमवाप्ता उर्वशी वनमेतत् प्रविष्टा कुमारकार्तिकेयस्य शापवशाल्लतारूपेण परिणता। तदनन्तरं सङ्गम-

नीयमणिप्रभावात् सा पुनः प्रियेण सङ्गता।

विजयेन्द्रमाथुरमहोदयेन ऐतिहासिकनामावलीग्रन्थे सम्पूर्ण-कूर्माञ्चलमेव कुमारवनं प्रोक्तम्। परन्त्विदं विक्रमोर्वशीयनाटकप्रोक्तात् कुमारवनाद् भिन्नमेव प्रतिभाति। नाटकस्याऽस्य कुमारवनं गन्धमादनगिरिणा मन्दाकिनीसरिता च सम्बद्धं गढ़वालमण्डले भवितव्यम्। मन्दाकिनीसरित् केदारनाथशिखरादुपरिवर्तिन्याः हिमान्याः प्रभवमासाद्य रुद्रप्रयागे अलकनन्दया सङ्गच्छते। अतोऽत्रैव कुत्र-चिन्मध्ये कुमारवनस्य स्थितिः सम्भावनीया।

## (९) वेणुवनम् -

प्रतिज्ञायौगन्धरायणनाटके भासो वेणुवनमुल्लिलेख। बालुकातीर्थे यमुनामुत्तीर्य वेणुवनं प्रारभते[१८१]। वेणुवनानन्तरं नागवनं प्रति मार्गो वर्तते[१८२]। नागवने नीलवर्णो गज इति समाचारमुपलभ्योदयनो वेणुवनमतिक्रम्य नागवनं गन्तुं निश्चिकाय।

प्राचीनवर्णनैरभिज्ञायते यत्तस्मिन् युगे वत्सजनपदात् कुण्डिनपुरगामिनि मार्गे नर्मदोत्तरणस्थानं बालुकातीर्थनाम्ना प्रसिद्ध-मवर्तत। तदनन्तरं वेणुवनं (वेणूनां वनम्) तदग्रे च नागवनमविद्यत।

महावंशग्रन्थे वर्णनमुपलभ्यते -

राजगृहे कैमारपर्वतोपत्यकायां सरितमुभयतो वेणूनां वनमस्ति। वनमिदं पार्थिविन बिम्बसारेण भगवते बुद्धाय समर्पितम्[१८३]।

परन्तु महावंशवर्णितं वेणुवनं प्रतिज्ञायौगन्धरायणवर्णितवेणुवनाद् भिन्नमेव सम्भावनीयम्। यतो भासेन वेणुवनस्थितिर्नर्मदां तीर्त्वा दक्षिणदिग्वर्तिनी प्रोक्ता।

## (१०) नागवनम् -

प्रतिज्ञायौगन्धरायणनाटके नागवनस्याऽप्युल्लेखो बभूव। नागवने नीलगजोपलब्धिसमाचारमुपलभ्य वत्सराज उदयनो बालुकातीर्थे नर्मदामुत्तीर्य वेणुवने परिवारमावास्य नागवनं प्रति प्रातिष्ठत। वर्णनैः

प्रतीयते सुविस्तृतोऽयं मार्गः सैन्यप्रयाणयोग्योऽवर्तत।

नाटककारेण नागवनस्थितिः नर्मदायाः दक्षिणतः कतिपययोजन-विप्रकृष्टान्तरालवर्तिनी कल्पिता[१८४]। अतो वनमिदं नर्मदायाः दक्षिणतो योजनत्रयं सम्भावनीयम्। एतावन्मार्गोत्क्रमणमश्वारूढायोदयनाय न दुष्करमासीत्।

## (३) सरांसि

आलोच्यरूपकेषु केवलं द्वयोः सरसोर्वर्णनानि समुपलभ्यन्ते - मानससरसः पम्पासरसश्च।

मानससरसः स्थितिः सुदूरोत्तरवर्तिनि हिमालये पम्पासरसश्च सुदूरे दक्षिणभारते वर्तते।

### (१) **मानससरः -**

कैलासपर्वतश्रेण्यां स्थितं मानससरः[१८५] पार्वतीपरमेश्वरयोर्वर्तते प्रियतरा मनोरञ्जनी विहारभूमिः। सरसस्तस्य वैशिष्ट्यद्वयं कविभिर्वर्णितम् - कमलानि हंसाश्च। मानससरसि स्वर्णकमलानि विकसन्ति, सलिले चाऽस्मिन् हंसाः निवसन्ति[१८६]।

वर्षर्तुप्रारम्भे राजहंसानां मानसं प्रत्युत्सुकानां रुचिकराणि कवित्वसम्भृतानि वर्णनानि प्राचुर्येण साहित्ये समुपलभ्यन्ते। शरदृतुप्रारम्भे ते राजहंसाः मानसात् समतलभूमिभागेषु दक्षिणदिग्वर्तिषु निवर्तन्ते। कालिदासो लिलेख -

वर्षर्तौ मानसोत्काः हंसाः क्रौञ्चरन्ध्रमार्गेणोत्पतन्तः कैलास-गिरिमुल्लंघ्य तत्सरः प्राप्नुवन्ति[१८७]। मानसलक्ष्यास्ते ह्यलकापुरीं यावन्मेघानां सहायका अपि भवन्ति[१८८]।

कुलशेखरवर्मणाऽपि तथा वर्णितम्[१८९]।

वर्षर्तौ हंसाः मानससरः प्रयान्तीति प्रसिद्धिः। मूरक्राफ्ट-महोदयेनाऽत्र वैज्ञानिकरूपेण विवेचनं विहितम्। तेन प्रोक्तम् - वर्षर्तौ नदीनां जलानि तीराण्युल्लंध्य सुदूरं यावत् प्रसरन्ति। अनेन हंसाना-

माहारस्थलान्याच्छाद्यन्ते। तस्मिन् समये मानससरसस्तटवर्तिषु शिलातलेषु तदन्तःसलिलेषु च ते स्वकीयमाहारं प्राप्नुवन्ति[१९०]।

भासेन मानससरसः स्थितिरुत्तरकुरुषु प्रदर्शिता। अत्युच्छ्रितेषु हिमालयक्षेत्रेष्ववस्थितमिदं सरः। तन्निकटं वर्तते मन्दराचलः। भासेन वर्णितम् -

एको विद्याधरः प्रातःसमयमुत्तरकुरुषु व्यतियाप्य मानससरसि स्नानं करोति। तदनन्तरं मन्दराचलकन्दरासु यौवनविलासाननुभवति[१९१]।

मानससरसः स्थितिर्वर्तमानकाले सुनिश्चिता। त्रिविष्टपदेशे स्थितमिदं सरः समुद्रधरातलात् पञ्चदशसहस्रसम्मितफीटो (१५००० फीट) च्छ्रितायां भूमौ विस्तीर्णम्। एकतस्तत्र वर्तते कैलासगिरिरपरतश्च मान्धातृपर्वतः। समीपमेवैकोऽन्यो वर्तते विशालो जलाशयो राक्षसतालः। मानससरस आयामः पञ्चदशमीलकमात्रं विस्तारश्चैकादशमीलकमात्रं वर्तते। अष्टफलकस्याऽस्य परिधिर्वर्तते पञ्चषष्टिमीलकमात्रम्।

भारतीयजनानामिदं सरः परमं पवित्रं तीर्थमस्ति। पूर्वं तावदत्र भारतीयास्तीर्थयात्रिणो भक्तजनाः पर्यटकाश्च प्रचुरसंख्यासु समागच्छन्ति स्म। सरसि स्नात्वा परिक्रम्य, कैलासदर्शनञ्च विधाय ते परमपुण्यभाजो भवन्ति स्म। परं त्रिविष्टपे चीनदेशाधिकारवर्तिनि सञ्जाते तीर्थयात्रेयं समाप्तेति वा सीमितेति वा सञ्जाता। वर्तमानसमये सीमितसंख्यासु जनाः विशिष्टानुमतिपत्रमधिगम्यैव मानसयात्राधिकारिणो भवन्ति।

### (२) पम्पासरः -

पम्पासरसः स्थितिर्दक्षिणभारते दण्डकारण्ये मुञ्जवतः (ऋष्यमूकस्य) पर्वतस्योपत्यकायामस्ति[१९२]। सरस्यस्मिन् पुण्डरीकनीलोत्पलतामरसादीनि प्राचुर्येण विकसन्ति मल्लिकाक्षाश्च बहुशस्तरन्ति[१९३]। पम्पासरःसन्निकटमेव मातङ्गमुनेराश्रमो विद्यते[१९४]।

वर्तमानसमयेऽपि भारते पम्पासर एतन्नाम्नैव जनैर्ज्ञायते। सरसोऽस्य संस्थितिर्महाराष्ट्रराज्यस्य वेलारीजनपदे वर्तते। हम्पीनगरस्योत्तरस्यां पम्पानाम्नी सरिदस्ति। तुङ्गभद्रासरितः सहायिकेयं सरिदनागुण्डीपर्वतमालाभ्योऽष्टमीलकमात्रमृष्यमूकपर्वतात् प्रभवति। अस्योत्तरस्यां दिशि विशालाकारः सरोवरः पम्पासर इत्युच्यते। परमपवित्रतीर्थरूपेण प्रसिद्धस्याऽस्य सरसस्तीरेऽनेकानि मन्दिराणि भक्तजनैर्निर्मापितानि।

वर्तमानसमये पम्पासरोवरस्य दैर्घ्यं शतद्वयफीटपर्यन्तं विस्तारश्च पञ्चविंशतिफीटमात्रमवलोक्यते। परन्तु प्राचीनसाहित्येऽस्य दैर्घ्यविस्तारौ विपुलतरौ वर्णितौ।

बिज्जिकया कौमुदीमहोत्सवनाटके पम्पासरोवरस्य स्थितिर्विन्ध्यवासिन्याः देव्याश्चण्डिकायाः मन्दिरस्य सन्निकटं वर्णिता[१९५]। विन्ध्यवासिन्याः मन्दिरमिदं काशीप्रयागमध्यवर्तिन्यां धरण्यां मिर्जापुरजनपदे वर्तते। परन्त्वत्र न कस्याऽपि पम्पासरोवरस्य चिह्नमात्रमप्यवलोक्यते।

इम्पीरियलगजेटियरे विन्ध्याचलसन्निकटं कस्याऽपि पम्पापुरस्याऽवशेषाणामुल्लेखोऽस्ति। नगरमिदं कस्मिन्नपि समये भारशिवन...रपतीनां राजधान्यासीत्। सम्भवतस्तस्मिन् युगेऽत्र कोऽपि जलाशयः पम्पासरोनाम्ना प्रसिद्धो भवेत्, कालान्तरेण च शुष्कताङ्गतः[१९६]।

## (४) जलनिधयो द्वीपाश्च

संस्कृतरूपकपर्यावरणप्रसङ्गेषु समुद्राणां वर्णनानि न प्राचुर्येण समुपलभ्यन्ते। कविभिः पूर्वपश्चिमसमुद्रौ समुल्लिखितौ। समुद्रयात्राणां सङ्केताः कुत्रचिद् यत्र तत्र संलक्ष्यन्ते। सिंहलद्वीपाद् वत्सदेशं प्रति प्रस्थितः सिंहलराजकन्याधिष्ठितः पोतः सामुद्रिकझञ्झावातेनाहतः समुद्रे निमग्नः। कौशाम्बीनगरव्यापारिणामेकः पोतस्तस्माज्जलप्रदेशात् संतरन् प्रगच्छन्नासीत्। ते व्यापारिणः सिंहलराजकन्यां रत्नावलीं समुद्र-

सलिलादुद्धृत्य कौशाम्बीमानीय यौगन्धरायणाय समुपाहरन्[१९७]।

मुरारिकविनाऽनर्घराघवनाटके समुद्रतटवर्तिन्याः भुवो वर्णनानि कृतानि[१९८]। अनेकेषु नाटकेषु समुद्रमुत्तीर्य रामस्य लंकागमनं कविभिर्वर्णितम्।

कालिदासकृतिषु तस्मिन् युगे समुद्रमार्गैर्भारतवर्षस्य ह्यन्यदेशैः सह व्यापारिकसम्बन्धानां संकेताः समुपलभ्यन्ते। सुदूरदेशेभ्यः समुद्रपारीयेम्यः क्रेयविक्रेयवस्तून्यादाय पोताः समुद्रमार्गैः भारतवर्षमागच्छन्ति स्म भारतवर्षाच्च प्रयान्ति स्म व्यापारिकवस्तून्यादाय। अभिज्ञानशाकुन्तलनाटके कालिदासेन नौव्यसनविपन्नस्य समुद्रव्यवहारिणो धनमित्रस्य वर्णनं कृतम्[१९९]। प्राचीनभारतीयसाहित्ये समुद्रयात्राणां बहूनि वर्णनान्युपलभ्यन्ते।

आलोच्यनाटकेषु समुद्रवर्णनानि प्रायशः पौराणिककल्पनाप्रसूतानि सन्ति। अतोऽत्र समुद्राणां यथार्थस्थितिस्वरूपादीनां बोधो नातिसुकरः। तथापि तान्यनुसृत्य समुद्रवर्णनानां सङ्केतोऽत्र प्रस्तोतुमुचितः।

पौराणिकवर्णनान्यनुसरद्भिर्नाटककारैः समुद्राणां गणना प्रस्तुता[२००]। ते च सप्त सन्ति - लवणमधुसुरासर्पिर्दुग्धदधिजलसागराः[२०१]। परं समुद्राणामेतेषां स्थितिस्वरूपादीनां बोधो नाटकमाध्यमेन न सम्भवः। नाट्यकृद्भिर्वर्णितम् -

भगवान् विष्णुः समुद्रमधिशेते। धराधारकः शेषः कच्छपेन धार्यते, कच्छपश्च समुद्रेण[२०२]।

समुद्रमन्थनसम्बन्धिनी पौराणिकी कथा प्रायशो नाट्यकृद्भिः सङ्केतिता। भगवतो विष्णोरादेशेन देवैर्दानवैश्च समुद्रमन्थनं विहितम्। राजशेखरेण समुद्रमन्थनसमुद्भूतानि कानिचिद् रत्नानि वर्णितानि। तानि च सन्ति - इन्दुलक्ष्मीमदिराकौस्तुभपारिजातैरावताप्सरोधन्वन्तर्यादीनि रत्नानि[२०३]। पौराणिककथासु समुद्रमन्थनोद्भूतानां चतुर्दश रत्नानां वर्णनानि समुपलभ्यन्ते[२०४]।

समुद्रस्याऽम्भसि कविभिरन्येषामपि वैशिष्ट्यानां प्रदर्शनं विहितम्। अगस्त्यो मुनिरेकस्मिन्नेव चुलुके समुद्रमपिबत्। बाडवाग्निना समुद्रजलभक्षणाद्धेतोः सागरोऽयं न वेलोल्लंघनं कुरुते[२०५]। सगरात्मजैरवदीरितस्याऽस्य वृद्धिः सञ्जाता। भगीरथो भागीरथीमत्र समुद्रमानयत्[२०६]। सरितां पत्युः समुद्रस्य गङ्गायमुने द्वे भार्ये स्तः[२०७]। त्रयस्त्रिंशतो देवकोटीनामत्र निवासः[२०८]।

परितः समुद्रवेष्टिताः भूभागाः द्वीपा उच्यन्ते। प्राचीनकाले भारतीयाः बहुसंख्यकैर्द्वीपैः परिचिता आसन्। तैश्च तेषां नियमितसम्बन्धोऽवर्तत। यातायातसम्बन्धाः नाटकेषु बहुधा समुपलभ्यन्ते[२०९]।

द्वीपसम्बन्धिनी ज्ञातव्यसामग्री यद्यप्यत्र नाटकेषु न सुस्पष्टा, तथापि केषाञ्चिद् द्वीपानां नामानि खलु कविभिर्लिखितानि। रत्नावलीनाटिकायां सिंहलद्वीपस्योल्लेखो वर्तते। सिंहलद्वीपराजसुता रत्नावली वत्सराजस्योदयनस्य भार्या बभूव। द्वीपोऽयं वर्तमानसमये लङ्काद्वीपनाम्ना परिचीयते। जनपदप्रकरणे द्वीपस्याऽस्य विस्तरेण विवेचनं कृतमस्ति।

राजशेखरः कर्पूरद्वीपमवर्णयत्। कर्पूरद्वीपात् समागतस्य वनस्पतिवैज्ञानिकस्य प्रयोगैर्विनैव ऋतुं माधवीलतामण्डपं रक्तवर्णपुष्पैः समाच्छन्नमभवत्[२१०]। कर्पूरद्वीपस्य (श्वेतद्वीपस्य) वर्णनं कथासरित्सागरेऽपि समुपलभ्यते। परन्तु वर्तमानसमयेऽस्य द्वीपस्य भौगोलिकपरिचयो नैव सम्भाव्यते।

---

## सन्दर्भ ग्रन्थ


१. काव्यमीमांसा ९२.१६-१७
२. बालरामायण ७.१२
३. वही पृ० ४४३
४. मालतीमाधव पृ० ३८०-३८१
५. वही ९.७
६. वही पृ० ३८०-३८१
७. वही ९.७
८. महाभारत: भीष्मपर्व ९.११
९. बालरामायण पृ० ३५५
१०. प्रियदर्शिका पृ० १४
११. बालरामायण १.२८
१२. विद्युद्दाम्ना मेघराजीव विन्ध्यम्।
मालविकाग्निमित्रम् ३.२१
१३. रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णाम्।
मेघदूत-पूर्वमेघ श्लोक - २०
१४. जे० आर० ए० एस० (१९७४) पृ० २५८,
पुराणविमर्श पृ० ३४२
१५. रामायण किष्किन्धाकाण्ड ४१.१९-२०
१६. उच्चैः शिरस्त्वाज्जितपारियात्रम्। रघुवंश १०.१६
१७. प्राचीन भारत का भौगोलिक स्वरूप पृ० २२
१८. आर्केओलोजिकल सर्वे रिपोर्ट पृ० १७.२५-२६
१९. दी ज्योग्राफिकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल
इन्डिया पृ० १९६
२०. एपिक इन्डिया पृ० २७६
२१. प्राचीन भारत का भौगोलिक स्वरूप पृ० २२
२२. स्टडीज इन इन्डियन एन्टिकिटीज पृ० १२०

२३. रामायण युद्धकाण्ड २७.७-९
२४. निःशेषविक्षालितधातुनाऽपि
वप्रक्रिया ऋक्षवतस्तटेषु।। रघुवंश ५.४४
२५. कालिदास का भारत भाग १ पृ० ३२
२६. दी ज्योग्राफिकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० ११९
२७. विष्णुपुराण २.३.११
२८. भारत की मौलिक एकता पृ० ४०
२९. पुराण-विमर्श १९६५
३०. नैषधीयचरितम् १०.२४
३१. रघुवंश ४.४३
३२. ऐतिहासिक नामावली पृ० ७२८
३३. स्टडीज इन इन्डियन एन्टीकिटीज पृ० १०९
३४. काव्यमीमांसा ८४.२६-२७
३५. सुभद्राधनञ्जय पृ० १६८
३६. रघुवंश ४.५२-५८
३७. सुभद्राधनञ्जय पृ० १६८
३८. अनर्घराघव ७.९४
३९. बालरामायण ६.५६
४०. भारतभूमि पृ० ९०
४१. ऐतिहासिक नामावली पृ० ८०२
४२. इन्डिया इन कालिदास पृ० ११-१२
४३. बालरामायण ६.५६, १०.५६
४४. महाभारत-वनपर्व ५.३
४५. बालरामायण १०.१४
४६. कर्पूरमञ्जरी १.५, बालरामायण १०.१४,
सुभद्राधनञ्जय ३.८
४७. मलयतरून्मूलिता चन्दनलता। अभिज्ञानशाकुन्तल पृ० ३१६
४८. यास्यावो मलयस्य चन्दननगान् - मध्याह्ननिद्रासुखम्।
अविमारक ४.१०

४९. आमूलयष्टेः फणिवेष्टितानां सच्चन्दनानां जननन्दनानाम्।
कक्कोलकैलामरिचैर्युतानां जातीतरूणां स च जन्मभूमिः।।
यस्योत्तमां मौक्तिककामधेनुमुपत्यकामर्चति ताम्रपर्णी।
रत्नेश्वरो रत्नमहानिधानं कुम्भोद्भवस्तं मलयं पुनाति।।
काव्यमीमांसा पृ० २२५

५०. रघुवंश ४.४६-५१,

५१. सुभद्राधनञ्जय पृ० ४०.

५२. उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्।।
शिशुपालवध ४.२०

५३. अक्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।
पूवापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः।। कुमारसम्भव १.१

५४. काव्यमीमांसा ९६.१-४

५५. बालरामायण ७.२९

५६. गौरीगुरोः पावनाः। अभिज्ञानशाकुन्तलम् ६.१७

५७. मुद्राराक्षस १.२३

५८. हनूमन्नाटक १३.२३

५९. हिमगिरेरुपत्यकारण्यवासिनः काश्यपसन्देशमादाय।
अभिज्ञानशाकुन्तल पृ० ३३५

६०. प्रतिमानाटक पृ० १३७

६१. वत्स्यामि तेषु हिमवद्गिरिकाननेषु
दीप्तैरिवनौषधिवनैरुपरञ्जितेषु।। प्रतिमानाटक ५.११

६२. क्रीडार्यं हिमवद्गुहासु चरिता दृष्टिश्च संलोभिता।
अविमारक ४.१०

६३. रामायण किष्किन्धाकाण्ड ७३.२

६४. महाभारत अनुशासनपर्व अध्याय - १९

६५. महाभारत-वनपर्व-अध्याय - १६२-१६४

६६. अनर्घराघव ७.४७, रघुवंश ४.२७

६७. कुमारसम्भव ४.२२-५९
६८. भूयो मन्दरकन्दरान्तरतटेष्वामोदितं यौवनम्।
अविमारक ४.१०
६९. रामायण - किष्किन्धाकाण्ड - ७३.२
७०. विक्रमोर्वशीय पृ० २१३
७१. वही पृ० २१४
७२. पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः। विष्णुपुराण २.२.१६
७३. यद् बदर्याश्रमं पुण्यं गन्धमादनपर्वते। विष्णुपुराण २.२.१७
७४. स चैत्ररथमासाद्य कालकूटमतीत्य च।
हिमवन्तमतिक्रम्य प्रययौ गन्धमादनम्।। महाभारत आदिपर्व
७५. कुमारसम्भव ८.४६-४७
७६. अनर्घराघव पृ० ३४०
७७. काव्यमीमांसा ७३.२२
७८. रामायण - किष्किन्धाकाण्ड - ७३.२
७९. वही ७३.२२
८० महाभारत-वनपर्व १४४-१५६
८१. ब्रह्माण्डपुराण अध्याय ५१
८२. विक्रमोर्वशीयम् पृ० ८७
८३. तस्योत्सङ्गे प्रणयिन इव.....अलकाम्। पूर्वमेघ - ४६
८४. कैलासनाथमनुसृत्य निवर्तमाना। विक्रमोर्वशीय १.४
८५. हेमकूटस्तु महान् कैलासो नाम पर्वतः।
महाभारत - भीष्मपर्व ६.४१
८६. हिमवान् हेमकूटश्च निषधश्चाऽस्य दक्षिणे।
विष्णुपुराण २.२२०
८७. दी ज्योग्राफिकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० ७५
८८. जे० ए० एस० बी० (१९२५) मृ० ३१४

८९. हेमकूटो नाम किंपुरुषपर्वतस्तपःसंसिद्धिक्षेत्रम्। यत्र -
स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः।
सुरासुरगुरुः सोऽयं सपत्नीकस्तपस्यति।।
अभिज्ञानशाकुन्तल ७.९
९०. एतस्मिन् हेमकूटशिखरे। विक्रमोर्वशीयम् पृ० १५६
९१. वराहपुराण अध्याय ८२
९२. दी ज्योग्राफी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० ७५
९३. अनर्घराघव पृ० ३४६
९४. वही ७.५५-५६
९५. बालभारतम् २.१९८
९६. महाभारत शान्तिपर्व - अध्याय ३३५-३३६
९७. मत्स्यपुराण अध्याय ११३
९८. जे० ए० एस० बी० (१९२५) पृ० ३६१
९९. कुमारसम्भव ८.२२-५९
१००. तैत्तिरीयारण्यक १.७
१०१. भूगोल पत्रिका (मई-जून-जुलाई १९३२) वैदिक भूगोल पृ० १
१०२. ऐतिहासिक नामावली पृ० ७५८
१०३. दी ज्योग्राफी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० ८९
१०४. भारत की भौगोलिक एकता पृ० ३९
१०५. महावीरचरितम् २.१७, हनूमन्नाटक १.४२
१०६. भिन्नो मद्बाणवेगेन क्रौञ्चत्वं वा गमिष्यति।
प्रतिज्ञायौगन्धरायण ५.१२
१०७. पूर्वमेध - ५७
१०८. दी ज्योग्राफिकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० १०४
१०९. कादम्बनी - अक्टूबर १९६२
११०. बालरामायण ७.३९

१११. पक्षच्छिदा गोत्रभिदात्तगान्धाः शरण्यमेनं शतशो महीध्राः।।
रघुवंश १३.७
मैनाकमम्भोनिधिबद्धसाख्यम्। कुमारसम्भव १.३०
स चैको मैनाकः पपसि मम मग्नो निवसति।
प्रसन्नराघव ५.५३
११२. महाभारत-वनपर्व-अध्याय ११५
११३. कूर्मपूराण अध्याय ३६, मार्कण्डेयपुराण अध्याय ५७
११४. भूगोल पत्रिका - भुवनकोषाङ्क पृ० ४
दी ज्योग्राफिकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० ७३
११५. रघुवंश १३.७
११६. अनर्घराघव पृ० २७५, अभिषेकनाटक पृ० ८१
११७. अनर्घराघव पृ० ३२०
११८. ऐतिहासिक नामावली पृ० ९८१
११९. बालरामायण पृ० ११५
१२०. परभृतजुष्टं पद्मषण्डाभिरामं
सुरुचितरषण्ड तोयदाभं चित्रकूटम्।। अभिषेकनाटक २.२६
१२१. भूगोल पत्रिका - भुवनकोषाङ्क पृ० १३
१२२. मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम्।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः। रघुवंश ४.५९
१२३. रघुवंश ४.६०
१२४. कालिदस का भारत -भाग १ पृ० ३४
१२५. प्राचीन भारत पृ० ११८
१२६. बालरामायण पृ० २४, ४४४
१२७. अनर्घराघव ७.९४
१२८. अनर्घराघव पृ० ३७२
१२९. वही ७.१००
१३०. बालरामायण १०.५२
१३१. महावीरचरित पृ० १७२
१३२. अनर्घराघव पृ० ३६६

१३३. रघुवंश १३.२६
१३४. वहीं १३.३०
१३५. जे० आर० ए० एस० (दी ज्यग्राफी आफ रामाज एक्जाइल-१८९४) पृ० २५६-२५७
१३६. दी ज्योग्राफिकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० १२३
१३७. कालिदास ग्रन्थावली - अभिधानकोष पृ० १४७
१३८. महावीरचरितम् ४.९
१३९. वही पृ० १८८
१४०. ऐतिहासिक नामावली पृ० १०८
१४१. उत्तररामचरित पृ० ७६
१४२. महावीरचरित पृ० १६५
१४३. बालरामायण पृ० ३६०
१४४. उत्तररामचरितम् पृ० ४३४
१४५. हनुमन्नाटक पृ० ४८
१४६. एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी।
मन्दाकिनी भाति नगोपकण्ठे...............।। रघुवंश १३.४७
१४७. एतावन्मात्राणि योजनानि गत्वा क्रोशमात्रेण मदगन्धीरपर्वतमनासाद्य। प्रतिज्ञायौगन्धरायण पृ० १६
१४८. मालतीमाधव पृ० ३२
१४९. वही पृ० ३६०
१५०. वही पृ० ३१
१५१. रत्नावली पृ० ४२
१५२. अग्निपुराण ११३.३-४
१५३. श्रीमद्भागवतपुराण ५.१८.१६
१५४. ऐतिहासिक नामावली पृ० ४८८
१५५. उत्तररामचरितम् पृ० ६६
१५६. बालरामायण ६.४५
१५७. उत्तररामचरितम् पृ० ६६
१५८. महावीरचरित पृ० १७८

१५९. जे० आर० ए० एस० (१८९४) पृ० २४२

१६०. महावीरचरित पृ० १७९

१६१. महावीरचरित पृ० ४९

१६२. अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां बाल्मीकिपार्श्वादिह पर्यटामि।।
उत्तररामचरित २.३

१६३. धर्मासनाधिकारिणि रामदेवे। अनर्घराघव पृ० ३६५

१६४. रघुवंश १२.४२, १३.२२, उत्तररामचरित पृ० ६७

१६५. भोः भोः जनस्थाननिवासिनः शृण्वन्तु भवन्तः, बलादेव
दशग्रीवः सीतामादाय गच्छति। क्षात्रधर्मे यदि स्निग्धः,
कुर्याद् रामः पराक्रमम्। प्रतिमानाटक २.१७

१६६. भगवत्यो जनस्यानदेवताः! एषा वः सीता प्रणमति।
अनर्घराघव पृ० ३६६

१६७. पश्यामि च जनस्थानं भूतपूर्वखरालयम्।
उत्तररामचरित २.१७

१६८. आश्चर्यचूडामणि पृ० ६५

१६९. महावीरचरित पृ० १६९

१७०. आश्चर्यचूड़ामणि २.१

१७१. अनर्घराघव पृ० ३६५

१७२. तपतीसंवरण पृ० ४९

१७३. कुन्दमाला पृ० १३२.-१३३

१७४. वही ४.६-७

१७५. कुन्दमाला पृ० ६१

१७६. अन्यत्र वैमिषसत्रादवियुक्तोऽहमुर्वश्याः।
विक्रमोर्वशीय पृ० १५७

१७७. निःश्रेयसाय वनमेतदुपाश्रयन्ते। कुन्दमाला पृ० ८१

१७८. प्रतिमानाटक पृ० १३७

१७९. कुन्दमाला पृ० ८१

१८०. स्त्रीजनपरिहरणीयं कुमारवनम्। विक्रमोर्वशीय
पृ० २१४।।

१८१. बालुकातीर्थेन यमुनां तीर्त्वा वेणुवने कलत्रमावास्य।
प्रतिज्ञायौगन्धरायण पृ० १५

१८२. वेणुवनाश्रितेषु गहनेषु नागवनं श्वः प्रयातः स्वामी।
वही पृ० ७

१८३. ऐतिहासिक नामावल्यां ८७३ पृष्ठे
महावंशाद् (५.११५) उद्धृतम्।

१८४. प्रतिज्ञायौगन्धरायण पृ० १६

१८५. बालरामायण पृ० १०

१८६. बालरामायण १०.१५, नागानन्द ५.३६
हेमाम्भोजप्रसवि सलिलं मानसस्याददानः।
पूर्वमेघ - ६६

१८७. मानसोत्काः पतत्रिणः सरसोऽस्मान्नोत्पतन्ति।
विक्रमोर्वशीय पृ० २२३

१८८. आकैलासाद् बिसकिसलयोच्छेदपाथेयवन्तः।
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः।। पूर्वमेघ - ११

१८९. सुभद्राधनञ्जय २.१०

१९०. दी एशियाटिक रिसर्चेज खण्ड - १२,
रिसर्चेज टु मानसरोवर पृ० ४६६

१९१. प्राक्सन्ध्याकुरुषूत्तरेषु गमिता स्नातं पुनर्मानसे।
भूयो मन्दरकन्दरान्तरतटेष्वामोदितं यौवनम्।।
अविमारक ४.१०

१९२. उत्तररामचरित पृ० ७६

१९३. वही पृ० ७६

१९४. महावीरचरित पृ० १८८

१९५. कौमुदीमहोत्सव पृ० ३

१९६. कौमुदीमहोत्सवस्य प्रस्तावना पृ० २८

१९७. रत्नावली - प्रथम अंक

१९८. अनर्घराघव ७.८७

१९९. अभिज्ञानशाकुन्तल - षष्ठ अंक

२००. हनुमन्नाटक १.३२

२०१. बालरामायण पृ० ४५१

२०२. वही ७.३९-४१

२०३. वही ७.३६

२०४. लक्ष्मी: कौस्तुभपारिजातकसुरा: घन्वन्तरिश्चन्द्रमा:
गाव: कामदुघा: सुरेश्वरगजो रम्भादिदेवाङ्गना: ।
अश्व: सप्तमुखो विषं हरिधनु: शङ्खोऽमृतं चाम्बुधे:
रत्नानीह चतुर्दश प्रतिदिनं कुर्यु: सदा मङ्गलम् ।।
मङ्गलस्तोत्र

२०५. बालरामायण ७.१९

२०६. वही ७.१९

२०७. बालरामायण पृ० ४२२

२०८. त्रयस्त्रिंशतो देवकोटीनां वास:.खल्वसौ ।
बालरामायण पृ० ४२२

२०९. हनुमन्नाटक १.१०

२१०. विद्धसालभञ्जिका पृ० ९२

# तृतीयोऽध्यायः

## सरितः सरित्सङ्गमाश्च

| | |
|---|---|
| १. कावेरी | २. गोदावरी |
| ३. गोमती | ४. गोतमी |
| ५. चन्द्रभागा | ६. तमसा |
| ७. तापी | ८. ताम्रपर्णी |
| ९. तुङ्गभद्रा | १०. नर्मदा |
| ११. पयोष्णी | १२. भागीरथी (गंगा) |
| १३. मन्दाकिनी | १४. मालिनी |
| १५. मुरला | १६. यमुना |
| १७. शिप्रा | १८. शोणः |
| १९. सरयूः | २०. सिन्धुः |
| २१ अन्याः सरितः | २२. सरितां सङ्गमाः |

# तृतीयोऽध्यायः

## सरितः सरिताञ्च सङ्गमाः

प्राचीनसंस्कृतरूपकेषु कविभिरनेकाः सरितो वर्णिताः। सामान्यतः सरितो द्वयोर्वर्गयोर्विभज्यन्ते – उत्तरभारतीयाः सरितो दक्षिणभारतीयाश्च सरितः। उत्तरभारतीयस्रोतस्विनीनां प्रभवस्थानानि सामान्यतो हिमगिरिशृङ्खलासु वर्तन्ते। हिमस्याऽत्र सततं द्रवीभावान्नैताः सरितो वर्षर्तुमवलम्बन्ते, परं सदानीरा एवाऽवलोक्यन्ते। परं वर्षर्तुर्नदीष्वत्र प्रभूतानि जलानि वर्धयति। तटानुल्लंघ्य चैताः सुदूरं यावत् प्रसरन्ति।

दक्षिणभारतीयस्रोतस्विनीनामुद्गमस्थलानि वर्तन्ते विन्ध्य-गिरिशृङ्खलाः दक्षिणभारतीयाश्च पर्वतश्रेणयः।

आलोच्यरूपकेषु वर्णितानां नदीनामत्र स्वरूपाणि वर्णक्रमानुसारेण प्रदर्श्यन्ते।

### (१) कावेरी –

दक्षिणभारतवर्तिनी कावेरी सरिदतिपवित्रा पुण्यदायिनी अघमर्षिणी च गण्यते। कार्णाटजनपदात् प्रभवमासाद्येयं सरित् प्रवहन्ती पूर्वसमुद्रे संविलीयते। सरितोऽस्यास्तटवर्तिनीषु भूमिषु नारिकेलपादपाः क्रमुकवृक्षास्ताम्बूलवल्लर्यश्च प्राचुर्येण समुद्भवन्ति[१]। भवभूतिना वर्णितम्–

कावेरीस्रोतस्विनी मलयगिरिं परिवेष्ट्य प्रवहति[२]। प्राचीनसमये काञ्चीकावेरीपत्तने प्रसिद्धे नगरे कावेरीसरित्तटस्थिते अवर्तेताम्। वायुपुराणे कावेरीसरित उद्गमनस्थानं सह्यगिरिरेव प्रोक्तम्[३]।

कावेरीसरितो ह्युद्गमनस्रोतो महीशूरजनपदवर्तिनः कुर्गप्रदेशस्य चन्द्रतीर्थसरो वर्तते। पञ्चसप्तत्युत्तरचतुःशत(४७५)मीलपर्यन्तं

मार्गमतिक्रम्येयं सरिद् बङ्गसागरे (पूर्वसमुद्रे) संविलीना भवति। सम्मेलन-स्थलेऽत्र कावेरीपत्तनाभिधानं प्रथितं नगरं व्यापारकेन्द्रभूतं वर्तते। प्राचीनसमये वर्तमानकालेऽपि तत्रत्यैः शासकैः स्थाने स्थाने सरितमेनां बन्धसेतुभिरलङ्कृत्य कृषिसेचनसाधनानि निर्मापितानि।

कावेरीसरिज्जलं प्राचीनकालादेवाऽतिपवित्रमघविनाशकं पुण्यदायकञ्च गण्यते। सरिदियं दक्षिणभारतगङ्गाऽपि लोके प्रसिद्धा।

## (२) गोदावरी -

प्राचीनसंस्कृतसाहित्ये गोदावरीसरिद् भगवद्रामकथाघटना-भिरनेकाभिरतितरां सम्बद्धा वर्तते। रामायणमहाकाव्ये सरिदियमतिपवित्रा पुण्यदायिनी वर्णिता। अस्यास्तटे पञ्चवटीनाम्नि स्थले रामेण वनवासा-वधौ कुटीरं निर्माय निवासः कल्पितः। अतो लोके सरिदियं दक्षिणगङ्गारूपेणाऽपि प्रथिता बभूव। गोदावरी सरिद् विन्ध्य-शृङ्खलावर्तिप्रस्रवणगिरेरुद्‌भूय[४] जनस्थाने प्रवहति। रामस्य निवासभूता पञ्चवटी गोदावरीसरित्तीरवर्तिनी ह्यासीत्[५]। राजशेखरेण वर्णितम् -

आन्ध्रजनपदभूमिभागे प्रवहन्ती गोदावरी पूर्वसमुद्रेण सङ्गच्छते[६]। सरितोऽस्याः सप्तधाराणां तटवर्तिभूमिभागेषु विशालभव्यशिवममन्दिरस्य वर्णनानि संस्कृतनाट्यकृद्भिः कृतानि[७]। वायुपुराणे गोदावरी सरित उद्गमनस्थानं सह्यगिरिरेव वर्णितमस्ति[८]।

गोदावरीसरिन्नासिकनगराद् विंशतिर्मीलान्तरालेन स्थितस्य सह्य-पर्वतस्योपत्यकासु समवस्थितस्य त्र्यम्बकग्रामस्य सन्निकटं ब्रह्मगिरेः प्रभवति[९]। स्थानादस्मान्नवमीलकल्पं प्रवहन्तीयं स्रोतस्विनी महाराष्ट्रजनपदमान्ध्रजनपदञ्च सिञ्चती पूर्वसमुद्रे (बङ्गसागरे) विलीयते। राजमहेन्द्रीसन्निकटमत्र विशालाकारं सेतुबन्धं निर्मायाऽभियन्तृभिः स्थपतिभिस्तिसृणां कुल्यानां निर्माणं कृतम्।

## (३) गोमती -

कुन्दमालानाटके दिङ्नागो गोमतीं सरितमुल्लिलेख। नैमिषारण्य-

मध्यवर्तिन्याः[१०] अस्यास्तटवर्तिप्रदेशाः प्राकृतिकरामणीयकेन सुशोभमाना अवर्तन्त। कण्टकाच्छन्नक्षुपसङ्कीर्णेष्वस्याः सैकतेषु शुक्तिपुटानि विकीर्णान्युपलभ्यन्ते स्म[११]। स्वच्छनिर्मलमरकतमणिसमेऽस्याः सलिले समुद्भवानां पङ्कजानां सौरभं सर्वत्र प्रासरत्। अथ चाऽत्र राजहंसानां निनादाश्चाऽपि लोकानां कर्णानापूरयन्ति स्म[१२]।

प्राचीनसाहित्ये गोमती सरिदनेकेषु स्थानेषु वर्णिताऽतिपवित्रा प्रणयदायिनी च प्रथिता वर्तते।

गोमतीसरिद् उत्तरप्रदेशस्य पीलीभीतजनपदस्य बीसलपुर-सन्निकटवर्तिनः सरसः समुद्भूय सीतापुरलक्ष्मणपुरजनपदाभ्यां निष्क्रम्य जौनपुरनिकटं गङ्गायां संविलीयते। नैमिषारण्यमत्र प्रसिद्धं तीर्थस्थानं वर्तते। उत्तरप्रदेशस्य राजधानी लक्ष्मणपुरी (लखनऊ) गोमतीतीरवर्तिनी प्रसिद्धा।

## (४) गोतमी -

कालिदासो गोतमीसरितमुल्लिलेख। अस्याः नद्यास्तटवर्ति-भूमिभागेषु तपसि स्थितस्य महामुनेर्विश्वामित्रस्य तपःसाधना देवराजेनेन्द्रेण प्रेषितया मेनकया स्वर्गाऽप्सरसा विनाशिता[१३]।

गोतमीसरितोऽभिज्ञानं स्थितिश्च विचारणीया वर्तते। अस्यास्तटवर्तिनि भूमिभागे सद्योजातां शकुन्तलां परित्यज्य मेनका पुनः देवलोकं गता। अत्र चेयं बालिका कण्वमुनिना दृष्टा स्वतपो-वनञ्चाऽऽनीता। अतो नद्या अस्याः स्थितिः कण्वतपोवनं निकषैव सम्भावनीया। मालिनीसरितः स्थितिरपि तन्निकटमासीदित्यवधेयम्। अतः सम्भावनेयं वर्तते, यन्मालिनीनद्याः काचित् सहायिका स्रोत-स्विन्येव गौतमीनदीनाम्ना लोके प्रसिद्धा बभूव।

महाभारते वर्णनमस्ति, यन्मेनका मालिनीतीरे शकुन्तलां परित्यज्य गता[१४]। अतोऽनुमेयमिदमपि वर्तते, यन्मालिनी नदी एव गोतमीत्यपरा-भिधाना प्रसिद्धाऽवर्तत।

## (५) चन्द्रभागा –

राजशेखरेणोल्लिखितायाश्चन्द्रभागासरितो यथार्थस्थितिनिर्धारणं दुष्करमेव। पञ्चनदप्रदेशस्य प्रमुखैका सरिद् वर्तते चन्द्रभागा (चनाब)। राजशेखरो ह्युत्तरापथस्य[१५] नदीषु चन्द्रभागां नदीं पर्यगणयत्[१६]। परन्तु बालरामायणे राजशेखरो यत्र चन्द्रभागामगणयत्, तत्रोत्तरापथस्य सरितामन्यासां सिन्ध्वादीनामुल्लेखाभावाद् राजशेखरेणोल्लिखिता सा चन्द्रभागा पञ्चनदप्रदेशीयेति न वक्तुं शक्यते। पंढरपुरे (दक्षिणभारते) विद्यमाना भीमा सरिदपि चन्द्रभागेति नाम्ना प्रसिद्धा वर्तते[१७]।

भारतवर्षस्याऽनेकेषु प्रदेशेषु चन्द्रभागाभिधाना अनेकाः नद्यो वर्तन्ते। कोणार्कसन्निकटमेका चन्द्रभागा प्रवहति। सौराष्ट्रस्य पश्चिमोत्तरदिग्विभागेष्वपि वर्तते चन्द्रभागा नदी। ऋषिकेशस्योत्तरस्यामेका चन्द्रभागा सरिद् गङ्गायां विलीयते। परमत्र वर्षतविव सलिलान्यवलोक्यन्ते।

## (६) तमसा –

प्राचीनसाहित्ये तमसा सरित् कविभिर्महत्त्वशालिनी वर्णिता। बाल्मीकेराश्रमस्तमसातीरेऽवर्तत। स्नानार्थं तमसामागतो मुनिर्महाकविव्याधिन हतं क्रौञ्चपक्षिणमेकं ददर्श। प्रियभर्तृवियोगविह्वलां करुणं क्रन्द्रमानां वियति परिभ्रमन्तीं क्रौञ्चीमवलोक्य बाल्मीकिना रामायणरचनाप्रेरणा समधिगता[१८]। तेन गीतम् –

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।

कालिदासोऽवर्णयत् –

अश्वमेधयज्ञं सम्पादयता दशरथेन सरयूतटे तमसातटे च यज्ञार्थं स्वर्णयूपाः स्थापिताः[१९]।

रामेणाऽयोध्यायाः निर्वासिता सीता दशरथमित्रस्य बाल्मीकेराश्रमे किलाश्रयं प्राप्नोत्। अतस्तमसासरितः स्थितिरयोध्यातः नातिविप्रकृष्टा-

न्तरालवर्तिनी कल्पनीया। वर्तमानसमये तमसा (टौंस) सरिदेका फैजाबादसुलतानपुराजमगढ़बलियाजनपदेषु प्रवहन्ती गङ्गायां सम्मिलति। अयोध्यायाः द्वादशमीलमात्रं वर्तति तमसातीरे रामचौराघट्टम्। वनवासाय गच्छन् रामचन्द्रोऽत्र तमसामुत्ततारेति जनश्रुतिः लोके प्रसिद्धा। सम्भवतः तमसा (टौंस) सरिदेवेयं रामायणप्रसिद्धा तपसा सरिद् वर्तति।

भारतवर्षे ह्यन्यासामपि बह्वीनां तमसासरितां स्थितयः समुपलभ्यन्ते। तत्रैका तमसा तु वर्तति मध्यप्रदेशस्य रीवाजनपदे। द्वितीया च मध्यहिमालये विद्यते। हिमालये तमसा (टौंस) नदी उत्तर-काशीजनपदे देहरादूनजनपदे च प्रवहन्ती सिरमौरनाम्नि ग्रामे यमुनया सङ्गच्छते। तिसृष्वप्येतासु सरित्सु बलियाजनपदे गङ्गया सङ्च्छन्ती तमसैव रामायणवर्णिता सा तमसाऽवगन्तव्या, यस्यास्तटे बाल्मीकेराश्रमोऽविद्यत।

## (७) तापी -

संस्कृतनाटकेषु तापी सरिद् यमुनासरित्सहायिकारूपेण कविभिर्वर्णिता[२०]। वायुपुराणे पुराणकारेण वर्णितं यदियं सरिद् विन्ध्य-पादेभ्यः प्रभवति[२१]। विष्णुपुराणे त्वियं नदी ऋक्षपर्वतात् समुद्भूता प्रोक्ता[२२]।

वर्तमानसमये तापीसरितोऽभिज्ञानं ताप्तीसरिता कल्प्यते। दक्षिणभारतस्येयं प्रमुखा स्रोतस्विनी। सूरतनगरस्य सन्निकटमियं सरित् खम्बातबङ्के पश्चिमसमुद्रे (आरब्यसागरे) संविलीयते। किञ्चित्कवोष्णजलत्वादियं नदी ताप्तीति नाम्ना प्रसिद्धा बभूव।

परमियं दक्षिणभारतीया ताप्ती नदी बालरामायणवर्णिततापीनद्याः सर्वथा भिन्नैव प्रतीयते। राजशेखरप्रोक्ता तापी सरिद् यमुनया सङ्गच्छन्ते, परं दक्षिणभारतीया ताप्ती नदी पश्चिमसमुद्रे संविलीना भवति।

वर्तमानसमये काऽपि सरित् तापीति नाम्ना प्रसिद्धा यमुना-

सहायिका न वर्तते। अतो राजशेखरेण वर्णितायास्तापीसरितोऽभिज्ञानं दुष्करं सन्नाद्याऽपि समीक्षकैर्विधातुं सुकरं शक्यम्।

## (८) ताम्रपर्णी -

दक्षिणभारतीयासु सरित्सु ताम्रपर्णी महत्त्वशालिनी प्रसिद्धा वर्तते। यद्यपि नेयं नदी विशाला प्रचुरजलसम्भृता, तथापि लघ्वी सती साहित्येऽतिलोकप्रिया समवलोक्यते।

मलयपर्वतादुद्भूयेयं सरिद् बङ्गसागरेण सङ्गच्छते[२३]। एकस्मिन् प्रसङ्गे राजशेखरेण ताम्रपर्णी स्रोतस्विनी पाण्ड्यजनपदे प्रवहन्ती वर्णिता[२४]। अस्या उत्तरस्यां दिशि वर्तते मलयगिरिः[२५]।

ताम्रपर्ण्यास्तटवर्तिषु गहनेष्वरण्येषु नारिकेलतरवो बाहुल्येन वर्तन्ते[२६]। ताम्रपर्णीजलनिधिसम्मिलनक्षेत्रेषु मौक्तिकानि बाहुल्येन समुपलभ्यन्ते[२७]। कालिदासः प्रदेशेष्वेतेषु मौक्तिकसमुपलब्धेर्मनोमोहकं वर्णनञ्चकार[२८]। कर्पूरमञ्जरीसट्टके कविना वर्णितं यत् ताम्रपर्ण्याः सलिलानि चन्दनकर्पूरमरिचताम्बूलवल्लरीभिः सततं सुरभितानि सञ्जायन्ते[२९]।

वर्तमानसमये ताम्रपर्णी नदी ताम्बरवरीति नाम्ना प्रसिद्धा वर्तते। मलयगिरिशृङ्खलायामगस्त्यकुण्डात् प्रभवमासाद्येयं सरित् पूर्वसमुद्रे विलीयते। विलयस्थानमिदं मन्नाराखातनाम्ना प्रसिद्धमस्ति। अथ चेदं स्थानं मौक्तिानामुपलब्धये मत्स्योद्योगार्थं च प्रसिद्धमस्ति।

## (९) तुङ्गभद्रा -

हनूमन्नाटके नाटककारेण तुङ्गभद्रा सरितो गणना दक्षिण-भारतीयासु नदीषु विहिता[३०]। दक्षिणभारतस्य प्रसिद्धायाः सरितोऽस्याः समुद्भवस्थली वर्तते सह्यपर्वतश्रेणी। तत्र द्वाभ्यां स्थानाभ्यां द्वे धारे प्रवर्तेते तुङ्गधारा भद्रधारा च। द्वयोरेतयोर्धारयोः सम्मिलनेन भवति तुङ्गभद्रा सरित्। तुङ्गभद्रायाः मूलोद्गमनस्थानं गङ्गाकूलमित्य-भिधीयते[३१]।

## (१०) नर्मदा -

प्राचीनसाहित्ये नर्मदा नदी साहित्यकारैः प्राचुर्येण वर्णिता। रेवाभिधानेनाऽपीयं लोके प्रसिद्धा बभूव। लोके सरिदियं प्राचीनकालादेव पवित्रा, पावनी, पुण्यदायिनी ह्यघमर्षिणी च गण्यते। उदयन-सम्बन्धिनाटकेषु भासेनेयं मनोमोहिनी वर्णिता। वत्सजनपद-दक्षिणसीमानिर्धारिणीं सरितमिमामुत्तीर्य वेणुवनमासीत्। तदनन्तरं नागवनं, तदनन्तरञ्च मदगन्धीरगिरिरविद्यत[३२]। वत्सराज उदयनो भ्रमणाय प्रायशो नर्मदादातीरमगच्छत्। उज्जयिनीसैनिकैर्वत्सेशे बन्दीकृते उज्जयिनीञ्च नीते सति वत्सराजस्य वीणा नर्मदातीरे कुशगुल्मसंसक्ता लोकैरवलोकिता[३३]।

कालिदासो नर्मदां बहुधाऽवर्णयत्। सरिदियमग्निमित्रराज्यस्य दक्षिणवर्तिसीमानं बबन्ध। सीमासुरक्षायै दुर्गनिर्मितिरत्रत्यैः शासकैः कारिता, यत्र ह्यन्तपालो नाम शासनाधिकारी नियुक्तोऽवर्तत[३४]। नर्मदामुत्तीर्य दक्षिणभारतस्य सीमानोऽवर्तन्त। मेघस्य मार्गं निर्दिशन् कालिदासोऽवर्णयत् -

आम्रकूटादुज्जयिनीं गच्छन् मेघो मार्गे नर्मदां (रेवाम्) सरितमुत्तरिष्यति[३५]।

राजशेखरो नर्मदां बाहुल्येनाऽवर्णयत् । असुराणां प्रसिद्धा नगरी त्रिपुरी नर्मदातटवर्तिनी ह्यासीत्[३६]।

प्राचीनसाहित्ये शृङ्गारसाभिव्यञ्जने नर्मदासरिदियं कविभिर्विशेषेण स्मृता। रतिसुखप्रदानादेवेयं नर्मदाभिधानेन कविभिर्नर्मदा प्रोक्ता (नर्म रतिसुखं प्रददातीति नर्मदा)[३७]। पौराणिकी कथा प्रसिद्धा यत् कार्तवीर्यार्जुनो नाम नरपतिः सहस्रभुजैर्नर्मदाप्रवाहमवरुध्य प्रियाभिः सहाऽत्र जलक्रीडया चिक्रीड[३८]।

राजशेखरो विन्ध्यगिरिमेव नर्मदायाः प्रभवस्थानं गणयामास। सरिदियं पश्चिमदिशि प्रवहन्ती पश्चिमसमुद्रेण सङ्गच्छते[३९]।

इयमार्यावर्तस्य दक्षिणभारतस्य च सीमाविभाजिकाऽपि वर्तते[४०]। दशार्णजनपदमभिप्लावयन्तीयं प्रवहति[४१]।

वर्तमानभौगोलिकविवरणानि निर्दिशन्ति –

नर्मदा नदी विन्ध्यगिरिशृङ्खलान्तर्गतामरकण्टकपर्वतस्य मेकल-श्रेणीभ्यो निर्गत्य अष्टशतमीलमात्रं प्रवहन्ती भृगुकच्छ (भडौंच) सन्निकटं खम्बातखाते पश्चिमसमुद्रेण (आरब्यसागरेण) सङ्गच्छते।

**(११) पयोष्णी –**

**राजशेखरेण प्रोक्तम्** –

पयोष्णी सरित् कुन्तलजनपदमध्ये प्रवहति[४२]। दक्षिणापथस्य प्रसिद्धं जनपदं वर्तते कुन्तलम्। अत: पयोष्णी सरिद् दक्षिणभारतीया वर्तते।

वायुपुराणे पुराणकारेण वर्णितम् –

पयोष्णी सरिद् विन्ध्यधराधरान्निष्क्रम्य विदर्भजनपदे प्रवहति[४३]। नन्दलाल डे महोदयेन पयोष्णी नदी ताप्तीनद्या: सहायिका पूर्णा-भिधाना सरिदभिमता[४४]। परन्तु पुराणेषु पूर्णा च पयोष्णी च सरिद्द्वयं पृथक्पृथगेव प्रोक्तम्। डे महोदयस्य वचनमिदपि वर्तते, यत् केचन समीक्षका पयोष्णीं गोदावरीसहायिकां पेनगङ्गामभिजानन्ति[४५]। केचन समीक्षकास्तापीं पयोष्णींञ्चाऽभिन्नत्त्वेनाऽभिमन्वते। परन्तु श्रीमद्भागवतपुराणे नद्यावेते पृथक्पृथगेवाऽभिमते[४६]। विष्णुपुराण-स्याऽप्यभिमतमिदमेव यत् तापी च पयोष्णी च सरितौ पृथक् पृथक् स्त:। ऋक्षपर्वतस्तयो: प्रभवस्थानमस्ति[४७]।

**(१२) भागीरथी (गङ्गा) –**

भारतवर्षेऽतिप्राचीनकालादेव भागीरथी सरिदतिपवित्रा पापविनाशिनी मोक्षदायिनी चाऽभिमता। संस्कृतनाट्य-कृद्भिर्विचाराणामेतेषां समर्थनं विहितम्[४८]। एवञ्च भागीरथी (गङ्गा)-संस्कृतिरेव वर्तते भारतीया संस्कृति:। सरिदियं जननीसमा समादरणीया[४९]। गङ्गाजलस्य स्पर्शमात्रैणैव सर्वेषां पापानां प्रक्षालनं

जायते[५०]। पुराणकाराः प्रवदन्ति –

शतेभ्योऽपि योजनेभ्यो गङ्गायाः स्मरणं नामोच्चारणं वा सर्वान् पापान् विनाशयति मुक्तिलोकञ्च प्रापयति[५१]।

भागीरथ्या अवतरणप्रसङ्गे पौराणिकीयं कथा प्रसिद्धा, यदस्या उद्भवो विष्णोश्चरणाङ्गुष्ठाज्जातः। नाट्यकृद्भिरपि कथैषाऽनुसृता[५२]। विष्णुचरणप्रभवमिदं जलं ब्रह्मा स्वकमण्डलौ सञ्जग्राह। इक्ष्वाकुवंशीयो नरपतिर्भगीरथः सुकठोरं तपस्तप्त्वा भागीरथीं भूतलमवतारयामास[५३]। कपिलमुनिकोपेन भस्मीभूतेषु पूर्वजेषु पितॄणामुद्धाराय भागीरथस्तपस्तेपे[५४]। भगीरथतपसा सन्तुष्टः प्रसन्नश्च ब्रह्मा गङ्गाजलमिदं पृथिव्यामुज्जगार[५५]। ततश्च शिवेन शिरसा धृतं पर्वतेषु च प्रवहन् जलमिदं भागीरथीनाम्ना लोके विश्रुतं बभूव।

कपिलमुनेराश्रमोऽयं तस्मिन् स्थाने निश्चीयते, यत्र गङ्गा समुद्रेण सङ्गच्छते। गङ्गासागरनाम्ना प्रसिद्धमिदं स्थानं हिन्दूनां परमं पवित्रं पापविनाशनं तीर्थमवगम्यते।

कविभिर्भागीरथ्याः (गङ्गायाः) अतिमनोरमाणि वर्णनानि प्रस्तुतानि। हिमालयस्य सप्तमे शिखरे शिवस्य मस्तकाद् गङ्गासलिलं स्रवति। काञ्चनपार्श्वमृगास्तत् सलिलं पिबन्ति[५६]। वर्षर्तौ रोधसां भ्रंशाद् रजसां सम्मिश्रणेन कलुषायमानमपि गङ्गासलिलं स्वल्पेनैव कालेन प्रसादमधिगच्छति[५७]।

प्रभवस्थानादारभ्य समुद्रविलयपर्यन्तं गङ्गातीरे तीर्थस्थानानां प्राचुर्यं वर्तते। केषाञ्चन तीर्थानामुल्लेखाः प्राचीनसंस्कृतनाटकेष्वपि समुपलभ्यन्ते। वाराणसी (काशी) सुप्रसिद्धस्तीर्थो विद्यते[५८]। भागीरथी-यमुनयोः सङ्गमे प्रयागाभिधानस्तीर्थस्तिष्ठति। भागीरथीशोणयोः सङ्गमे कुसुमपुरं (पाटलिपुत्रम्) नाम नगरमविद्यत[५९]। कुरुवंशस्य राजधानी हस्तिनापुरमपि भागीरथीतीरवर्तिन्यासीत्[६०]।

वर्तमानभौगोलिकपरिवीक्षणैः सिद्धमेव यद् भागीरथी

गोमुखहिमान्या: प्रभवति। इयं हिमानी गङ्गोत्तरीतीर्थाद् द्वादशमीलमात्र-मुत्तरवर्तिनी वर्तते। गोमुखहिमान्या: प्रभूतेयं भागीरथी गङ्गोत्तरीं प्रति प्रवहति।

समुद्रतलात् चतुर्दशासहस्रसम्मिते समुच्छ्रिते (१४०००) गङ्गोत्तरीतीर्थे प्राचीनं गङ्गामन्दिरं विद्यते। अथ च गङ्गोत्तरीतीर्थ: केदारमण्डलस्य चतुर्षु पवित्रधामसु यमुनोत्तरीगङ्गोत्तरीकेदारनाथ-बदरीनाथेषु परिगण्यते। गङ्गोत्तर्यां पवित्रा भागीरथशिला वर्तते, यत्र स्थितेन भगीरथेन गंगावतरणार्थं कठोरं तपस्तप्तम्।

गङ्गोत्तर्या: प्रवहन्ती भागीरथी उत्तरकाशीजनपदमतिक्रम्य टिहरीजनपदे देवप्रयागेऽलकनन्दासरितं विलीनां कृत्वा गङ्गाभिधा-नेनाऽऽत्मानं विभूषयति। तदनन्तरं हि ऋषिकेशमतिक्रम्य हरिद्वारे पर्वतीयान् भूमिभागान् परित्यज्य समस्थलभूमिभागान् प्रविशति। अत्राऽस्या: दक्षिणतो मनसादेवीपर्वतशिखरो वामतश्च चण्डीदेवी-शिखरोऽस्ति। तदनन्तरमुत्तरप्रदेशबिहारबंगालप्रदेशानतिक्रम्येयं गङ्गा बङ्गसमुद्रेण सङ्गच्छते। समुद्रनद्यो: सम्मिलनस्थानमिदं गङ्गा-सागरनाम्ना लोके प्रसिद्धं वर्तते।

गोमुखाद् गङ्गासागरपर्यन्तं पञ्चाशदधिकपञ्चदशशतमील (१५५०) मात्रं दीर्घं मार्गमतिक्रम्य भागीरथी बङ्गप्रदेशे द्वयोर्भागयोर्विभक्ता हुगली च पद्मा च। पश्चिमबङ्गप्रदेशे सरिदियं हुगलीनाम्ना पूर्वबङ्गे च पद्मानाम्ना विख्याता।

**(१३) मन्दाकिनी –**

भारतीयसाहित्ये शब्दकोशेषु च मन्दाकिनीपदं गङ्गाया: पर्यायपदेषु परिगणितम्। दु:खानां पापानां वा निराकरणादियं सरिन्मन्दाकिनी प्रोक्ता। (मन्दयति विनाशयति अकान् दु:खान् पापानिति मन्दाकिनी)।

परं साहित्येऽन्यासामपि मन्दाकिनीनाम्ना प्रथितानां सरितां

वर्णनानि समुपलभ्यन्ते। भवभूतिना चित्रकूटसमीपवर्तिनी काचिज्जल-धारा मन्दाकिनी प्रोक्ता[६१]। प्राचीनसाहित्ये प्रसिद्धमिदं यत् सीतायाः स्नानार्थं भगवत्याः गङ्गायाः धारैका मन्दाकिनीरूपेण प्रकटिता बभूव। रघुवंशे चित्रकूटसमीपवर्तिनी पयस्विनीसहायिका धारैका कविनाः मन्दाकिनी प्रोक्ता[६२]।

भगवतशरणोपाध्यायेन लिखितम् –

गङ्गायाः पर्वतीयभागो मन्दकिनी वर्तते। कालिदासोऽपि गन्ध-मादनगिरिक्षेत्रे मन्दाकिनीमुल्लिलेख[६३]। अथ च मन्दाकिनी गढ़वाल-मण्डलस्य सुप्रसिद्धा सरिद् वर्तते। चमोलीजनपदे सरिदियं केदारनाथसन्निकटं वासुकिसरसः प्रभवमासाद्य रुद्रप्रयागेऽलकनन्दया सङ्गच्छते।

मालविकाग्निमित्रनाटकेऽपि मन्दाकिन्या उल्लेखो विद्यते। परमियं मन्दाकिनी दक्षिणभारतीया सरिदस्ति। सम्भवतः कालिदासेनाऽत्र नर्मदा गोदावरी वा नदी मन्दाकिनी प्रोक्ता[६४]। तत्रेयं पापविनाशिनी गण्यते। पौराणिकसाहित्ये मन्दाकिनी स्वर्गवर्तिनी प्रसिद्धाः[६५]।

## (१४) मालिनी –

कालिदासोऽवर्णयत् –

कण्वस्य कुलपतेराश्रमो मालिनीतटवर्ती ह्यवर्तत[६६]। अनुमालिनीतीरं मनोरमाणि लतामण्डपान्यवर्तन्त। मालिनीजलस्पर्श-शीतलः सुगन्धितश्च पवनोऽत्र प्रावहत्[६७]। सैकतमयेऽस्याः सरितस्तीरे राजहंसाः व्यश्रमन्। अभितश्च हिमालयस्योपत्यकाः पावनाः विद्यमाना आसन्[६८]।

उपरितनैर्वर्णनैः प्रतीयते –

हिमालयस्य निम्नपर्वतीयश्रृङ्खलाभ्य एव मालिनी सरित् प्रभवति। हिमालयमुल्लंघ्येयं स्रोतस्विनी यत्र समतलप्रदेशान् प्रविशति तत्रैव कण्वस्य कुलपतेराश्रमपदमासीत्। महाभारते मालिनी हिमालयोपत्यकाप्रभवा

प्रोक्ता। अत्र देवराजेन प्रेषिता मेनका विश्वामित्रसंसर्गेण सद्योजातां निजसन्ततिं शकुन्तलां परित्यज्य गता।

वर्तमानसमये पौड़ीगढ़वालजनपदस्य बिजनौरजनपदस्य च मध्यभागे प्रवहन्ती मालिनीसरिदेव प्राचीनसहित्यवर्णिता मालिनी सरिदिति लोकेऽभिज्ञायते। गढ़वालमण्डलस्य निम्नपर्वतीयभागेभ्यो निःसृत्येयं गङ्गया सङ्गच्छते। कण्वाश्रमस्य स्थितिः कोटद्वारहरिद्वारगार्गे कोटद्वारनगरात् पश्चिमदिशि षण्मीलमात्रं परिचीयते[६९]।

## (१५) मुरला -

भवभूतिः कविः मुरलासरितं समकेतयत्। अगस्त्यमुनिभार्यया लोपामुद्रया मुरला सरित् सन्देशेन सह गोदावरीसरित्सकाशं प्रेषिता[७०]। गोदावरीमुरलयोः सरितोः सम्मिलनप्रमाणं सम्मान्य मुरला सरिद् गोदावर्याः सहायिकेति कल्पयितुं शक्यते।

नन्दलाल डे महोदयस्याऽभिमतमस्ति -

पुण्यनगर(पूना) समीपवर्तिन्याः भीमानद्याः सहायिका मुलमुथा-सरिदेव मुरलाऽवगन्तव्या[७१]। भगवतशरणोपाध्यायो मुरलासरितः स्थितिं केरलप्रदेशे जगाद[७२]। सह्यपर्वतशृङ्खलाभ्यः प्रभवमासाद्य सरिदियं पश्चिम-समुद्रेण (आरब्यसागरेण) सङ्गच्छते। परन्तु द्वयोरेवाऽनयोः सरितोः भवभूतिप्रोक्तया मुरलया सह सङ्गतिर्नैव सम्भवा।

अगस्त्यमुनेराश्रमो दण्डकारण्येऽवर्तत। अत्र गोदावरीतीरे पञ्चवट्यां रामेण निवासाय कुटीरं कल्पितम्। लोपामुद्रया मुरला सरिद् गोदावरीसकाशं प्रेषिता। अतो गोदावर्याः सहायिकाभूतायाः मुरलाया अवस्थितिर्दण्डकारण्यमध्ये कल्पनीया। कल्पनेयमेव युक्तिसङ्गता। राजशेखरेण दक्षिणभारतवर्तिनीनां स्रोतस्विनीनां वर्णनं कृतम्। ताम्रपर्णी मुरला कावेरी नर्मदा गोदावरी तापी चेति[७३]।

राजशेखरकृतबिद्धसालभञ्जिकायां नाटिकायां कविना मुरलदेशस्य वर्णनं कृतम्[७४]। डा० मीराशीमहोदयो हैदराबादप्रदेशस्योत्तरीयं भागं

मुरलदेशं वदति। अनेन वर्णनेनाऽपि मुरलासरितः स्थितिरनुमातुं शक्यते।

## (१६) यमुना -

प्राचीनसाहित्ये यमुना सरित् परमां प्रसिद्धिमुपागता। इयं गङ्गायाः मुख्या सहायिका सरिद् वर्तते[७५]। यमुनायाः प्रभवस्थानं वर्तते कलिन्दगिरिः। अतः कालिन्दीनाम्नाऽपीयं प्रथिता बभूव। हिमालयशृङ्खलासु बन्दरपुच्छपर्वतश्रेण्या एको भागः कलिन्दगिरिरित्युच्यते। पौराणिकी कथेयं प्रसिद्धा, यदियं यमुना सूर्यस्य सुता यमस्य च भगिनी वर्तते[७६]।

यमुनासरिदतिपवित्रा पापविनाशिनी च विख्याता वर्तते। गङ्गा-यमुनयोः सङ्गमः सर्वेषां पापानां दुःखानाञ्च विनाशको वर्तते मनसि च शान्तिमादधाति[७७]। अत्र सङ्गमे यमुनातटे श्यामवटो वर्तते[७८]। प्राचीनकालेऽत्राऽनेकेषां मुनीनां तपस्विनाञ्चाऽऽश्रमा अवर्तन्त[७९]। यमुनायाः मातृरूपमपि मनीषिभिः कल्पितम्[८०]। सलिलञ्चाऽस्याः श्यामवर्णं कल्पितम्[८१]।

भगवतः कृष्णस्य निमित्तेन सरिदियं यमुना परमास्पदतां गता। यमुनातीरसमवस्थितस्य मथुरा (मधुरा)नगरस्यैकस्मिन् कारागृहे भगवान् कृष्णो जन्म लेभे। वर्षतौ प्रवृद्धजलां यमुनामुत्तीर्य शिशुं कृष्णं नवजातं शिरसि निधाय गोकुलं गच्छतो वसुदेवस्य मार्गं प्रवर्धमानप्रवाहा यमुनाऽवरुरोध[८२]। परं कृष्णचरणस्पर्शं लब्ध्वा सरित्प्रवाहो द्वयोर्भागयोर्विभज्य वसुदेवाय मार्गमददात्[८३]।

कृष्णस्य यमुनातटे क्रीडिताः बाललीला अद्यतनेऽपि काले हिन्दू-जनमानसान् अनुप्राणितान् विदधति। भासकविना बालचरितनाटके क्रीडानामेतासां मनोहरि वर्णनं कृतम्।

यमुनातटवर्तिवृन्दावननगरं प्राचीनसाहित्येऽप्यतितरां प्रसिद्धिमावहति। तत्र तीरं निकषैव गभीरे सलिले कालियाभिधानो नागराजो न्यवसत्। तद्गरलभीताः पशुपक्षिणोऽपि तत्रोपगमनसाहसं न

विदधति स्म, मानवानां तु, कथैव का[८४]। कालियनागस्य दमनं कृत्वा कृष्णो यमुनाजलं विषभीतिरहितञ्चकार[८५]।

हिमवतोऽत्युत्तुङ्गहिमानीभ्यः प्रभवमासाद्य हिमालयशृङ्खलाभ्यः निःसृत्योत्तराञ्चलसमस्थलानि चातिक्रम्य यमुना प्रयागे गङ्गायामात्मानं विलीनां विदधाति। हिमालये यमुनाप्रभवस्थानं यमुनोत्तरीति नाम्ना विख्यातमस्ति। समुद्रतलात् त्रयोदशसहस्र(१३०००) फीटसम्मितोच्छ्रितं स्थानं हिमशीतलं प्रसिद्धं तीर्थस्थलं यमुनोत्तरी विद्यते। केदारमण्डलस्य चतुर्षु धामसु तीर्थस्याऽस्य गणना विधीयते।

विभिन्नजनपदैः सह यमुनायाः यथाकथञ्चित् सम्बन्धो बभूव। चित्रकूटयात्रायै यमुनोत्तरणं क्रियते[८६]। वत्सराजोदयनसम्बद्धेषु रूपकेषु कविभिर्यमुना ध्रुवमुल्लिखिता।

वत्सजनपदस्योत्तरवर्तिनी सीमा यमुनया निर्धारिता बभूव। यमुनायाः कच्छप्रदेशेषु हस्तिबाहुलकानि गहनान्यरण्यानि ह्यवर्तन्त[८७]।

## (१७) शिप्रा –

प्राचीनभारतीयसाहित्ये शिप्राभिधाना सरिदतितरां प्रसिद्धा वर्तते। लोकविख्यातायाः सरितोऽस्यास्तीरे मालवप्रदेशस्य राजधानी उज्जयिनी नगरी समवस्थिताऽवर्तत। इतिहासस्य कस्मिंश्चित् काले नगरीयं प्रशासनस्य विज्ञानानां कलानां व्यापारस्य विद्यानां संस्कृतेश्च केन्द्रमेवाऽवर्तत। लोकप्रसिद्धां उज्जयिनीमुपलक्ष्यैव शिप्रायाः सरितोऽपि परा प्रसिद्धिः सञ्जाता। राजशेखरेण वर्णितम् –

अवन्तीजनपदस्य राजधानीं परितः शिप्रा नदी परिखारूपेण समवस्थिता वर्तते[८८]।

कालिदासेन शिप्रायाः सरितोः मनोरमं वर्णनं कृतम्। उज्जयिनी नगरी शिप्रातटवर्तिनी वर्तते। नद्यामत्र सारसाः कूजन्ते। विकसितैः कमलैः सलिलमत्र नित्यं सुगन्धितं भवति। अत्र प्रातःकाले पौराराङ्गनाः स्नानार्थमागच्छन्ति[८९]।

शिप्रानद्याः प्रभवस्थानं वर्तते ऋक्षपर्वतस्योपत्यकाः। उज्जयिनी-मागत्याऽग्रे प्रवहन्ती नदीयं चम्बलनद्या सङ्गच्छते। शिप्रासरित्प्रसङ्गे पौराणिकी कथैका प्रसिद्धा -

अरुन्धतीवसिष्ठयोर्विवाहविधौ सम्पन्ने सति ब्रह्मविष्णुमहेशैः शीतलजलं ताभ्यामुपहृतम्। तज्जलं शिप्रासरसि सङ्गृहीतं बभूव। उत्तरवर्तिनि काले विष्णुना शिप्रासरसस्तटरोधश्चक्रेण छिन्नम्। तदनन्तरं तज्जलं शिप्रानदीरूपेण परिणतम्।

भारतीयसंस्कृतिप्रसङ्गे शिप्रा सरिदतिपवित्रा अघमर्षिणी मोक्षदायिका च गण्यते। अस्यां सरिति स्नानं सर्वानिव पापान् छिनत्ति। कार्तिकमासस्य पूर्णिमातिथौ शिप्रास्नानमतिमहत्त्वशलितां दधाति। प्रति-द्वादशवर्षमत्रोज्जयिन्यां शिप्रातटे कुम्भमेलापकः समायोज्यते।

## (१८) शोणः -

भारतीयसाहित्ये शोणनदः पुंल्लिङ्गवाची समुल्लिखितः। राजशेखरेण नदोऽयं पूर्वभारतीयसरित्सु परिगणितः[९०]। विशाखदत्तेन कुसुमपुरं गङ्गाशोणसङ्गमेऽवस्थितं प्रोक्तम्। शोणनदमुत्तीर्य कुसुमपुरप्रवेशः सम्भवति[९१]।

प्राचीनसाहित्ये शोणसरितो महानदरूपेण वर्णनं मनीषिभिः कृतम्। वर्षर्तौ शोणमहानदे तथा महान् जलप्रवाहो वर्धते, यथाऽनेन प्रवाहेण गङ्गासरित्प्रवाहोऽप्यतिशय्यते। कालिदासेन वर्णितम् - शोणस्योत्तल-तरङ्गाः गङ्गाप्रवाहमप्यवरुन्धन्ति[९२]।

जलप्रवाहवृद्धिकाले शोणोऽयं तदा विन्ध्यनगस्य स्वर्णसिकता अपि स्वजलप्रवाहेण सह समानयति। रक्तस्वर्णिमसिकताभावादेवाऽयं नदः शोणः प्रोक्तः।

बिहारप्रदेशवर्तिनी सोननाम्नी सरिदेव प्राचीनसाहित्यवर्णितः शोणो नदो वर्तत इति मनीषिणोऽभिजानन्ति। नदस्याऽस्य प्रभवस्थानं वर्ततेऽमरकण्टकपर्वतश्रेणी। तच्च नर्मदासरित्प्रभवस्थानात् पञ्चमील

विप्रकृष्टान्तरालेन पूर्वदिश्यस्ति। नदोऽयं प्रथमं तावदुत्तरस्यां दिशि, तदनन्तरं पूर्वस्यां दिशि तदनन्तरञ्च पूर्वोत्तरदिशि प्रवहति। एवञ्च पञ्चशत (५००) मीलमात्रं प्रवहन्नयं नदः पटनानगरसमीपं गङ्गया सङ्गच्छते।

प्राचीनकाले कुसुमपुरस्य (पाटलिपुत्रस्य) समवस्थितिः गङ्गाशोण-सङ्गमेऽवर्तत। परं वर्तमानसमये नेयं स्थितिरस्ति। कुसुमपुरनगर-मधुना पटनाभिधानेन प्रसिद्धम्। शोणनदस्य च धारेदानीं पटनातः षष्टिमीलमात्रं पूर्वस्यां दिश्यपसृता।

### (१९) सरयूः -

सरयू सरित् प्राचीनसस्कृतनाटकेष्वयोध्याप्रसङ्गतः समुल्लिखिता वर्तते। सरयूतटभुवि समवस्थितायामयोध्यायामिक्ष्वाकुवंशीयै-र्नृपतिभिर्यज्ञीययूपाः निखाताः[१३]। सरयूतटे यज्ञस्तम्भभूतानां यूपानां निखातवर्णनं कालिदासेन कृतम्[१४]।

कालिदासेन वर्णितम् -

इक्ष्वाकुवंशीयोऽजोऽतिपवित्रपापविनाशनतीर्थे गङ्गासरय्वोः सङ्गमे प्राणांस्तत्याज[१५]। सरिदियं सरयूः ब्रह्मसरसः प्रभवति[१६]।

वर्तमानसमयेऽप्ययोध्यायाः स्थितिः सरयूतटवर्तिन्येव वर्तते। सरय्वाः मूलोगद्मो वर्तते मानससरः। तत्रेयं क्रौडपानीनाम्ना प्रसिद्धा। ततः सरिदियं पिथौरागढ़जनपदस्य पर्वतीयप्रदेशेषु प्रवहन्ती काली-गङ्गानाम्ना भारतनेपालराष्ट्रयोः सीमाविभाजनं कुर्वाणा टनकपुरनगरं निकषा समतलभूमिप्रदेशमवतरति। अत्रेयं सरित् शारदाभिधानेन लोक-विख्याता बभूव। ततश्चोत्तरप्रदेशस्योत्तरीयसमभूमिभागेषु प्रवहन्ती बिहार-प्रान्ते छपरासन्निकटं गङ्गायां विलीना जायते। केषुचित् स्थानेषु सरिदियं घाघराभिधानेनाऽपि प्रसिद्धा वर्तते।

### (२०) सिन्धुः -

मालविकाग्निमित्रनाटके कालिदासः सिन्धुसरितमुल्लिलेख ।

पुष्यमित्रस्य दिग्विजयप्रयाणेऽश्वमेधीयोऽश्वः सिन्धुं जगाम। तत्र यवनैरश्वेऽस्मिन् प्रसह्य निरुद्धे लोमहर्षणः सङ्ग्रामो बभूव। पुष्यमित्र-सैनिकानां प्रचण्डाक्रमणमसहमानाः यवना पराजिताः बभूवुः[९७]। तदनन्तरं पुष्यमित्रस्य साम्राज्यं सिन्धुसरितमुल्लंघ्य पश्चिमोत्तरदेशेषु विस्तृतं समजनि।

हिमालयस्योत्तुङ्गपर्वतश्रेण्यां मानससरसः समुद्भूय सिन्धुसरित् प्रथमं पश्चिमोत्तरस्यां दिशि प्रवहन्ती लद्दाखजनपदमतिक्रम्य ततो दक्षिणोत्तरवर्तिनी भूत्वा पश्चिमोत्तरजनपदानतिक्रम्य कराचीपत्तनं निकषा पश्चिमसमुद्रे विलीयते। एवमियं नदी अष्टादशशत(१८००) मीलमात्रं दैर्घ्यधारिणी वर्तते। पश्चिमोत्तरदिशः समागत्य यवनाक्रमणकारिणः सिन्धुसरितमुत्तीर्यैव भारतवर्षमाचक्रमुः। सिन्धुपदनाम्नैवाऽस्य देशस्य निवासिनः हिन्दूपद(सिन्धुपद) नामभाजो बभूवुः देशश्चाऽयं हिन्दनाम्ना प्रथिताङ्गतः।

## (२१) अन्याः सरितः -

अन्यासामप्यनेकासां सरितां सङ्केताः यत्र तत्र प्राचीन-संस्कृतनाटकेषु समुपलभ्यन्ते।

पद्मावतीनगरीवर्णने मालतीमाधवरूपके भवभूतिना काश्चन नद्यः सङ्केतिताः। मनीषिभिरनुमीयते - पद्मावती नगरीयं केरलजनपदे प्रतिष्ठिताऽवर्तत। अतः सरितोऽप्येताः केरलजनपदवर्तिन्यो भवितव्याः।

पद्मावती नगरी सिन्धुवरदयोः सरितोः सङ्गमेऽवस्थिताऽऽसीत्[९८]। अथ चेयं नगरी पारासिन्धुसरिद्भ्यां परिवेष्टिता बभूव[९९]। अनेन वर्णनेन प्रतीयते पारा च सिन्धुश्चैकस्या एव सरितो द्वे नामनी आस्ताम्। केरलजनपदे पेरियाराभिधाना नदी वर्तते। सैव प्राचीनकालीना पारा सम्भाव्यते।

पद्मावतीपरिवेष्टनकारिणी सिन्धुसरित्तस्याः सिन्धुसरितः सर्वथा भिन्ना, या भारतवर्षस्य पश्चिमोत्तरसीमासु प्रवहन्ती पश्चिमसमुद्रेण

सङ्गच्छते। भवभूतिना मालतीमाधवप्रकरणे वर्णिता सिन्धुसरित् केरलप्रदेशीया ह्यवर्तत। केरलजनपदे पेरियारनद्यां काचित् क्षुद्रनदी संविलीना भवति। सैव सम्भवतो भवभूतिप्रोक्ता सिन्धुसरिद् वर्तते।

भगवतशरणोपाध्यायो लिलेख -

वरदा नदी विदर्भजनपदे प्रवहति। वर्तमानकालीना वर्धा सरिदेव वरदा नदी वर्तते[१००]। कालिदासवर्णनैः स्थितिरियमेव प्रतिभाति। वरदा-मुल्लंघ्याऽग्निमित्रसैनिकाः विदर्भराजमाक्रम्य विजिग्युः[१०१]। परन्तु भवभूतिवर्णिता वरदा सरिद् विदर्भजनपदीयायाः वरदायाः भिन्नैव लक्ष्यते। केरलजनपदीया पद्मावती नगरी वरदातटवर्तिन्यासीत्।

पद्मावतीं निकषा तिस्रोऽन्याः सरितोऽपि भवभूतिना वर्णिताः- लवणा, मधुमती पाटलावती च। पद्मावत्याः किञ्चिद् विप्रकृष्टान्तरालेन विद्यमानायाः लवणायास्तटवर्तिषु प्रसिद्धेषु शाद्वलेषु पशवो विचरन्ति स्म। तत्र तटवर्तिष्वरण्येषु गवां प्रिया उलपयवसाः प्राचुर्येण प्ररूढ़ा अवर्तन्त[१०२]।

पद्मावतीं निकषैव वनेषु प्रवहन्ती मधुमती सरिद् भवभूतिना वर्णिता। सरिताऽनया पर्वतमेखता परिवृताऽवर्तत[१०३]। पद्मावत्याः समीपमेव पर्वतीयेष्वरण्येषु पाटलावती सरिदपि प्रवहति स्म[१०४]। सर्वासामेवैतासां सरितां स्थितिः केरलजनपदे सम्भाव्यते।

केचन समीक्षकाः पद्मावतीं नगरीं मध्यप्रदेशस्थितां प्रमाणयन्ति। ते वदन्ति -

पारासिन्धुसरितौ मध्यप्रदेशे[१०५], मधुमती गुर्जरप्रदेशे[१०७] वरदा च विदर्भजनपदे प्रवहति[१०७]।

## (२२) सरितां सङ्गमाः -

संस्कृतनाटकेषु केषाञ्चित् सरित्सङ्गमानामपि वर्णनानि समुपलभ्यन्ते। प्रथितमत्र वर्तते गङ्गायमुनयोः सङ्गमो, यत्र प्रयागतीर्थो वर्तते। तीर्थोऽयं पावनोऽघमर्षणश्च लोके गण्यते[१०८]।

मनीषिभिः कल्पना कृता –

प्रयागे गङ्गायमुनासरस्वतीनामिति तिसृणां सरितां सङ्गमो विद्यते। अतः सङ्गमोऽयं त्रिवेणीनाम्नाऽपि प्रसिद्धो बभूव। परमति-प्राचीनकाल एव सरस्वत्यत्र विलुप्ता सञ्जाता। मनीषिभिः सरस्वतीयं कुरुक्षेत्रवर्तिन्यपि कथ्यते[१०९]। प्राचीनसाहित्ये सरस्वतीतिरोभवनस्थानं विनशननाम्ना प्रसिद्धम्। मुरारिकविः कृष्णवर्णायाः कालिन्द्याः श्वेत-वर्णायाः गङ्गायाश्च सम्मिलनं मनोहारितया पारम्परिकरूपेणा-ऽवर्णयत्[११०]।

कालिदासो रघुवंशमहाकाव्ये गङ्गायमुनासङ्गमस्य प्राकृतिक-सौन्दर्यमतिमनोरमरूपेण सरलं सरसञ्च प्रादर्शयत्[१११]। अत्र सङ्गमे स्नानमात्रेण किल तत्त्वज्ञानं विनाऽपि शरीरिणो मोक्षमवाप्नुवन्ति[११२]। अवसरमुपलभ्य महाकविरसौ नाटकेष्वपि गङ्गायमुनयोः सङ्गमस्य पावित्र्यं सौन्दर्यञ्च व्यानञ्ज।

कालिदासो जगाद –

गङ्गायमुनयोः सङ्गमो न केवलं प्राकृतिकसौन्दर्यसम्पन्नो जनानां प्रेरकः, अपितु धार्मिकप्रेरणामप्यसौ वितनोति। परमपावनमिदं सलिलं पापान् प्रक्षालयति। प्रयागे गङ्गाजलं यमुनासङ्गात् पवित्रतरं सञ्जातम्[११३]। गङ्गां विनेयं यमुना न तथा रोचते[११४]। विशिष्टतिथिष्वत्र धर्मानुरागिणो जनाः स्नानार्थं समागच्छन्ति। कालिदासेन पुरूरवसस्तथा स्नानं स्वकृतिषु वर्णितम्[११५]।

कुसुमपुरस्याऽवस्थितिर्गङ्गाशोणयोः सङ्गमेऽविद्यत। नगरमिदं पुष्पपुरमिति वा पाटलिपुत्रमिति वा नाम्नाऽपि प्रथितं बभूव। वर्तमान-समये नगरमिदं पटनेति नाम्ना लोके ज्ञायते। मुद्राराक्षसनाटकलेखनकाले नगरमिदं गङ्गाशोणयोः सङ्गमेऽवस्थितमासीत्। परं वर्तमानसमये सङ्गमोऽयं नगरादस्मात् षष्टि (६०) मीलमात्रं पूर्वस्यां दिशि किलाऽपसृतम्।

कालिदासो गङ्गाशोणसङ्गममुपमानञ्चकार। अभिमुखमागच्छन्त: शत्रुसैनिका: रघुवंशीयेन नृपतिनाऽजेन तथैव प्रतिरुद्धा: यथो त्तरङ्गित: शोणनदप्रवाहो गङ्गाप्रवाहमवरुणद्धि[११६]।

मालतीमाधवप्रकरणे भवभूति: पारासिन्धुसङ्गममचित्रयत्[११७]। अत्र मधुमतीसिन्धुसङ्गमस्याऽपि वर्णनं विद्यते। स्थानमिदं सङ्गमस्य स्वर्णबिन्दुनाम्ना प्रसिद्धमवर्तत। अत्र भवानीपते: शिवस्य विशालं मन्दिरमासीत्[११८]।

---

## सन्दर्भ ग्रन्थ -

१. बालरामायण १०.७५।।
२. महावीरचरितम् ५.३
३. वायुपुराण ४५.१०४
४. उत्तररामचरित पृ० ६७।।
५. महावीरचरित पृ० १६९।।
६. बालरामायण ६.५६।।
७. अनर्घराघव पृ० ३६९, बालरामायण पृ० ६८०
८. वायुपुराण ४५. १०४।।
९. कालिदास का भारत - प्रथम भाग पृ० ४५
१०. कुन्दमाला पृ० ८१।।
११. वही पृ० ९१।।
१२. वही ३.५
१३. गौतमीतीरे तस्य राजर्षेरुग्रे तपसि वर्तमानस्य मेनकानामाप्सरा: प्रेषिता नियमविघ्नकारिणी। अभिज्ञानशाकुन्तलम् पृ० १६८।।

१४. प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम्।
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु।।
महाभारत-आदिपर्व ७२.८०

१५. बालरामायण ५.३५

१६. काव्यमीमांसा ९४.१२-१३

१७. आप्टे: संस्कृत-इंगलिश डिक्शनरी - अपेन्डिक्स पृ० ४२

१८. उत्तररामचरित पृ० १२८

१९. कनकयूपसमुच्छ्रयशोभिनो वितमसा तमसासरयूतटा:।
रघुवंश ९.२०

२०. बालरामायण १०.८।।

२१. वायुपुराण ४५.१०२।।

२२. विष्णुपुराण २.३.११।।

२३. बालरामायण १०.५५।।

२४. वही ३.३१।।

२५. वही १०.८५।।

२६. वही १०.५७।।

२७. बालरामायण ६.५५, कर्पूरमञ्जरी पृ० १५५,
अनर्घराघव पृ० ३६४।।

२८. ताम्रपर्णीसमेतस्य मुक्तासारं महोदधे:।
ते निपत्य ददुस्तस्मै यश: स्वमिव सञ्चितम्।। रघुवंश ४.५०

२९. कपूर्रमञ्जरी १.२७।।

३०. हनूमन्नाटक पृ० ८०।।

३१. इन्डियन एन्टीक्वेरी पृ० २१२

३२. प्रतिज्ञायौगन्धरायण पृ० १५-१६।।

३३. अस्माभिर्नर्मदातीरे कुशगुल्मसंसक्ता दृष्टा।।
स्वप्नवासवदत्तम् पृ० २१०

३४. नर्मदातीरे अन्तपालदुर्गे। मालविकाग्निमित्र पृ० ९

३५. रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णाम्। पूर्वमेघ-२०

३६. बिद्धसालभञ्जिका ४.२२।।

३७. बालरामायण १०.७७।।

३८. वही २.३८
३९. बालरामायण ६.५२।।
४०. वही पृ० ३८२।।
४१. वही १०.७७।।
४२. विद्धसालभञ्जिका पृ० १९८।।
४३. वायुपुराण ४५.१०४
४४. दी ज्योग्राफीकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया - पृ० १५६
४५. वही पृ० ५०
४६. कृष्णा वेण्या भीमरथी गोदावरी निर्विन्ध्या।
पयोष्णी तापी रेवा।। श्रीमद्भागवतपुराण ५.१९.१८।।
४७. तापी पयोष्णी निर्विन्ध्या प्रमुखा: ऋक्षसम्भवा:।
विष्णुपुराण २.३.११
४८. पुण्यसलिला भगवती भागीरथी। उत्तरामचरित पृ० ६२
४९. कुन्दमाला पृ० १२, प्रतिमानाटक ३.१६।।
५०. गङ्गास्पर्शनात् धौतकल्माषाङ्ग:। पञ्चरात्रम् पृ० १८
५१. गङ्गा गङ्गेति यो ब्रूयाद् योजनानां शतैरपि।
मुच्यते सर्वपापेभ्यो मुक्तिलोकं स गच्छति।।
५२. तपतीसंवरण पृ० १३९
५३. बालरामायण पृ० ३६७।।
५४. उत्तररामचरित १.२३।।
५५. बालरामायण ७.४२।।
५६. प्रतिमानाटक पृ० १३७
५७. गङ्गारोध:पतनकलुषा गच्छतीव प्रसादम्। विक्रमोर्वशीय १.९
५८. चण्डकौशिक पृ० १६६।।
५९. मुद्राराक्षस ३.९।।
६०. तपतीसंवरण ९.१०
६१. महावीरचरित पृ० १६५।।
६२. मन्दाकिनी भाति नगोपकण्ठे। रघुवंश १३.४८।।
६३. विक्रमोर्वशीयम् पृ० २१३

६४. कालिदास का भारत - प्रथम भाग पृ० ३९-४०

६५. बालरामायण ४.१०

६६. कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो लक्ष्यते।
अभिज्ञानशाकुन्तल पृ० १४२

६७. शक्यमरबिन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्।
वही ३.४

६८. कार्या सैकतालीनहंसमिथुना स्रोतोवहा मालिनी।
पादास्तामभितो निषण्णहरिणाः गौरीगुरोः पावनाः।।
वही ६.१७

६९. ऐतिहासिक नामावली पृ० ७४०

७०. उत्तररामचरित पृ० १८५

७१. दी ज्योग्राफीकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इण्डिया - पृ० १३४

७२. कालिदास का भारत भाग १ पृ० ४५

७३. बालरामायण ५.५०।।

७४. बिद्धसालभञ्जिका ३.१८।।

७५. कार्पस इन्स्क्रिप्शनम इन्डिकेरम भाग - ४, पृ० ३१४

७६. अनर्घराघव ७. ११६।।

७७. उत्तररामचरित १.५०

७८. वही पृ० ६४

७९. वही पृ० १.५०

८०. प्रतिमानाटक ३.१६

८१. बालरामायण १०.८५

८२. अये इयं भगवती यमुना कालवर्षसम्पूर्णा स्थिता
इमां नदी ग्राहभुजङ्गसङ्कुलां महोर्मिमालां मनसाऽपि दुस्तराम्।
भुजप्लवेनाऽऽशुगतार्थविक्लवो वहामि सिद्धिं यदि दैवतं स्थितम्।।
बालचरितम् १.१८

८३. हन्त! द्विधा छिन्नं जलम्। इतः स्थितम्। इतः प्रधावति। दत्तो मे भगवत्या मार्गः। यावदपक्रमापि ।। (अवतीर्य)
निष्क्रान्तोऽस्मि यमुनायाः। बालचरितम् पृ० १४

८४. निष्पक्षिव्यालयूथं भयचकितकरिव्रातविप्रेक्षिताम्भो-
गम्भीरं स्निग्धनीरं ह्रदमुदधिनिभं क्षोभयन् सम्प्रविश्य।
गोपीभि: शङ्किताभि: प्रियहितवचनै: पेशलैर्वार्यमाण:
कालिन्दीवासरक्तं भुजगमतिबलं कालियं धर्षयामि।।
बालचरित ४.२

८५. सितेतराभुग्नदुकूलकान्तिद्रुतेन्द्रनीलप्रतिभानवीचिम्।
इमामहं कालियधूमधूम्रां शान्तविषाग्निं यमुनां करोमि।।
बालचरित ४.४

८६. बालरामायण पृ० ३७०

८७. वीणावासवदत्तम् पृ० १५

८८. बालरामायण ३.४

८९. दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषाय:।
यत्र स्त्रीणां हरति सुरतग्लानिमगङ्गानुकूल:
शिप्रावात: प्रियतम इव प्रार्थनाचाटुकार:।। पूर्वमेघ - ३३

९०. शोणलौहित्यौ। काव्यमीमांसा ९३.२३।।

९१. मुद्राराक्षस ४.१६

९२. तस्या: स रक्षार्थमनल्पयोधमादिश्य पित्र्यं सचिवं कुमार:।
प्रत्यग्रहीत् पार्थिववाहिनीं तां भागीरथीं शोण इवोत्तरङ्ग:।।
रघुवंश ७.३६

९३. अनर्घराघव ७.१३०-१३२।।

९४. जलानि सा तीरनिखातयूपा वहत्ययोध्यामनुराजधानीम्
रघुवंश १३.६१

९५. तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्य:। रघुवंश ८.९५

९६. ब्राह्मं सर: कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति।
रघुवंश १३.६०

९७. निरर्गलस्तुरगो विसृष्ट: स सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनानां प्रार्थित:। तत उभयो: सेनयोर्महानासीत् संमद: -
तत: परान् पराजित्य वसुमित्रेण धीमता।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तित:।।
मालविकाग्निमित्र ५.१५

९८. मालतीमाधव पृ० १९।।

९९. मालतीमाधव ९.१
१००. कालिदास का भारत - प्रथम भाग पृ० ४५
१०१. वरदारोधोवृक्षैः सहावनतो रिपुः। मालविकाग्निमित्र ५.१
१०२. मालतीमाधव ९.१
१०३. वही पृ० ४५१
१०४. वही पृ० ४२०
१०५. ऐतिहासिक नामावली पृ० ५५२
१०६. वही पृ० ७०७
१०७. वही पृ० ८३२
१०८. तापसवत्सराज ६.५
१०९. पूर्वमेघ - ५३
११०. अनर्घराघव ७.१२७
१११. क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा।।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव।।
क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पंक्तिः।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनचर्चितेव।।
क्वचित् प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा।।
क्वचिच्च कृष्णोरगभूषणेव भस्माङ्‌रागा तनुरीश्वरस्य।
पश्यानवद्याङ्‌गि विभाति गङ्‌गा भिन्नप्रवाहा यमुनातरङ्‌गैः।।
रघुवंश १३.५४-५७
११२. समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र विलाभिषेकात्।
तत्त्वावबोधेन विनाऽपि भूयस्तनुत्यजां नाऽस्ति शरीरबन्धः।।
रघुवंश १३.५९
११३. भागीरथ्याः यमुनासङ्‌गविशेषपावनेषु सलिलेषु।
विक्रमोर्वशीय पृ० १७७
११४. सङ्‌गमे दृष्टपूर्वेव यमुना गङ्‌गया विना। विक्रमोर्वशीय २.१४
११५. तिथिविशेष इति भगवत्योः गङ्‌गायमुनयो सङ्‌गमे।
देवीभिः सह कृताभिषेकः। विक्रमोर्वशीय पृ० २३९
११६. रघुवंश ७.३६
११७. मालतीमाधव ९.१
११८. वही पृ० ३८१

# चतुर्थोऽध्यायः

## प्राचीनभारतीयजनपदाः

| | | |
|---|---|---|
| १. अङ्गाः | २. अपरान्ताः | ३. अवन्त्यः |
| ४. अश्मकाः | ५. आन्ध्राः | ६. उत्कलाः |
| ७. उत्तरकुरवः | ८. कर्णाटाः | ९. कलिङ्गाः |
| १०. काम्बोजाः | ११. कारुषाः | १२. काश्यः |
| १३. काश्मीराः | १४. कुन्तलाः | १५. कुरवः |
| १६. कुरुजाङ्गलाः | १७. कुलूताः | १८. कुशस्थल्यः |
| १९. केरलाः | २०. कोंकणाः | २१. कोशलाः |
| २२. क्रथकैशिकाः | २३. गान्धाराः | २४. गौड़ाः |
| २५. चेद्यः | २६. चोलाः | २७. दशार्णाः |
| २८. दशार्हाः | २९. दाशेरकाः | ३०. द्रविडाः |
| ३१. नेपालाः | ३२. पाञ्चालाः | ३३. पाण्ड्याः |
| ३४. बङ्गाः | ३५. बाह्लवाः | ३६. वाहीकाः |
| ३७. भर्गाः | ३८. मगधाः | ३९. मत्स्याः |
| ४०. मद्राः | ४१. मलदाः | ४२. मलयाः |
| ४३. महाराष्ट्राः | ४४. महिषकाः | ४५. मुरलाः |
| ४६. रमठाः | ४७. रोहीतकाः | ४८. लङ्का |
| ४९. लम्पाकाः | ५०. लाटाः | ५१. वत्साः |
| ५२. विदर्भाः | ५३. विदेहाः | ५४. शिवयः |
| ५५. शूरसेनाः | ५६. शूर्पारकाः | ५७. समन्तपञ्चकाः |
| ५८. सिन्धुसौवीराः | ५९. सिंहलाः | |

# चतुर्थोऽध्यायः

## प्राचीनभारतीयजनपदाः

भारतराष्ट्रस्यैक्यं प्राचीनभारतीया ऋषयो मनीषिणश्च महत्या मनीषया प्रतिभया बुद्ध्या च विविधराजनीतिव्यवहारकौशलैः समापादयन्। एवं तैर्महतो राष्ट्रस्य कल्पना विहिता निर्माणञ्च विहितम्। सांस्कृतिकरूपेण भौगोलिकस्वरूपेण चोत्तरस्यां दिशि हिमवतो हिममण्डितशिखरेभ्यः समारभ्य दक्षिणायां कुमार्यन्तरीपपर्यन्तं, पश्चिमायाञ्च गान्धारकाम्बोजादिजनपदेभ्यः पूर्वस्यां दिशि कामरूपपर्यन्तं सकलो भूभागो भारतवर्षसीमान्तर्गतो राष्ट्रस्यैकत्वं समापादयन् महान्तं देशमेनं व्यवस्थापयति। परन्तु राजनीतिकदृष्ट्या भूखण्डोऽयमधिकांशसमयेषु सर्वतन्त्रस्वतन्त्रप्रदेशेषु राज्येषु जनपदेषु वा विभक्तमविद्यत।

परन्तु विभिन्नेषु युगेषु विविधजनपदेषु राज्येषु च सार्वभौमस्वतन्त्रेषु सत्स्वपि सांस्कृतिकैक्यमस्य राष्ट्रस्य सर्वसमयेषु व्यवस्थितमासीत्। भारतीयकवीनां मनीषिणां सर्वदैवेयं कामनाऽऽकांक्षा च बभूव, यत्सकलोऽयं भूभागो भारतवर्षस्य राजनीतिकैक्येऽपि व्यवस्थितो भूयात्। अनेके सम्राजो रामयुधिष्ठिरोदयनचन्द्रगुप्तमौर्याशोकचन्द्रगुप्तविक्रमादित्यहर्षादयो भारतवर्षं सम्पूर्णमिकशासनान्तर्गतं विधातुं सततं प्रयेतिरे। परं तेषामुत्तराधिकारिणो भारतराष्ट्रस्य तथाविधस्यैक्यानुष्ठानयज्ञस्य स्थिरीकरणे न समर्थाः बभूवुः।

भारतवर्षस्य भूमिविभाजनं प्राचीनमनीषिभिः पञ्चसु भागेषु

सर्वसम्मतं विहितमासीत् – पूर्वदक्षिणपश्चिमोत्तरमध्यभागाः। अत्राऽनेके जनपदा व्यवस्थिता अवर्तन्त। तेषां सङ्केतः पूर्वमेवाऽस्माभिः कृतः। प्राचीनसंस्कृतरूपकेषु प्रसङ्गवशादनेकेषां जनपदानामुल्लेखाः विद्यन्ते। वर्णक्रमानुसारं तेषां विवरणान्यत्र प्रस्तूयन्ते।

## (१) अङ्गाः –

बौद्धकालीनेषु प्रसिद्धेषु षोडशजनपदेषु जनपदस्याऽङ्गस्य गणना विधीयते[१]। पूर्वभारते स्थितस्याऽस्य जनपदस्य राजधानी चम्पाऽवर्तत[२]। अङ्गजनपदोऽयं मगधबङ्गजनपदयोर्मध्यवर्त्यासीत्। महाभारतीया कथा प्रसिद्धा यद् दुर्योधनेन कर्णोऽस्य जनपदस्य राजपदेऽभिषिक्तः[३]। अतः सूतपुत्रोऽयं कर्णोऽङ्गराजनाम्नाऽङ्गेश्वराभिधानेन वा प्रसिद्धो बभूव[४]। अङ्गजनपदमध्यभूमिभागे प्रवहन्त्याः गङ्गायाः सलिलस्याऽऽचमनेन कर्णोऽपि पावित्र्यं जगाम[५]।

भारतवर्षस्य प्राचीनैतिहासिकवर्णनानुसारमङ्गराज्यस्य स्थापना सुदेष्णाबलिसुतेनाऽङ्गेन विहितेति पुराणेषु प्रसिद्धम्[६]। महाभारतेऽयं जनपदः पूर्वीयेषु जनपदेषु परिगणितः। रामायणे चाऽप्यस्य पूर्वीयेष्वेव जनपदेषु सूचना लभ्यते। महाभारतवर्णनानुसारं भीमसेनोऽङ्गजनपदं विजितवान्[७]। रामायणे च वर्णनं विद्यते यदङ्गजनपदस्य राजा रोमपादो दशरथस्य मित्रमासीत्[८]। दशरथो निजसुतां शान्तां रोमपादाय धर्मसुतारूपेण ददौ[९]।

मुरारिसमये सम्भवतो गौडाङ्गजनपदावेकशासनान्तर्गताववर्तेताम्। तेन गौडजनपदराजधानी चम्पा प्रोक्ता[१०], या सर्वत्र ह्यङ्गजनपद-राजधानी वर्णितोपलभ्यते। शक्तिभद्रोऽङ्गजनपदस्य नरपतिं जयरथमवर्णयत्[११]। प्रियदर्शिका ह्यङ्गराजसुतेति प्रियदर्शिकानाटिकायां हर्षेण प्रोक्तम्। कालिदासोऽप्यङ्गजनपदमुल्लिलेख। इन्दुमतीस्वयंवरे मगधराजोऽङ्गराजश्च समीपवर्तिनौ भूत्वाऽतिष्ठताम्[१२]।

अङ्गजनपदस्य स्थितिर्वर्तमानबिहारप्रान्ते वैद्यनाथनगरादारभ्य

भुवनेश्वरपर्यन्तमवर्तत। भागलपुरमुंगेरप्रदेशावेतदन्तर्गतावास्ताम्[१३]। कथासरित्सागरकारेण वर्णितम् -

अङ्गजनपदसीमान: समुद्रपर्यन्तं विस्तीर्णा: सन्ति[१४]।

## (२) अपरान्ता:-

पादताडितकभाणे श्यामिलकेन वर्णितम् -

मगधसेनापतिरपरान्तानजयत्[१५]। रघुरपि जनपदमेतं जिगाय[१६]। दिग्विजययात्रायामसौ जेतुमपरान्तान् सह्यगिरिशृङ्खलामुल्लंघ्या-ऽग्रे ससार।

अपरान्तजनपदस्य स्थितिर्विचारणीया वर्तते। केचन विद्वांसो वर्तमानकोंकणप्रदेशमपरान्तजनपदमामनन्ति। केचन च मनीषिण: समीक्षका: समग्रं पश्चिमसमुद्रतटवर्तिप्रदेशमेवाऽपरान्तजनपदं कथयन्ति[१७]। सामान्यत: सह्यपर्वतस्य पश्चिमसमुद्रतटस्य च मध्यवर्तिनी भूमिरपरान्तजनपदो वर्तते। अत्र नन्दलाल डे महोदयस्य सम्मतिरस्ति-

भीमासरित्सहायिकाया: मुरलानद्या: दक्षिणवर्तिनी भूमिरेवा-ऽपरान्तजनपद:[१८]।

भगवतशरणोपाध्याय: सह्यगिरिपश्चिमसमुद्रतटयोर्मध्यवर्तिनं भूमिभागमपरान्तजनपदमब्रवीत्। तद्दक्षिणतश्च केरलजनपदो वर्तते[१९]। कैम्ब्रिज हिस्ट्री आफ इण्डियेति नाम्नि ग्रन्थे ह्युत्तरकोंकणप्रदेश एवाऽपरान्तजनपदो मत:। राजधानी चाऽस्य शूर्पारकनगर (वर्तमान नालसोपारा) मासीत्[२०]।

ब्रह्माण्डपुराणेऽपरान्तेन सह शूर्पारकस्य वर्णनमुपलभ्यते। जनपदमेतं जलनिधि: परशुरामाय समुपाजहार[२१]। महाभारते शूर्पारक-प्रदेशोऽयमपरान्तजनपदस्यैवैको भाग: प्रोक्त:[२२]।

## (३) अवन्त्य: -

बौद्धकालीनेषु षोडशमहाजनपदेषु ह्यवन्तीजनपदस्याऽपि गणना विद्यते। भारतीयेतिहासे संस्कृतसाहित्ये चाऽयं जनपदो महान्तं गौरवं

विधत्ते। केषुचित्समयेष्वयं जनपदो भारतीयसाम्राज्यस्य केन्द्रमवर्तत।

ई० पू० षष्ठशताब्द्यामवन्तीजनपदस्य पार्थिवश्चण्डप्रद्योतोऽवर्तत। वत्सराजेन सह तस्य प्रबलः प्रतिद्वन्द्विताभावोऽभवत्। चण्डप्रद्योतस्य सुता वासदत्ताऽऽसीत्। उदयनवासदत्तयोर्विवाहेन सह विरोधोऽयं प्रशान्ततां गतः। कथासरित्सागरे वर्णनानि समुपलभ्यन्ते – उदयनानन्तरं चण्डप्रद्योतस्य पुत्रः पालको वत्सजनपदं विजित्य कौशाम्बीमधिचक्रे।

उत्तरवर्तिनि युगेऽवन्तिजनपदस्योज्जयिन्याश्च गौरवं ववृधे। मौर्ययुगादारभ्य गुप्तयुगपर्यन्तमवन्तीजनपदो भारतीयसाम्राज्यस्य शासनकेन्द्रं बभूव। तस्य च राजधानी विशाला (उज्जयिनी) तत्कालीनानां भूपतीनां द्वितीया राजधानी बभूव। परन्तु शुङ्गवंशीयाः नरपालाः विदिशामेव द्वितीयं शासनकेन्द्रं स्वीचक्रिरे। नगरमिदम-प्यवन्तीजनपदान्तर्गतमभवत्।

कविभिरवन्तीजनपदस्य सहृदयहृदयहारीणि वर्णनानि विहितानि शूद्रकेन लिखितम् –

अवन्तिपुर्यां चारुदत्तो नाम ब्राह्मणो वसन्तसेना च गणिकाऽवर्तत[२३]।

अत्र शूद्रकस्याऽभिप्रायो नाऽवन्तिजनपदः, परं तस्य राजधानी ह्युज्जयिनी वतति। राजधानीभावात्सा नगरी कविनाऽवन्तिपुरी प्रोक्ता। मुरारिणा वर्णितम् –

रामस्य पुष्पकविमानं द्रविडजनपदादुत्तरदिश्युत्पतन्नवन्तीमुल्लंघ्य चेदिमण्डलं सम्प्राप। अनेन वर्णनेन सिद्धमेव यदवन्तीजनपदो-द्रविडदेशादुत्तरस्यां चेदिमण्डलाच्च दक्षिणदिश्यवर्तत, रेवासरित्प्रवाहो-ऽवन्तीजनपदस्य भूभागेषु समवर्तत[२४]।

केचन समीक्षका अवन्तीजनपदमेव मालवजनपदमभिदधति। रीज डेविड महोदयो लिखति[२५] –

ईसवीद्वितीयशताब्दिपर्यन्तमयं जनपदोऽवन्तीति नाम्ना प्रसिद्ध आसीत्। परमुत्तरवर्तिनि कालेऽयं मालवजनपदाभिधानेन प्रथितां गतः।

षष्ठशताब्द्यां सप्तमशताब्द्यां वाऽयमवन्तीजनपदो मालवाभिधानेन प्रसिद्धो बभूवेति आप्टे महोदयस्य सम्मतिरस्ति[२६]।

राजशेखरोऽवन्तीविषयं मालवजनपदञ्च ह्येकमेवाऽसात्स्यत्। अथ च परमारनृपतयो देशमेनं शशासुः[२७]। कालिदासेनाऽवन्तीजनपदो बहुधा वर्णितः। प्राचीनसाहित्ये वत्सराजोदयनस्याऽवन्त्यधिपस्य चण्डप्रद्योतस्य च परस्परं विरोधो संलक्ष्यते। ततो वत्साधिपेन वासवदत्तायाश्चण्डप्रद्योतसुताया अपहरणघटनावृत्तमपि प्रसिद्धं बभूव। ततः साहित्येऽवन्तीजनपदोऽपि प्रसिद्धिं लेभे[२८]।

वर्तमानमालवनिमाडभूमयः समीपवर्तिनश्च भूभागा अवन्तीजनपदान्तर्गता अवर्तन्त।

राजशेखरो वर्णयति -

वर्षर्तौ मालवजनपदे शस्यानि समुद्भवन्ति, नायकाश्च नायिकाभिः सह विलासानुपभुञ्जते। राजशेखरस्याऽयं मालवजनपदोऽवन्तीजनपद एव वर्तते। अत्र मालवजनपदाभिधानकरणस्येतिहासोऽपि प्रसिद्धः।

प्राचीनसमये मालवप्रदेशो वर्तमानपञ्चनप्रदेशस्य मध्यभागोऽवर्तत। जनपदोऽयं मालवगणस्य निवासो बभूव।

यूनानदेशवास्तव्यस्याऽऽक्रमणकारिणः सिकन्दरसम्राजो मालवगणेन सह सर्वप्राणिभयङ्करो जनविनाशकः सङ्गरो बभूव। पराजिताः मालवगणजनाः दक्षिणदिशं प्रवव्रजुः। राजपुत्रदेशमतिक्रम्य तेऽवन्तीन् सम्प्राप्नुवन्। तदनन्तरं प्रदेशोऽयं मालवप्रदेशनाम्ना प्रसिद्धो बभूव।

वर्तमानसमयेऽपि पञ्चनदप्रदेशस्य मध्यभागो मालवप्रदेशोऽभिधीयते। परमद्याऽसौ पाकिस्तानदेशान्तर्गतो विद्यते। सिन्धुसङ्गमपर्यन्तं विस्तीर्णश्चन्द्रभागैरावतीमध्यवर्ती द्वयापप्रदेश एव मालवप्रदेशः। मुलतानमोंटगुमरी जनपदावेतदन्तर्गतौ वर्तेते।

केषुचिद् ग्रन्थेषु मालवजनपदस्य द्वौ भागौ प्रोक्तौ -

पूर्वमालवजनपदः पश्चिममालवजनपदश्च। पूर्वभागो ह्याकरो वैदिशो वा प्रोक्तः पश्चिमभागश्चाऽवन्ती। शक्तिसङ्गमतन्त्रग्रन्थेऽवन्तीमालवौ पृथक् जनपदौ प्रोक्तौ[२९]। तत्राऽवन्तीजनपदः प्रतीच्यां मालवजनपदश्च प्राच्यां वर्तते। पादताडितकभाणे पूर्वावन्तीनां वर्णनमस्ति[३०]। अनेन वर्णनेनाऽयमर्थोऽभिव्यज्यते -

अवन्तीनां पश्चिमवर्ती भूभागः पृथक् प्रदेशोऽवर्तत। सम्भवतः पूर्वावन्तीप्रदेश एव मालवजनपद आसीत्। डी० आर० भाण्डारकर-महोदयस्य मतमस्ति -

अवन्तीजनपदो द्वयोर्भागयोर्विभक्त आसीत् - उत्तरो दक्षिणश्च। उत्तरभागस्य राजधानी ह्युज्जयिनी बभूव, दक्षिणभागस्य च माहिष्मती[३१]।

सामान्यत उत्तरस्यां ग्वालियरप्रदेशादारभ्य दक्षिणदिशि च नर्मदासरित्पर्यन्तं विस्तृतो मालवप्रदेशः प्राचीनाऽवन्तीजनपदान्तर्गतो बभूव। प्रदेशस्याऽस्य मुख्यो भूमिभागो वेत्रवतीचर्मण्वतीसरितो-र्मध्यवर्त्यवगन्तव्यः। १८१० ई० पर्यन्तमस्य देशस्य राजधानी ह्युज्ज-यिन्यासीत्। परं तदनन्तरं सिन्धियावंशीयैर्नृपतिभी राजनीतिककारणै-रुत्तरस्यां ग्वालियरनगरं राजधानीरूपेण व्यवस्थापितम्।

**(४) अश्मकाः -**

अश्मकजनपदस्योल्लेखो वीणावासदत्तनाटके विद्यते। अत्रत्येन राजकुमारेण सञ्जयेन सह प्रद्योतोऽवन्त्यधिपः स्वसुतायाः वासवदत्तायाः परिणयनं निश्चिकाय[३२]।

पुराणेष्वश्मकजनपदस्य गणना दक्षिणभारतस्य जनपदेषु विद्यते[३३]। बौद्धसाहित्येऽप्यश्मकानामुल्लेखो विद्यते। गोदावरी-सरित्तटावस्थितस्याऽस्य जनपदस्य राजधानी प्रतिष्ठानपुरमासीत्।

वायुपुराणेऽश्मकजनपदस्य वर्णनमस्ति[३४]। महाभारते वर्णनं विद्यते - पार्थिवस्य कल्माषपादस्य सुतस्याऽश्मकस्य नाम्ना जनपदस्याऽस्य नामकरणं बभूव[३५]।

बौद्धसाहित्ये गोदावरीसरित्तटावस्थितस्याऽश्मकजनपदस्य गणना षोडशमहाजनपदेषु वर्तते[३६]।

### (५) आन्ध्राः -

आन्ध्राणामुल्लेखो दक्षिणभारतजनपदेषु विद्यते। ऐतरेयब्राह्मणे ह्यान्ध्रजातिरुल्लिखिता लभ्यते। तन्नाम्नैवाऽऽन्ध्रजनपदः प्रसिद्धो बभूव। महाभारतेऽप्यान्ध्राणां वर्णनान्यनेकशो विद्यन्ते। मौर्यसम्राजोऽशोकस्य शिलालेखेष्वान्ध्राः मौर्यसाम्राज्यान्तर्गता उट्टङ्किताः।

मुरारिणा वर्णितम् -

आन्ध्रजनपदो गोदावर्याः सप्तधाराभिः परिवेष्टितो वर्तते। अथ चाऽयं जनपदो भीमेश्वरशिवस्य विशालेन भव्येन मन्दिरेण सुशोभते[३७]।

आन्ध्राणां मध्यवर्तिषु भूभागेषु गोदावरी सरित् प्रवहतीति राजशेखरेण सङ्केतितम्[३८]। आन्ध्रतरुणीनां दृष्टिपाताः भस्मीभूतस्य कामदेवस्य सञ्जीवनौषधयो वर्तन्ते[३९]। केशानां दीप्तये ताः प्रचुरं विशिष्टं तैलमुपयुञ्जन्ति[४०]।

वात्सायनेनाऽऽन्ध्रेषु प्रचलितायाः परम्परायाः एकस्याः वर्णनं कृतम् - तत्र नवविवाहितयुगलानि पाणिग्रहणसंस्काराद् दशमे दिवसे पार्थिवस्याऽन्तःपुरमुपहारैः सह गच्छन्ति[४१]।

भारतीयेतिहासे गौतमिपुत्रः शातकर्णिरान्ध्रनृपतिषु ह्यतिशयेन प्रसिद्धिं लेभे। ई० द्वितीयशताब्द्याः पूर्वार्द्धे तस्य शासनकालोऽविद्यत। आन्ध्रसमुद्रतटे ह्युत्तमकोटिकाः पोताशया अवर्तन्त। अतोऽयं जनपदः समुद्रपारीयव्यापारेण सुसमृद्धो बभूव।

वर्तमानान्ध्रदेशीयस्तेलङ्गानाप्रदेश एव प्राचीनकालीनो ह्यान्ध्र-जनपदोऽवर्तत। गोदावरीकृष्णासरितौ पूर्वसमुद्रश्चाऽस्य सीमाः निर्धारयन्ति। आन्ध्राणामुत्तरदिशि कलिङ्गाः दक्षिणदिशि च द्रविडा आसन्।

## (६) उत्कलाः -

राजशेखरेण औड्रजनपदस्य वर्णनं विहितम्[४२]। वर्तमानोडीसाप्रदेश एव प्राचीनकालीन औड्रजनपदोऽविद्यत। औड्रपदस्याऽपभ्रंशो विद्यते - उड़ीसा। अथ च उड़ीसा एव वर्तते - उत्कलजनपदः।

भगवतशरणोपाध्यायेन सम्मतिरुपस्थापिता -

कलिङ्गजनपदस्योत्तरीयो भूभाग एवोत्कलजनपदनाम्ना प्रसिद्धो बभूव। परमिदं पदमुत्कलिङ्गजनपदस्याऽपभ्रंशम्।

वायुपुराणकारेण प्रोक्तम् - सुद्युम्नसुतस्योत्कलस्य नाम्ना उत्कलजनपदः प्रसिद्धो बभूव[४३]। स्कन्दपुराणे उत्कलजनपदस्य स्थितिः स्वर्णरेखामहानदीसरितोर्मध्यवर्तिनी भूमिः प्रोक्ता[४४]।

कालिदासेनोत्कलकलिङ्गौ पृथक् पृथक् जनपदौ निर्दिष्टौ[४५]।

## (७) उत्तरकुरवः -

प्राचीनसाहित्ये कुरुजनपदस्योत्तरकुरुजनपदस्य च वर्णनानि विस्तरेण समुपलभ्यन्ते। कुरुजनपदो द्वयोर्विभागयोर्विभक्तोऽवर्तत - कुरव उत्तरकुरवश्च। इन्द्रप्रस्थस्य दक्षिणवर्तिभूभागादारभ्य हिमालयपर्यन्तं समतलभूमिभागाः कुरुजनपदान्तर्गता अवर्तन्त। हिमालयस्य पर्वतीयाः प्रदेशा उत्तरकुरव आसन्। समतलभूमिभागेषु कुरुषु कुरुवंशीयानां भूमिपालानां शासनमवर्तत। परमुत्तरकुरवो न तथा तेषां शासनान्तर्गताः प्रत्यक्षरूपेणाऽऽसन्।

भाससमये हिमालयस्य पर्वतीयभूभागानुपलक्ष्य विविधलोकविश्वासाः प्रचलिता आसन्। उत्तरकुरुषु स्वर्गीयाप्सरसो निवसन्ति। तत्र विविधाः विलाससम्पदोऽपि प्राचुर्येण भवन्ति। भासेन वर्णितम् -

उत्तरकुरुषु विद्याधरजातीयानां जनानां निवासो विद्यते। एको विद्याधरः प्रतिदिवसं प्रातःसमयमुत्तरकुरुषु व्यतियाप्य मानससरसि स्नाति, तदनन्तरञ्च मन्दरपर्वतकन्दरासु विलासक्रीडामनुभूय विविध-विलासासक्तचित्तो हिमवद्गुहासु विहरति[४६]।

वर्णनेनाऽनेन सिध्यति, यद्धिमवत उत्तुङ्गपर्वतभूमिभागा उत्तरकुरुजनपदान्तर्गता विज्ञायन्ते स्म।

उत्तरकुरुजनपदस्य वर्णनमेतरेयब्राह्मणेऽप्युपलभ्यते। वैराज्यं चाऽयं जनपदः प्रोक्तः[४७]। रामायणे महाभारते चोत्तरकुरूणां वर्णनानि विस्तरेण वर्तन्ते। जनपदोऽयमतिदुर्गमः प्रोक्तः। जानकीं रावणेनाऽपहृतामन्वेष्टुं प्रहितान् वानरान् सुग्रीवोऽकथयत् –

भवद्भिरुत्तरकुरवोऽन्वेष्टव्यास्तदनन्तरञ्च भवतां गतिरसम्भवा।

दिग्विजययात्रायै प्रगच्छन्तमुत्तरकुरुजनपदं विजिगीषुमर्जुनं तत्रत्याः द्वारपाला अवोचन् –

नाऽत्र भवतो विजययात्रायाः किमपि प्रयोजनं विद्यते। दिव्यदेशेऽस्मिन् मानवशरीरधारी भवान् न किञ्चिदपि द्रष्टुं क्षमते। अत्र युद्धपरम्परा न विद्यते।

बहुभिः समीक्षकैरुत्तरीयध्रुवप्रदेश एवोत्तरकुरुजनपदोऽभिमतः। लोकमान्यतिलकमहोदयः स्वकीये ओरियन नामके ग्रन्थे नार्वेदिशमुत्तरीय-ध्रुवप्रदेशञ्चोत्तरकुरुजनपदं साधयितुं प्रययास। आर्याणामादिदेशोऽयमिति तस्याऽवधारणा। परमत्र सबलानां प्रमाणानामभाव एव।

प्रसङ्गैरेतैरुत्तरकुरुजनपदविषये न काचिन्निश्चिता धारणा समुदेति। परमेतत्तु निर्विवादमेव यदुत्तरकुरुषु ह्युत्तुङ्गपर्वतशृङ्खलानां सद्भावादगम्य एवाऽयं जनपदः प्राचीनकाले लोकैर्ज्ञायते स्म।

सम्भवतः समतलभूभागसन्निविष्टाः हिमगिरिप्रदेशाः गहनवनैराच्छादिताः कुरुजाङ्गलनाम्ना प्रसिद्धा अभूवन्। उत्तरवर्ती-चाऽगम्यो देश उत्तरकुरुनाम्ना प्रथितो बभूव।

## (८) कर्णाटाः –

दक्षिणापथवर्तिकर्णाटजनपदेन राजशेखरः सुपरिचितो बभूव[४८]। बालरामायणे तेन जनपदोऽयं प्राकृतभाषायां कण्णद इति प्रोक्तः[४९]। कर्णाटजनपदमध्ये कावेरी सरित् प्रवहति[५०]। कर्णाटदेशीयानां कामिनीनां

कानिचिद् वैशिष्ट्यानि तेन कविना वर्णितानि। कामवर्धकदृष्टिपातैः सुशोभिता[५१] एतास्ताण्डवनृत्ये सुनिपुणाः भवन्ति[५२]।

मुरारिः जनपदमेतं कर्णाटकं लिखति[५३]। क्षेमीश्वरसमये कर्णाटजनपदस्याधिपो महीपालदेवो बभूव[५४]।

वर्तमानकर्नाटकराज्यमेव प्राचीनकालीनः कर्णाटजनपदो विद्यते। मैसूराः कुर्गाश्च जनपदस्यास्याऽन्तर्गताः वर्तन्ते।

## (९) कलिङ्गाः –

प्राचीनसाहित्ये कलिङ्गानां वर्णनानि प्राचुर्येण समुपलभ्यन्ते। जनपदोऽयमतिसमृद्धोऽवर्तत। मौर्यवंशीयानां नरपतीनामितिहासे जनपदेनाऽनेन महती प्रसिद्धिरधिगता। मौर्यसम्राडशोकः कलिङ्गान् आचक्राम। परमस्मिन् महाविनाशके सङ्गरे भीषणजनसंहारमवलोक्य विरक्तोऽसौ बौद्धमतमनुसृत्य शान्तिस्थापनव्रतमङ्गीचकार।

कलिङ्गजनपदसीमानो ह्युत्तरस्यामुत्कलजनपदादारभ्य दक्षिणदिशि गोदावरीसरित्पर्यन्तं विस्तृता आसन्। प्राच्यामयं जनपदः पूर्वसमुद्रेण (बङ्गसागरेण) सीमाबद्धो बभूव। एवञ्चाऽस्य स्थितिर्भारतवर्षस्य दक्षिणपूर्वदिग्विभागेऽवर्तत।

वायुपुराणे[५५] मत्स्यपुराणे[५६] च कलिङ्गानां गणना दाक्षिणात्येषु जनपदेषु वर्तते। परन्तु गरुडपुराणे[५७] बृहत्संहितायां[५८]ञ्चैषो जनपदः पूर्व-दक्षिणदिग्वर्ती प्रोक्तः।

कलिङ्गानां राजधानी सम्भवतः कलिङ्गनगरं राजमहेन्द्री-गिरिशृङ्खलामध्ये स्थितमवर्तत। समुद्रस्तावदस्मात् स्थानात् किञ्चिद्विप्रकृष्टान्तरालवर्ती बभूव।

खारवेल्लस्य महीपालस्य (ई० प्रथम शताब्दी) अभिलेखेषु कलिङ्गनगरस्योल्लेखो विद्यते।

महाभारते कलिङ्गजनपदराजधानी दन्तपुरमिति प्रोक्ता[५९]। महावस्तुग्रन्थेऽपि दन्तपुरमेव कलिङ्गजनपदराजधानी वर्तते[६०]। नन्दलाल

डे महोदयस्याऽभिमतमस्ति, यद् वर्तमानकालीना पुरी नगर्येव प्राचीनं दन्तपुरमस्ति[६१]।

पादतादिडतकभाणे कलिङ्गनगरनिवासिनां नागरिकाणां केषाञ्चिदुपस्थितिरुज्जयिन्यां वर्णिता समुपलभ्यते[६२]। हर्षोऽङ्गजनपदे कलिङ्गाधिपस्याऽऽक्रमणवृत्तमवर्णयत्[६३]।

भागवतपुराणानुसारं बलिसुतस्य कलिङ्गस्य नाम्ना कलिङ्ग-जनपदस्य प्रतिष्ठा बभूव[६४]।

राजशेखरः कलिङ्गानां समुद्रतीरवर्तिनीं प्राकृतिकमनोरमसौन्दर्य-शोभामुद्घाटयामास। अत्र तालीनारिकेलताम्बूलपूगादिवनस्पतयः प्राचुर्येण भवन्ति[६५]।

## (१०) काम्बोजाः –

बौद्धसाहित्ये काम्बोजस्य गणना षोडशमहाजनपदेषु वर्तते। अति प्राचीनोऽयमासीज्जनपदः। वैदिकसाहित्यरचनायुगे काम्बोजजनपदो वैदिकसभ्यतायाः केन्द्रमासीत्। वंशब्राह्मणे काम्बोजजनपदीयस्यौपमन्यु-रित्यभिधानस्याऽऽचार्यस्य वर्णनमस्ति। परन्तु पूर्वदिग्वर्तिनो जनपदान् प्रति प्रव्रजत्स्वाचार्येषु काम्बोजेष्वार्यसभ्यतायाः विलोपो बभूव। अतो यास्काचार्योऽन्ये च महर्षयः काम्बोजान् प्रति तिरस्कारमेवाऽभिव्यानञ्जुः।

महाभारते वर्णनमस्ति, यत् कर्णो राजपुरं गत्वा काम्बोज-जनपदमजयत्। काश्मीरान्तर्गतवर्तमानराजौरीनगरमेव प्राचीनकालीनं राजपुरमिति कनिंघममहोदयस्याऽभिमतं वर्तते[६६]। ह्वेन्त्सांगमहोदयोऽपि राजपुरनगरमवर्णयत्।

प्राचीनवर्णनानि प्रतिपादयन्ति यत् काम्बोजजनपदस्य स्थिति-र्वर्तमानकाश्मीरराज्यस्योत्तरपश्चिमवर्तिन्यासीत्। महाभारतस्याऽर्जुन-दिग्विजयवर्णनेषु[६७], रघुवंशस्य रघुदिग्विजयवर्णनेषु[६८] राजतरङ्गिण्याश्च[६९] कतिपयवर्णनेषु काम्बोजानामियमेव स्थितिरभिव्यज्यते। एवञ्चाऽस्य जनपदस्य स्थितिः सिन्धुसरित्पारे हिन्दूकुशपर्वतक्षेत्रे भवितव्या।

वस्तुतः प्राचीनकाले काम्बोजकपिशगान्धारबाह्लीकजनपदाः परस्परसंसक्ताः हिन्दूकुशपर्वतसमीपस्था अवर्तन्त। वर्तमानाफगानिस्तानमानचित्रेण तेषां स्थितिः स्पष्टीभवति।

हिन्दूकुशपूर्वदिशि काम्बोजाः, उत्तरपश्चिमदिशि बाह्लीकाः दक्षिणपूर्वदिशि गान्धाराः दक्षिणपश्चिमदिशि च कपिशा अवर्तन्त। वर्तमानबदख्शांप्रदेशः पामीरक्षेत्रञ्चैव काम्बोजा आसन्। जयचन्द्रविद्यालङ्कारेण वर्तमानगान्धारकाश्मीरप्रदेशानामाधुनिकपामीरक्षेत्रं पश्चिमदिशि च बदख्शांक्षेत्रमेव काम्बोजजनपदोऽभिमतः[७०]। बुद्धसमये काम्बोजजनपदो गणराज्यमासीत्। परन्तु मौर्यसम्राट् चन्द्रगुप्तः काम्बोजजनपदं विजित्य मौर्यसाम्राज्ये सन्निविष्टञ्चकार।

वासुदेवशरणोऽग्रवालमहोदयः पामीरक्षेत्रमेव काम्बोजजनपदमाह[७१]। परं सरकारमहोदयस्याऽभिमतं विद्यते, यत् काम्बोजजनपदस्य मौर्यसाम्राज्यान्तर्गतभावाद् वर्तमानकन्दहार एव काम्बोजजनपदोऽभिमन्तव्यः[७२]।

कालिदासो रघोर्दिग्विजयप्रसङ्गे काम्बोजानपि सम्मिलितानकरोत्[७३]। बृहत्संहितायां काश्मीरकाम्बोजजनपदयोः स्थितिः सहभावेन प्रोक्ता[७४]। अतः पामीरक्षेत्रमेव काम्बोजजनपद इति मतमेव समुचितम्। परं कनिंघममहोदयो राजौरीक्षेत्रमेव काम्बोजजनपदं मेने[७५]।

संस्कृतकविभिः काम्बोजजनपदस्य गजानामश्वानाञ्च प्रशंसा कृता। श्यामिलकेन प्रोक्तम् - काम्बोजीयाः गजाः उज्जयिन्यामानीयन्ते[७६]। भासोऽत्रत्यानश्वान् प्रशस्तान् मेने[७७]।

### (११) कारूषाः -

पादताडितकभाणे मलदकारूषाधिपतिरुज्जयिन्यां भ्रमन् वर्णितः[७८]। द्वयोरनयोर्जनपदयोरधिपतेरेकस्यैव सद्भावात् तयोः स्थितिः परस्परसंसक्ताऽनुमेया। वर्तमानबिहारराज्यस्य शाहाबादजनपद एव कारूषोऽवर्ततेति विद्वद्भिरनुमीयते। यदि च वर्तमानमाल्दाजनपदो

मलद इति मन्येत, तत्पूर्वीदिग्वर्ती शाहाबादजनपद एव कारूष इत्यत्र नाऽपि काऽपि विप्रतिपत्तिरवगन्तव्या।

रामायणे महाकाव्ये कारूषमलदाङ्गजनपदाः सहभावेन वर्णिताः- अतः कारूषजनपदस्य स्थितिर्निश्चयरूपेण विहारराज्ये मन्तव्या।

प्राचीनसाहित्येऽन्यस्याऽप्येकस्य कारूषजनपदस्य वर्णनमुपलभ्यते। पर्जीटरमहोदयेन काशीवत्सजनपदयोर्दक्षिणदिशि चेदिमगधजनपदयोर्मध्यवर्तिषु पर्वतीयक्षेत्रेषु कारूषजनपदस्य स्थितिः प्रतिपादिता। वर्तमानरीवानगरमेवाऽस्य केन्द्रस्थानम्। विस्तारश्चाऽस्य केनसरित आरभ्य विहारराज्यसीमान्तभूभागान् स्पृशति[७९]।

महाभारतकारेण कारूषचेदिजनपदयोर्वर्णनानि सहभावेन प्रस्तुतानि[८०]। तयोश्चाऽधिपावपि सहभावेनाऽवलोक्येते स्म[८१]। अतस्तयोर्जनपदयोः सहसंलग्ना स्थितिर्ध्रुवं कल्पनीया।

विजयेन्द्रकुमारमाथुरमहोदयस्याऽभिमतं विद्यते, यत् कारूषजनपदश्चेदिजनपदतो दक्षिणेन मन्तव्यः। वर्तमानजबलपुरक्षेत्रं यदि चेदिजनपदो गण्यते, तद्दक्षिणतो बघेलखण्ड एव कारूषजनपदो निश्चीयते। विष्णुपुराणे कारूषमालवपारियात्राणां सहभावस्थितिवर्णनानि[८२] माथुरमहोदयस्य कल्पनां प्रमाणयन्ति।

## (१२) काश्यः -

काशीजनपदस्य गणना बौद्धकालीनेषु षोडशमहाजनपदेषु विधीयते। कोशलजनपदतो दक्षिणेन स्थितोऽयं जनपदः पूर्वीयेषु जनपदेष्वभिमतः, राजधानी चाऽस्य जनपदस्य काशीनगरी प्रोक्ता। वाराणसीनाम्नाऽपि चेयं नगरी प्रथिता बभूव। प्राचीनकाले केषुचित्समयेषु जनपदोऽयमतिशक्तिसम्पन्नो लोके गण्यते स्म।

काशीजनपदः प्राचीनसाहित्ये महान्तं महिमानं गौरवञ्च दधाति। अथर्ववेदस्य पैप्पलादसंहितायां काशीजनपदः कोशलविदेहजनपदाभ्यां सह वर्णितः। रामायणे महाभारते पुराणेषु च जनपदस्याऽस्य

विस्तरेण वर्णनानि सन्ति। भीष्मः स्वभ्रातृभ्यः काशिराजस्य तिस्रः कन्यका अपजहार। काशीजनपदस्थापनायां कथा प्राचीना प्रसिद्धा, यन्मनोर्वंशे सप्तमो राजा काशो बभूव। तस्य नाम्ना जनपदोऽयं काशीत्यमिधानेन प्रसिद्धो बभूव।

प्राचीनविवरणानि कार्शी शिवस्य नगरीमविनश्वरीं मोक्षदायिनीं प्रतिपादयन्ति। शिवत्रिशूलत्रिकोणसंस्थिता सा काशिसेविनां जनानां सकलानघान् छिनत्ति। भारतस्य प्रमुखतीर्थोऽयमतिसमृद्धिशाली वर्तते। अत्रत्यानां मन्दिराणां वैभवैश्वर्याणि विलोक्याऽन्यजनपदनृपतयः प्रायशो लोभवशंवदाः बभूवुः। ह्वेन्त्सांगमहोदयेन काशीयात्राऽपि कृता। परन्तु मोहम्मदीयानां बर्बरहिंसकाक्रमणैः काशीजनपदस्य महती हृदयविदारिणी दुर्दशा विहिता। मन्दिराणि भङ्क्त्वा मसजिदानां यत्र तत्र रचना तैः कारिता। तेषामवशेषा अद्यापि यत्र तत्र समवलोक्यन्ते धर्मपरायणानाञ्च जनानां हृदयानि उत्पीडयन्ति।

काशीजनपदस्य स्थितिः कोशलजनपदतो दक्षिणदिश्यवर्तत। द्वयोरेतयोर्जनपदयोः राजनीतिकप्रतिद्वन्द्विता शत्रुता च प्राचीनसाहित्ये प्रायशोऽभिव्यज्यते। अयमेव हेतुर्यत् पतञ्जलिना काशिकोशिलीयपदस्य निर्वचनं कृतम् (येषाञ्च विरोधः शाश्वतिकः)[८३]। काशीमुपलक्ष्य मगधराजकोशलाधिपयोरजातशत्रुप्रसेनजितोः परस्परं महाभयङ्करो लोमहर्षणश्च सङ्गरो बभूव। सङ्गरेऽस्मिन् कोशलधिपः प्रसेनजित् पराजितो बभूव।

प्राचीनसंस्कृतनाटकेषु काशीजनपदस्योल्लेखोऽनेकेषु प्रसङ्गेषु वर्तते। भासेन काशिराजः कुन्तिभोजस्य भगिनीपतिः प्रोक्तः। तेन स्वसुतस्य अविमारकस्य कुन्तिभोजस्य सुता कुरङ्गी प्रार्थिता[८४]। वासवदत्ताविवाहप्रसङ्गे पञ्चानां शक्तिशालिनां नरपतीनामुल्लेखो प्रतिज्ञायौगन्धरायणनाटके वर्तते। तत्र काशिराजस्य नामाऽपि विद्यते[८५]। काशिराजः स्वयमपि वासवदत्तया सह परिणयनं प्रास्तौत्[८६]।

काशीजनपदस्य गणिकाया उज्जयिन्यामुपस्थितिं श्यामिलकोऽवर्णयत्। काशीजनपदस्य नागरिका अपि केचन उज्जयिन्यां न्यवसन्[८७]। शक्तिभद्रेण काशीजनपदस्य विष्णुसेनस्योल्लेखः कृतः[८८]।

वर्तमानकालीनः काशीजनपद एव प्राचीनकालवर्णितः काशीजनपदो विद्यते। गङ्गातटसमवस्थितेयं नगरी जनपदोऽपि विद्यते।

**(१३) काश्मीराः -**

विशाखदत्तः काश्मीरजनपदमुल्लिलेख। काश्मीराधिपः पुष्कराक्षो मलयकेतोः पञ्चप्रधानसहायकेष्ववर्तत[८९]।

अतिप्राचीनः प्रसिद्धः काश्मीरजनपदः कश्यपमुनिसम्बन्धेन गौरवं महिमानञ्च सम्प्राप। पुराणेषु कथा प्रसिद्धा -

काश्मीरद्रोणी महासरोरूपेणाऽवर्तत। कश्यपो मुनिस्तत्रत्यानि सलिलानि निष्कास्य तां द्रोणीं मनुष्यनिवासयोग्यां व्यदधात्। अतोऽयं जनपदः कश्यपमेरुनाम्ना कश्यपमीराभिधानेन वा प्रथितां गतः। उत्तरवर्तिनि काले जनपदोऽयं काश्मीराभिधानो बभूव। काश्मीरजनपदराजधान्याः श्रीनगराद् द्विक्रोशान्तरालवर्तिनि हरिपर्वते कश्यपमुनेर्निवासोऽवर्ततेति किम्वदन्ती काश्मीरेषु प्रसिद्धा।

काश्मीरजनपदस्य गणना भारतस्योत्तरवर्तिषु जनपदेषु विधीयते। प्राचीनसमये महान् शक्तिसम्पन्नो जनपदोऽयं शिक्षाया अपि प्रसिद्धं केन्द्रस्थलमभवत्। राजतरङ्गिण्यामत्रत्यानां पराक्रमशालिनां नरपतीनां वर्णनानि सन्ति। हिन्दुधर्मस्य विकासे समुल्लासे समुत्कर्षे च काश्मीरकाणां कवीनां लेखकानां दार्शनिकानां धर्मप्रचारकाणाञ्च गौरवमयो योगो विद्यते। सरस्वत्या अनुग्रहेण काश्मीरनिवासिनः सुकवयो भवन्ति[९०]। महाकविना बिह्लणेन काश्मीरजनपदस्य द्वे विशेषते प्रोक्ते - कविताविलासाः केसराणि च। अत एव तेनाऽयं देशः शारदादेशोऽपि प्रोक्तः[९१]। राजशेखरः काश्मीरकामिनीनां सौन्दर्यमतिशयेन प्राशंसत्[९२]। शङ्कराचार्योऽपि काश्मीरजनपदे धर्मप्रचाराय बभ्राम। श्रीनगरं निकषा

शङ्कराचार्यपर्वतः प्रसिद्धः ।

परन्तु ई० त्रयोदशशताब्द्यां काश्मीरजनपदो मोहम्मदीयैराक्रमण-कारिभिराक्रान्तोऽधिकृतश्च । तदनन्तरं तत्रत्यैरधिकसंख्यकैर्निवासिभि-र्मोहम्मदीयो धर्मोऽङ्गीकृतः ।

वर्तमानकालीनं काश्मीरराज्यमेव प्राचीनकालीनः काश्मीरजनपदो विद्यते नास्त्यत्र काऽपि विचिकित्सा । पञ्चनदराज्यस्योत्तर-पश्चिमदिग्वर्ती जनपदोऽयमुत्तुङ्गगिरिशृङ्खलाभिः परिवेष्टितः । परन्तु वर्तमानकालीनकाश्मीरराज्यस्य सीमानः प्राचीनकाश्मीरजनपदापेक्षातो-ऽतिविस्तीर्णाः सन्ति ।

## (१४) कुन्तलाः -

राजशेखरः कुन्तलजनपदं दक्षिणवर्तिषु जनपदेषु परिगणय्य तं चोत्तरवर्तिनं जगाद । जनपदोऽयं महाराष्ट्रान्तर्गतोऽपि प्रोक्तः[९३] । कुन्तलकामिन्यस्तेन विशेषेण प्रशंसिताः ।

हेमन्तर्तौ ताः सविशेषं प्रसीदन्ति विविधञ्च विलासक्रीडासु विहरन्ति[९४] । कामदेवोऽपि तासां सेवक एव[९५] ।

राजशेखरकृतरूपकेषु कुन्तलदेशीयाः नायिकाः विशेषेण समादृताः वर्तन्ते । कर्पूरमञ्जरीसट्टकस्य नायिका कर्पूरमञ्जरी कुन्तलराजसुता-ऽवर्तत[९६] । बिद्धसालभञ्जिकारूपकस्याऽप्येका नायिका राज्यविभ्रष्टस्य कुन्तलाधिपस्य सुताऽऽसीत्[९७] ।

एकस्मिन् प्रसङ्गे राजशेखरेण कुन्तलजनपदस्य राजधानी विदर्भ-नगरी प्रोक्ता[९८] । परन्तु तथ्यविरुद्धमेवैतद् वर्णनम् । विदर्भजनपदस्तु पृथगेवाऽऽसीत् । राजधानी चाऽस्य जनपदस्याऽविद्यत - कुण्डिननगरम् ।

भारतवर्षस्य राजनीतिकसांस्कृतिकेतिहासे कुन्तलजनपदस्य वर्णनानि बहुधा समुपलभ्यन्ते । गुप्तवंशीयो नरपतिश्चन्द्रगुप्तः सम्राट् महाकविं कालिदासं दूतरूपेण कुन्तलाय सम्प्रैषयत् । घटनामेतामाश्रित्य महाकविः कुन्तलेश्वरदौत्यं नाम नाटकं प्रणिनाय । नाटकेऽस्मिन्ननुप-

लभ्यमानेऽपि संकेता अस्य भोजकृतशृङ्गारप्रकाशे क्षेमेन्द्रविरचितायाञ्च औचित्यविचारचर्चायां समुपलभ्यन्ते। कुन्तलजनपदः पुलकेशिन् द्वितीयस्य चालुक्यवंशसमुद्भवस्य शासनाधिकारेऽप्यवर्तत।

कुन्तलजनपदभूमिभागाश्चोलजनपदोत्तरभूमिभागैः परिचीयन्ते। सम्भवतः कल्याणनगरमेव केषुचित्कालेष्वस्य जनपदस्य राजधान्यासीत्। वर्तमान हैदराबादराज्यस्योत्तरपश्चिमभूमिभागा एव कुन्तलाः भवेयुः[९९]। सीमाविस्ताराश्चाऽस्य जनपदस्योत्तरस्यामानर्मदातो दक्षिणदिशि तुङ्गभद्रासरित्पर्यन्तं[१००] प्राच्यामागोदावरीतः प्रतीच्यामारब्यसागरपर्यन्तं समभूवन्। मीराशीममहोदयस्याऽभिमतमस्ति –

कुन्तलजनपदे दक्षिणमहाराष्ट्रभूमिभागाः समीपस्थाश्च कर्णाट-प्रदेशभूमयः सम्मिलिता अवर्तन्त[१०१]।

विन्सेन्ट स्मिथ महोदयः कुन्तलजनपदं वेत्रवतीभीमानद्योः मध्यवर्तिनं प्रतिपादयति[१०२]।

## (१५) कुरवः –

भारतीयेतिहासे कुरुजनपदोऽतितरां प्रसिद्धो महिमानं बिभर्ति। ऋग्वेदेऽथर्ववेदे ब्राह्मणग्रन्थेष्वारण्यकेषूपनिषत्सु वैदिकसाहित्ये कुरूणामुल्लेखाः समुपलभ्यन्ते। रामायणे महाभारते पुराणेषु चाऽपि कुरवो बहुशो वर्णिताः। बौद्धसाहित्ये कुरुजनपदोऽयं षोडशमहाजनपदेषु परिगणितः। परमुत्तरवर्तिनि काले कुरुजनपदो मौर्यसाम्राज्ये विलीनोऽभवत्। स्वतन्त्रास्तित्वञ्चाऽस्य प्रायशो विलुप्तम्।

इतिहासप्रसिद्धिरियमीदृशी यत् कुरुवंशीयाः नरपतयः कुरुजनपद-राजधानीं हस्तिनापुरीं परित्यज्य वत्सजनपदं प्राव्रजन्।

भारतवर्षस्य मध्यवर्तिषु जनपदेषु कुरुजनपदस्य गणना विधीयते[१०३]। महाभारतकालेऽत्रत्यः शासको दुर्योधनोऽवर्तत[१०४]। कुरुक्षेत्रञ्चाऽपि कुरुजनपदान्तगर्तमासीद् यत्र महाभारतयुद्धं समजनि[१०५]।

कुरुजनपदो वर्तमानदिल्लीसमीपस्थप्रदेशेभ्यो हिमालयोपत्यका-पर्यन्तभूभागैः परिचीयते। प्रतीच्यां सोनीपतकरनालकुरुक्षेत्राम्बाला-जनपदाः कुरुजनपदान्तर्गता अभवन्। महाकविना कालिदासेन कुरुक्षेत्रं कौरवपाण्डवयुद्धस्थलं प्रोक्तम्। अत्र सरस्वती सरित् प्रवहति। कुरुक्षेत्रात् कनखलं प्रत्युत्पतन् मेघो हिमालयं प्राप्नोति। अवन्तीतः कुरुक्षेत्रगामिनि मार्गे दशपुरब्रह्मावर्तजनपदौ वर्तेते[१०६]।

कुरुजनपदस्य द्वौ मुख्यौ विभागाववर्तेताम्- समभूमिभागाः दक्षिणकुरवः पर्वतीयप्रदेशाश्चोत्तरकुरवः। उत्तरकुरूणां वर्णनं प्रथममेव सञ्जातम्। वस्तुतस्तु दक्षिणवर्तिनः समभूमिभागा एव प्रधानत्वेन कुरुजनपदोऽवर्तत। कुरुवंशीयाः नरपतयो भूप्रदेशमेनमेव प्राशासन्।

प्रभुदयालोऽग्निहोत्री महोदयः प्रतिपादयति -

कुरुजनपदस्य त्रयो भागा अवर्तन्त - कुरुदेशः कुरुजाङ्गलः कुरुक्षेत्रञ्च। यमुनायाः पश्चिमप्रदेशः कुरुक्षेत्रमवर्तत। अत्र सरस्वती सरित् प्रवहति स्म। कुरुजाङ्गलं तु वन्यभूप्रदेश आसीत्। गङ्गा-यमुनासरितोर्मध्यवर्तिनो भूभागाः कुरवोऽभूवन्[१०७]।

कुरुजनपदस्य राजधानी हस्तिनापुरं गङ्गायाः दक्षिणतटे समवस्थितमासीत्।



## (१६) कुरुजाङ्गलाः -

पाण्डवानां वनवासावधिः केषुचित् कालेषु कुरुजाङ्गले व्यतीतस्तथा भासोऽवर्णयत्[१०८]। कुरुजनपदस्य त्रयो भागा अवर्तन्तेति विजयेन्द्रकुमार-माथुरेणाऽपि प्रतिपादितम् - कुरुजाङ्गलाः, कुरवः कुरुक्षेत्रञ्च। कुरुजनपदस्य वन्यभूमय एव कुरुजाङ्गलजनपदोऽवर्तत। सरस्वती-तटवर्ती प्रदेशोऽयं काम्यकवनपर्यन्तं विस्तृतोऽभवत्। खाण्डववन-मप्येतदन्तर्गतमभवत्[१०९]।

परं प्रभुदयालोऽग्निहोत्री महोदयः कुरूणामुत्तरवर्तिनो वन्यान् भूमिभागानेव कुरुजाङ्गलजनपदं प्रतिपादयति। तस्यैवं मतं समीचीनं

प्रतिभाति, यतो युधिष्ठिरस्य वनवासावाधिः प्रायश उत्तरवर्तिष्वेव वनेषु व्यतीतः[११०]।

## (१७) कुलूताः -

कुलूतजनपदस्य प्रथम उल्लेखो महाभारते समुपलभ्यते। कुलूताधिपो युधिष्ठरस्य राजसूययज्ञे ह्युपहारानादाय समायात इन्द्रप्रस्थम्। दिग्विजययात्रायामर्जुनो जनपदं कुलूतमप्यजयत्। विशाखदत्तेन कुलूतजनपदस्योल्लेखो विहितः। अत्रत्यो नरपतिश्चित्रवर्मा मलयकेतोः पञ्चसु प्रधानसहायकेष्ववर्तत[१११]। राजशेखरो महीपालविजययात्रासु कुलूतजनपदमप्यवर्णयत्। कुलूतेषु हिमगर्भाः पवनाः प्रवहन्ति[११२]।

कुलूतजनपदो हिमगिरिशृङ्खलासु वर्तमानकुलूतद्रोण्या परिचीयते। वर्तमानहिमाचलराज्यस्यैवैको भागोऽस्ति जनपदोऽयम्। कुलूतजनपदस्योत्तरीयभागादेव व्याससरित् प्रवहन्ती पञ्चनदप्रदेशं प्रविशति। अत्रोद्भवानि फलानि सर्वत्र प्रशस्यन्ते।

## (१८) कुशस्थली -

राजशेखरेण कुशस्थलीजनपदो भारतवर्षस्य मध्यवर्तिषु जनपदेषु परिगणितः[११३]। प्राचीनवर्णनानि प्रतिपादयन्ति यज्जनपदोऽयं सघनैररण्यैर्व्याप्तमभवत्। अत्रत्यो राजा मनीषिभिर्मध्यदेशनरेन्द्रः प्रोक्तः। असौ जम्बूपत्रवस्त्राणि, गुञ्जाफलालङ्करणानि, मयूरपिच्छशिरोभूषणं गैरिकप्रलेपनञ्च प्रायौक्षीत्। सर्वमेतत्तेन शबरीभिः सह निवासेन शिक्षितम्[११४]।

आप्टे महोदयेन कुशस्थल्येव कुशावत्यभिमता। दक्षिणकोशलस्य राजधानीयम् बभूव। इयं रेवासरितो विन्ध्यपर्वतस्य च मध्यवर्तिषु प्रदेशेष्ववस्थिताऽवर्तत। बुन्देलखण्डप्रदेशस्य वर्तमानरामनगरेणेयं परिचीयते[११५]।

केचन विद्वांसो द्वारकामेव कुशस्थलीं गणयन्ति[११६]। विजयेन्द्रकुमारमाथुरमहोदयो महाभारतोक्तप्रमाणैर्मतमेतत् साधयति। महाभारते

लिखितमस्ति -

जरासन्धस्याऽऽक्रमणैरुत्पीड्यमानः कृष्ण आत्मरक्षायै रैवतकगिरिद्रोणीषु कुशावर्ती (द्वारकाम्) विरचय्य तत्राऽभेद्यां दुर्गरचनामकारयत्[११७]।

## (१९) केरलाः -

दक्षिणभारतीयजनपदेषु केरलजनपदो निजप्राकृतिकरमणीयतायै लोकेषु प्रसिद्धः। अतिप्राचीनोऽयं जनपदो महामहिमानं दधाति। युधिष्ठिरस्य राजसूययज्ञे केरलाधिपो ह्युपहारानादायेन्द्रप्रस्थं समाययौ[११८]। कालिदासेन रघोर्दिग्विजयप्रसङ्गे केरलजनपदोऽपि वर्णितः। रघोराक्रमणैर्भयभीताः केरलकामिन्यो भूषणानि प्रसाधनानि च परितत्यजुः[११९]। अशोकस्य मौर्यसम्राजः शिलालेखेष्वपि केरलजनपदस्य वर्णनानि सन्ति।

संस्कृतकवयः केरलजनपदस्य प्राकृतिकरामणीयकेनाऽतितरां प्रभविताः प्रमुग्धाश्चाऽवर्तन्त। अत्रत्याः युवतयः शयामलकान्तिवदनाः भवन्ति[१२०]। तासां हासाः मौक्तिकस्रक्सदृशाः शुभ्राः[१२१] निर्मलाश्च वर्तन्ते[१२२]। परन्तु भवभूतिः केरलवासिन्यो वनिताः न तथा पश्यति। न सर्वाः केरलकामिन्यः श्यामलवर्णाः। केरलवधूनां कपोलास्ताम्बूलपत्रपाण्डुरा अपि दृश्यन्ते[१२३]।

सुभद्राधनञ्जयतपतीसंवरणनाटकयोः रचयिता कुलशेखरवर्मा केरलाधिपोऽवर्तत। तेन प्रोक्तम् -

केरलजनपदक्षेत्राणि परिपक्वधान्यराशिभिर्मनोरमाणि वर्तन्ते[१२४]। दाक्षिणात्योऽयं जनपदः[१२५]।

वर्तमानकेरलराज्यमेव प्रमुखरूपेण प्राचीनकेरलजनपदोऽवर्तत। आकन्याकुमारीतो गोआपर्यन्तं विस्तृता मलाबारतटवर्तिनी भूमिरेव केरलजनपदान्तर्गताऽऽसीत्। कोचीननगरमेतदन्तर्गतमेवाऽस्ति। कर्नल स्मिथमहोदयश्चन्द्रगिरिदक्षिणभारतवर्तिनीं पश्चिमसमुद्रतटस्थितां भूमिं केरलजनपदं ब्रवीति[१२६]।

वर्तमानसमये केरलराज्यसीमानोऽपि सङ्कुचिताः वर्तन्ते। परं

प्राचीनकालेऽतिविस्तृतो ऽयं जनपदोऽवर्तत। उदीच्यामागोकर्णाद् दक्षिणायां कन्याकुमारीपर्यन्तं प्राच्यामामलयगिरेः प्रतीच्यामारब्यसागरपर्यन्तं केरलजनपदो विस्तृतो बभूव।

## (२०) कोङ्कणाः -

कोङ्कणजनपदस्य गणना प्राचीनकालादेव दाक्षिणात्येषु जनपदेषु कविभिः कृता। अनेके समीक्षकाः कोङ्कणजनपदस्याऽपरान्तजनपदस्य चैकत्वं प्रतिपादयन्ति। परमन्येऽपरान्तजनपदं कोङ्कणजनपदस्योत्तरीयं प्रदेशं वदन्ति। स्कन्दपुराणे कोङ्कणजनपदस्य द्वौ भागौ प्रोक्तौ - कोङ्कणाः लघुकोङ्कणाश्च। कोङ्कणेषु षट्त्रिंशत्सहस्राः (३६०००) ग्रामाः वर्तन्ते, लघुकोङ्कणेसु द्वाविंशत्युत्तरचतुःशतोत्तरसहस्रैकग्रामाः (१४२२) सन्ति[१२७]।

पुराणेषु काव्येषु च वचनानि विद्यन्ते -

कोङ्कणजनपदभूमिः परशुरामेण स्वनिवासाय समुद्रादाच्छिन्ना[१२८]। परशुरामस्य निवासस्थानं महेन्द्रद्वीपोऽपि प्रसिद्धः[१२९]। अतः केचन समीक्षकाः कोङ्कणमहेन्द्रद्वीपयोरेकत्वमपि प्रतिपादयन्ति। राजशेखरेण वर्णितम् -

कोङ्कणे ह्येलापूगनारिकेलताम्बूलराजरम्भाः प्राचुर्येण समुद्भवन्ति[१३०]।

ई० चतुर्थ-पञ्चमशताब्द्यां कोङ्कणजनपदो गुप्तसाम्राज्यान्तर्गतो बभूव। कोङ्कणाऽधिपस्योज्जयिन्यां निवासस्य वर्णनानि कविभिः कृतानि[१३१]।

वर्तमानसमये मुम्बईनगरदक्षिणदिशि पुण्यनगरं निकषा पश्चिमसमुद्रतटपर्यन्तं भूप्रदेशाः कोङ्कणजनपदरूपेण परिचीयन्ते।

## (२१) कोशलाः -

भगवतो रामस्य जन्मभूमिरयोध्या कोशलजनपदस्य राजधानी लोके महामहिमामयी कीर्तिशालिनी प्रसिद्धा बभूव। कोशलजनपदोऽपि

तथा महिमानं प्राप्नोत्। भगवतो रामस्य युगेऽतिविस्तृतस्याऽस्य जनपदस्य सीमान आसन् -

उदीच्यां नेपालाः प्राच्यां विदेहाः, प्रतीच्यां शूरसेनाः दक्षिणायाञ्च विन्ध्यभूमयः।

परमुत्तरस्मिन् काले कोशलजनपदस्य सीमानः पर्याप्तरूपेण सङ्कोचमवाप्नुवन्।

बौद्धकाले कोशलजनपदो महाशक्तिसम्पन्न आसीत्। अस्य जनपदस्य गणना प्रसिद्धेषु षोडशमहाजनपदेष्वर्तत।

प्राचीनमनीषिभिः कोशलजनपदस्य गणना पूर्वीयेषु जनपदेषु विहिता[१३२]। पुराणेषु वर्णनानि वर्तन्ते - कोशलजनपदस्य प्राच्यां विदेहाः प्रतीच्याञ्च कुरुपाञ्चालाः सन्ति। विदेहकोशलजनपदयोर्विभाजकरेखा-ऽवर्तत सदानीरा सरित् (गण्डक नदी)[१३३]। गुप्तयुगे जनपदोऽयं गुप्तसाम्राज्यान्तर्गतो बभूव। अत्रत्याः नागरिका उज्जयिन्यामवलोक्यन्ते स्म[१३४]।

प्राचीनसाहित्ये कोशलजनपदस्य द्वौ भागौ वर्णितौ स्तः - उत्तरकोशलाः दक्षिणकोशलाश्च।

कस्मिंश्चित्काले सम्पूर्णोऽपि कोशलजनपदो ह्येकशासनान्त-र्गतोऽवर्तत। परं दशरथस्य समये तस्य जनपदस्य द्वौ भागौ स्पष्टरूपेण परिलक्ष्येते। दशरथो ह्युत्तरकोशलानामधिपोऽवर्तत, राजधानी च तस्याऽऽसीदयोध्या। दशरथो दक्षिणकोशलजनपदाधिपसुतां कौशल्यां परिणिनाय। प्राचीनसाहित्ये कौशल्या दक्षिणकोशलाधिपसुता प्रसिद्धा[१३५]। मुरारि[१३६]राजशेखरौ[१३७] इक्ष्वाकुवंशीयान् नरपतीनुत्तरकोशलीयान् जगदतुः। आनेपालाद् गङ्गाधारापर्यन्तं विस्तीर्णाः वर्तमानोत्तरप्रदेशस्य पूर्वोत्तर-भूभागा उत्तरकोसलजनपदेन परिचेतुं शक्यन्ते।

वायुपुराणकारेण प्रोक्तम -

कोशलजनपदस्य विभाजनं रामानन्तरं बभूव। राममनु

उत्तरकोसलाधिपो लवो बभूव, श्रावस्ती चाऽस्य राजधान्यासीत्। दक्षिणकोशलजनपदस्याधिपः कुशो बभूव, राजधानी च तेन कुशस्थली कृता। सा कुशस्थली विन्ध्यगिरिशृङ्खलान्तर्गताऽवर्तत[१३८]।

ई० पू० षष्ठशताब्द्यां वत्सकोशलयोः परमगहनो प्रतिद्वन्द्विताभावः सुतीव्रश्च शत्रुत्वभावो लोके प्रथित आसीत्। वत्सराजोदयनो कोशलोच्छित्तये रुमण्वन्तं प्राहिणोत्[१३९]।

मौर्यसाम्राज्यस्योदयकाले चन्द्रगुप्तः कोशलजनपदमपि विजित्य मौर्यसाम्राज्यान्तर्गतं सन्निविष्टञ्चकार। तदनन्तरमस्य जनपदस्य स्वतन्त्रमस्तित्वं व्यलुपत्।

भौगोलिकरूपेण कोशलजनपदोऽवधराज्यमेव वर्तते। अत्रोत्तर-प्रदेशस्य गोंडाफैजाबादबहराइचबलियाऽऽजमगढ़जनपदाः सम्मिलिताः सन्ति। अस्य राज्यस्य राजधानी साकेतनगरी (अयोध्या) समवर्तत। केषुचित् समयेषु श्रावस्ती चाऽप्यस्य जनपदस्य राजधानी बभूव। दक्षिणकोशलस्याऽवस्थितिर्गङ्गातो दक्षिणवर्तिन्यासीत्।

## (२२) क्रथकैशिकाः -

राजशेखरः क्रथकैशिकानुल्लिलेख। राजधानी चाऽस्य जनपदस्याऽऽसीत् कुण्डिननगरम्[१४०]। असौ दाक्षिणात्येषु जनपदेषु विदर्भजनपदं क्रथकैशिकजनपदञ्च पृथक् पृथक् लिलेख[१४१], परं कानिचित् प्राचीनविवरणानि क्रथकैशिकजनपदं विदर्भजनपदस्यैवैकं भागं प्रतिपादयन्ति। शैव्यानाम्नी राज्ञी विदर्भाभिधानं सुतं सुषुवे[१४२]। तस्य त्रयः पुत्रा सञ्जाताः - क्रथः कौशिको रोमपादश्च[१४३]। विदर्भराज्यं द्वयोर्भागयोर्विभज्याऽसौ क्रथकैशिकभागं क्रथाय कैशिकाय च प्रादात्। एवमस्य विदर्भजनपदस्य द्वौ भागौ, द्वौ जनपदौ बभूवतुः[१४४]।

कालिदासेन क्रथकैशिकजनपदस्य स्थितिर्विदर्भजनपदान्तर्गतैव प्रतिपादिता[१४५]। मालविकाग्निमित्रनाटकेऽप्यसौ क्रथकैशिकजनपदप्रयोगं विदर्भजनपदमभिलक्ष्य चकार[१४६]। अग्निमित्रसैन्यं क्रथकैशिकान्

(विदर्भान्) विजित्य तं जनपदं द्वयोर्भागयोर्विबभाज। तत्र वरदासरित उत्तरभागस्य शासको यज्ञसेनो बभूव, दक्षिणभागस्य च माधवसेनः[१४७]।

## (२३) गान्धाराः -

गान्धारजनपदोऽतिप्राचीनो गौरवास्पदश्चाऽऽसीत्। ऋग्वेवेऽथर्ववेदे चाऽस्य जनपदस्याऽवस्थितेः सङ्केताः समुपलभ्यन्ते। अथर्ववेदोऽस्य हीनभावमपि ह्यभिव्यनक्ति। परमुत्तरवर्तिनि युगे गान्धाराणां गौरवं महत्त्वञ्चोत्कर्षतां प्राप्तम्। तक्षशिलाविश्वविद्यालयो गान्धारजनपदान्तर्गतोऽवर्तत। महामनीषिभिराचार्यैरत्र सम्भूय विश्ववरेण्यस्य विश्वविद्यालयस्य स्थापना कृता। पाणिनिकौटिल्यचन्द्रगुप्तादयो महापुरुषा अस्यैव विश्वविद्यालयस्य स्नातका अभूवन्।

गान्धारजनपदराजसुता गान्धारी कुरुवंशीयेन पार्थिवेन धृतराष्ट्रेण परिणीता। तस्याः पुत्रस्य दुर्योधनस्य मातुलः शुकनिर्गान्धाराधिपोऽवर्तत[१४८]।

गान्धारजनपदस्य गणना बौद्धकालीनेषु महत्सु षोडशप्राचीनजनपदेषु विधीयते। अशोकस्य पञ्चमशिलालेखे गान्धाराणामुल्लेखो विद्यते। जनपदस्याऽस्य राजधानी तक्षशिला नगरी बभूव[१४९]। गुप्तकाले गान्धारजनपदो गुप्तसाम्राज्यान्तर्गतोऽभवत्। गान्धारवासिनो विटस्यैकस्य निवासः श्यामिलकेनोज्जयिन्यां वर्णितः[१५०]।

भारतवर्षस्य पश्चिमोत्तरसीमान्तभूमिष्वस्थितस्य गान्धारजनपदस्य गौरवशालिनी स्थितिः क्रमशो हीनभावं प्रपेदे। परस्परं विवदमानेषु भारतीयराजसु निर्बलेसु सत्सु जनपदोऽयमपि निर्बलः सन् मोहम्मदीयाक्रमणकारिणां लक्ष्यं बभूव। ई० अष्टमशताब्द्यां गान्धारजनपदः पूर्णरूपेण मोहम्मदीयधर्मे दीक्षितः प्रसभं विहितः।

गान्धारजनपदस्य स्थितिर्वर्तमानाऽफगानिस्तानदेशादारभ्य प्राच्यां सिन्धुसरितोर्द्वयोः पार्श्वयोर्विस्तृता बभूव। राजधानी चाऽस्य तक्षशिलाऽवर्तत। वासुदेवशरणोऽग्रवालो लिलेख -

गान्धारजनपदो ह्याकाशगरतस्तक्षशिलापर्यन्तं विस्तृत आसीत्[१५१]। वर्तमानपेशावररावलपिण्डीजनपदौ गान्धारजनपदान्तर्गतावास्ताम्। पाणिनिर्गान्धारजनपदवास्तव्यो बभूव। अष्टाध्याय्यामसौ गान्धारानुल्लिलेख[१५२]।

गान्धारजनपदो द्वयोर्भागयोर्विभक्तोऽवर्तत - पूर्वगान्धारजनपदो दक्षिणगान्धारजनपदश्च। पूर्वगान्धारस्य (सिन्धुसरितः पूर्वदिशि) राजधानी तक्षशिलाऽभवत्। दक्षिणगान्धारजनपदस्य (सिन्धुसरितः पश्चिमदिशि) पुष्कलावती राजधान्यासीत्। पुष्कलावत्याः प्रतिष्ठा भरतपुत्रेण पुष्कलेन कृता। वर्तमानकाले नगरमिदं चारसड्ड़ाभिधानेन नगरेण परिचीयते। अथ चेदं नगरं कुभा(काबुल) स्वातसरितोः सङ्गमे समवस्थितम्। आप्टे महोदयस्य कथनमिदं वर्तते -

गान्धारजनपदः कुभा (काबुल) सरितस्तटवर्ती, कुन्नर-सिन्धु-सरितोर्मध्यवर्ती च बभूव। गान्धारशब्दो गन्धर्वपदस्याऽपभ्रंशो विद्यते, तस्य चाऽपभ्रंशो वर्तते कन्दहारशब्दः[१५३]।

परं गान्धारपदपरिचयविषये वासुदेवशरणोऽग्रवालमहोदयस्य मतमेव समीचीनतरं प्रतिभाति पूर्वनिर्दिष्टम्। राजशेखरेण प्रोक्तम् -

गान्धारजनपदे प्रचुरा ऊर्णावत्योऽवयो बाहुल्येन भवन्ति[१५४]।

## (२४) गौडाः -

मुरारिर्मिथिलातः प्राच्यां गौडजनपदमवर्णयत्। राजधानी चाऽस्य जनपदस्याऽऽसीत् - चम्पा[१५५]।

परन्तु मुरारिकवेर्वर्णनमिदं भ्रान्तिजनकमेव वर्तते। चम्पा त्वङ्गजनपदस्य राजधानी बभूव। अथ च गौडजनपदस्य राजधानी बभूव - लक्ष्मणावती। सम्भवतो मुरारिसमये गौडाधिपोऽङ्गजनपदमधिकृत्य चम्पायामेव कञ्चित् कालं निवासञ्चक्रे। अथ च तत्रैव स्थितः शासनसूत्रं समचालयत्। अत एव मुरारिर्भ्रमवशाच्चम्पामेव गौडजनपदराजधानीं लिलेख।

गौडजनपदः पुण्ड्रकाभिधानेनाऽपि लोके प्रोच्यते स्म। सम्भवतोऽयं बङ्गप्रदेशस्योत्तरवर्ती भूभागोऽविद्यत । इयमपि किम्वदन्ती प्रसिद्धा यद् गुडस्य बाहुल्यान्निर्यातप्रधानत्वाच्च देशोऽयं गौडाभिधानेन प्रसिद्धो बभूव[१५६]।

संस्कृतकाव्यशास्त्रे गौडी रीतिः काव्यरचनाप्रसङ्गेऽतितरां प्रसिद्धा। कठोरवर्णा दीर्घसमासा च संघटना गौडीरीतिप्रधाना विख्याता। गौडदेशे चेयं बाहुल्येन प्रयुज्यते। गौडजनपदनाम्ना चैवेयं रीतिः गौडीति संज्ञिता[१५७]। अतः समीक्षकैरनुमीयते, यद् गौडजनपदीयाः सैनिकाः वीराः कठोरस्वभावाश्च भवन्ति स्म।

गौडजनपदे तथा गौरवास्पदे प्रसिद्धे सत्यपि जनपदोऽयं राजशेखरेण न प्राच्येषु जनपदेषु संख्यातः[१५८]। उत्तरवर्तिनि काले सर्वेऽपि प्राच्याः जनपदाः गौडाभिधानेन प्रसिद्धाः बभूवुः[१५९]। सम्भवतोऽनेनैव हेतुना राजशेखरेण तथा व्यवहृतम्।

केचन मनीषिणो ह्युत्तरप्रदेशस्य गोंडाजनपदं गौडजनपदं संमन्वते। अन्ये च मध्यप्रदेशस्य गोंडवानाजनपदं तथा कथयन्ति[१६०]। परं नैतन्मतद्वयं युक्तिसङ्गतम्। उत्तरपूर्वबङ्गराज्यमेव गौडजनपदोऽवर्ततेत्यवगन्तव्यम्। ई० सप्तमशताब्द्यां गौडाधिपः शशाङ्को बभूव। मालवराजसाहाय्येनाऽसौ षड्यन्त्रं विरच्य स्थाण्वीश्वरं वर्धनवंशीयं राज्यवर्धनं जघान[१६१]। ह्वेन्त्सांगमहोदयेन लिखितम् - शशाङ्को बङ्गदेशे कर्णसुवर्णाधिपो बभूव[१६२]।

गौडजनपदः शिक्षाकेन्द्ररूपेणाऽपि प्रसिद्धिमवाप। अत्रत्यो विक्रमशीलविश्वविद्यालयो जगति महनीयां कीर्तिमधिजगाम। हिन्दूराजतन्त्रेषु गौडेषु विद्यायाः सततं वृद्धिः सञ्जाता। धर्मो निरन्तरं प्रवृद्धो बभूव। प्रभूतसंख्यकानाञ्च भव्यानां देवमन्दिराणां निर्मितिः सञ्जाता। परं द्वादशशताब्द्या अन्तिमचरणेऽत्र मोहम्मदीयानामाधिपत्ये सञ्जाते मन्दिराणि विध्वंसितानि भग्नावशेषैश्च मसजिदानि निर्मितानि।

हिन्दूजनाः प्रसह्य बलात्कारेण मोहम्मदीयमते सन्निवेशिताः । लखनौती (लक्ष्मणावती) नगरस्य सोनामसजिदं नियतरूपेण हिन्दूदेवमन्दिराणां भग्नावशेषैर्निर्मितं विद्यते ।

## (२५) चेदयः -

चेदिजनपदोऽतिप्राचीनो वर्तते । ऋग्वेदे चाऽप्यस्योल्लेखो विद्यते । महाभारतकारश्चेदिजनपदं प्रशशंस[१६३] । कृष्णस्य प्रतिद्वन्द्वी परमशत्रुः शिशुपालश्चेदिजनपदाधिपो बभूव । पुराणेषु चेदिजनपदस्योत्पत्तिर्निम्नप्रकारेण वर्णिता -

शिवेन परमेश्वरेण त्रिपुरं भस्मतां नीतम् । त्रिपुरस्य तस्यैकः खण्डो धरायां न्यपतत् । तस्मादेव खण्डाच्चेदिजनपदस्योत्पत्तिः सञ्जाता[१६४] ।

प्राचीनभारतीयकथासु हैहयवंशीयस्य कार्तवीर्यार्जुनस्य कथा प्रसिद्धा । चेदीनामसावाधिपो बभूव । तस्य राजधानी माहिष्मती नर्मदातटवर्तिन्यासीत् । कालिदासोऽपि चेदिजनपदमवर्णयत् । चेदिजनपदमसावानूपमुक्त्वा माहिष्मतीं तस्य राजधानीं जगाद[१६५] ।

मुरारिणा वर्णितम् -

लङ्कातोऽयोध्यामुत्पतद् रामस्य पुष्पकविमानं चेदिजनपदाकाशं व्यतिचक्राम, तदा माहिष्मती तस्म जनपदस्य राजधान्यासीत् । अत्र कलचुरिवंशीयानां नरपतीनां शासनमविद्यत[१६६] । नर्मदासरिदत्र जनपदे प्रवहति[१६७] । राजशेखरेण लिखितम् - नर्मदा (मेकलसुता) जनपदमेतं (चेदिजनपदम्) विभूषयति[१६८] ।

अनेकसमीक्षकाश्च चन्देलप्रदेशमेव चेदिजनपदं प्रतिपादयन्ति । परं विदुषामधिकसंख्यकाः जनाः वर्तमानबुन्देलखण्डं समीपस्थञ्च प्रदेशं चेदिजनपदमामनन्ति ।

## (२६) चोलाः -

श्यामलिकश्चोलजनपदमुल्लिलेख[१६९] । दिग्विजयप्रसङ्गे पाण्डुसुतः सहदेवश्चोलजनपदं जिगायेति महाभारतकारस्य वचनम्[१७०] । युधिष्ठरस्य

राजसूययज्ञे चोलजनपदाधिपो ह्युपहारानादाय समुपस्थितो बभूव। अशोकस्य शिलालेखेषु चोलजनपदस्योल्लेखो विद्यते[१७१]। स्कन्दपुराणे वर्णनानि सन्ति –

अस्मिन् प्रदेशे चोलाभिधानश्चक्रवर्ती सम्राट् प्रदेशमेनमशासत्। तस्य नाम्ना जनपदोऽयं चोलाभिधानेन प्रसिद्धो बभूव। काञ्ची चाऽस्य राजधान्यवर्तत[१७२]।

चोलजनपदस्य स्थितिः कोरोमण्डलतटे पूर्वीये घाटेऽवगम्यते। डी० सी० सरकार महोदयो वर्तमानतञ्जौरत्रिचनापल्लीजनपदौ चोलमण्डलं प्रत्यापादयत्[१७३]। आप्टेमहोदयेन प्रोक्तम् –

चोलजनपदः कावेरीतटे समवस्थितो बभूव। वर्तमानमैसूरराज्यस्य दक्षिणवर्ती भूभागो वर्तमानसमये कर्णाटकनाम्ना प्रसिद्धश्चोलजन-पदस्याऽन्तर्गतोऽवर्तत[१७४]।

## (२७) दशार्णाः –

राजशेखरेण दशार्णजनपदस्योल्लेखो विहितः। तन्मध्ये नर्मदानदी प्रवहति[१७५]। कालिदासेन सङ्गीतितम् –

रामगिरेरुज्जयनीं गच्छन् मेघो दशार्णजनपदमुल्लंघयिष्यति[१७६]। वर्णनैरेभिः सिद्धमेव यद् दशार्णजनपदस्य स्थितिः भारतवर्षस्य मध्यभागेऽवर्तत।

महाभारते द्वयोर्दशार्णजनपदयोः सङ्केताः समुपलभ्यन्ते – पूर्वदशार्णाः पश्चिमदशार्णाश्च। पूर्वदशार्णाः पाण्डुपुत्रेण भीमेन विजिताः पश्चिमदशार्णाश्च नकुलेन। तस्मिन् काले जनपदमेतं सुधर्माभिधानो नरपतिः शशास। पुराणेषु दशार्णजनपदस्य स्थितिर्मालवकारूषो-त्कलमेकलादिजनपदानां मध्ये कीर्तिता। अनेनाऽपि दशार्णजनपदस्य स्थितिर्मध्यभारते सिद्ध्यति[१७७]।

विलसनमहोदयेन दशार्णाभिधानया सरिता सिञ्चिताः प्रदेशाः दशार्णाः प्रोक्ताः। सरिदियं भूपालसन्निकटवर्तिपर्वतीयप्रदेशेभ्यः समुद्भवं

प्राप्य सागरजनपदमध्ये प्रवहन्ती झांसी निकषा वेत्रवत्या सङ्गच्छते। के० वी० महोदयेन मतमिदमनुसृत्य वर्तमानछत्तीसगढ़जनपदो दशार्णजनपदोऽभिमतः। कात्यायनमतमनुसृत्याऽसौ दशार्णपदस्य निर्वचनं प्रादर्शयत् - दश + ऋण = दशार्णः = दशदुर्गवान् प्रदेशः[178]। परन्तु मतमिदं न केनचिदप्यन्येन विदुषा स्वीकृतम्।

डी० सी० सरकारममहोदयस्याऽभिमतमस्ति -

पूर्वमालवजनपदस्तत्समीपवर्ती च प्रदेशः प्राचीनसमये दशार्ण-जनपदनाम्ना प्रसिद्ध आसीत्। दशार्णा (घसान) वेत्रवती (बेतवा) च सरितावाऽस्मिन् प्रदेशे प्रवहतः[179]।

आप्टेमहोदयोऽपि पूर्वमालवप्रदेशं दशार्णजनपदं जगाद। राजधानी चाऽस्य विदिशा (भिलसा) वेत्रवतीसरित्तटवर्तिनी ह्यासीत्[180]।

## (२८) दशार्हाः -

कुलशेखरवर्मणा सुभद्राधनञ्जयनाटके लिखितम् -

अर्जुनेन दशार्हजनपदो विजितः[181]।

दशार्हजनपदस्य भौगोलिकसीमानिर्धारणं न सुकरम्। अत्र कवेरभिप्रायो दशार्णजनपदोऽपि सम्भवति। उत्तराखण्डे गढ़वालजनपदे दशौलीनामकं (श्रीनगरसमीपवर्ति) स्थानं वर्तते। किम्वदन्ती प्रसिद्धा यदत्र रावणः शिवमाशुतोषं प्रसादयितुं स्वदशशिरांसि कर्तयित्वा तस्मै समुपाजहार। सम्भवतः उत्तराखण्डस्य यात्रायामर्जुनः पाण्डुपुत्रः स्थानमेनमजयत्। नामसाम्यात् दशौलीस्थानमपि दशार्हजनपदः सम्भवति।

## (२९) दाशेरकाः -

पादताडितकभाणे दाशेरकनिवासिनो रुद्रवर्मणोरुल्लेखो विद्यते। उज्जयिन्यां निवसन्नसौ विटरूपेण प्रसिद्धोऽवर्तत[182]।

पुरागेषु दाशेरकजनपदस्य सङ्केताः समुपलभ्यन्ते। पुराणेषु[183] बृहत्संहितायाञ्च[184] जनपदोऽयमुत्तरापथवर्ती प्रोक्तः। परन्तु विष्णु-

धर्मोत्तरपुराणे दाशेरकजनपदस्य परिचयो भयप्रदमरुप्रदेशरूपेण वर्तते[१८५]।

शृङ्गारहाटभाणसंग्रहस्य भूमिकायां सम्पादकमहोदयेन लिखितम्-सदानन्ददीक्षितो मरुभूमिं (मारवाडं) दाशेरकजनपदं जगाद। परन्तु पद्मपुराणस्योत्तरखण्डे (७०.७५) मरुभूमिर्दाशेरकस्य प्रतीच्यां प्रोक्ता। अतोऽयं दाशेरकजनपदो मारवाड़प्रदेशस्य प्राचीदिशि मन्तव्यः। आधुनिकमन्दसौरजनपद एव प्राचीनकालीनो दाशेरकजनपदः सम्भवति[१८६]। प्राचीनसमये जनपदोऽयं गणराज्यमासीत्।

परन्तु अवधबिहारीलालमहोदयो मन्दसौरस्थानं दशपुरमेव प्रतिपादयति। तत्तु दाशेरकजनपदाद् भिन्नमेव वर्तते। काव्यमीमांसायां[१८७] दशपुरस्थितिरवन्तीपारियात्रसमीपवर्तिनी प्रोक्ता। अत्र भूतभाषा प्रयुज्यते। कुमारगुप्तबन्धुवर्मणोर्मन्दसौराभिलेखेषु दशपुरस्य मनोहारि वर्णनं विद्यते। अतो दशपुरं मन्दसौररूपेणैव परिचेयम्[१८८]। बी० सी० लामहोदयोऽपि मन्दसौरस्थलमेव दशपुरं प्रत्यापादयत्[१८९]। अतो मन्दसौरं दशपुररूपेणैव परिचेयम्।

महाभारते वर्णनानि विद्यन्ते, यद् दाशेरकाः पाण्डवानां पक्षे युयुधिरे[१९०]। त्रिकाण्डशेषशब्दकोशे दाशेरकाः मरुदेशीयाः प्रोक्ताः[१९१]। डी० सी० सरकारमहोदयोऽपि दाशेरकदेशं मरुदेशमलिखत्[१९२]। आप्टेमहोदयस्य मतं विद्यते - आधुनिकधौलपुरजनपद एव दाशेरकजनपदोऽवर्तत[१९३]। डा० विजयेन्द्रकुमारो माथुरोऽपि महाभारतं प्रमाणीकृत्य दाशेरकजनपदं मध्यक्षेत्रवर्तिनं प्रमाणयति[१९४]।

## (३०) द्रविड़ाः -

प्राचीनसाहित्ये द्रविडजनपदस्योल्लेखो गौरवेणोपलभ्यते। महाभारतेऽयं जनपदो दाक्षिणात्येषु जनपदेषु संख्यातः। पाण्ड्यद्रविडचोल-केरलान्ध्रादिजनपदान् दक्षिणवर्तिनः सहदेवोऽजयत्[१९५]।

राजशेखरेण काव्यमीमांसायां दक्षिणवर्तिजनपदेषु तु द्रविडजनपदो न गणितः, परं स्वरचितनाटकेषु वैशिष्ट्यान्यत्रत्यानि गणितानि।

द्रविडरमणीनां कपोला: श्यामलकान्तयो भवन्ति[१९६]। तासां भ्रूविलासा: मनसिजस्य द्वितीया एव शरा: सन्ति[१९७]। लास्यनृत्येषु ता: सुनिपुणा: वर्तन्ते[१९८]। द्रविडभुवि ताम्बूलशुण्ठ्यैलाकर्पूरादिवनस्पतय: प्राचुर्येण भवन्ति। ताम्बूलप्रयोगोऽप्यत्र बाहुल्येन वर्तते[१९९]। मुरारिणा द्रविडजनपदस्य प्रमुखनगरं काञ्चीपुरं प्रोक्तम्[२००]।

प्राचीनकाले सम्पूर्णकोरोमण्डलक्षेत्रं द्रविडभूम्यन्तर्गतमासीत्। वर्तमानतामिलनाडुप्रदेश एव प्राचीनकालीनो द्रविडजनपदो वर्तते। भाषा-वैज्ञानिका: प्रवदन्ति यद् द्रविडतमिलपदे मूलरूपेण एकत्वं वहत:। उच्चारणभेदेनैव तयोर्भिन्नत्वं लक्ष्यते।

## (३१) नेपाला: -

राजशेखरो नेपालजनपदमुल्लिलेख[२०१]। पूर्वेषु जनपदेष्वयं गण्यते[२०२]। महाभारते नेपालजनपद: पूर्वोत्तरवर्ती प्रोक्त:। कर्णेनाऽयं विजित:[२०३]। स्कन्दपुराणे नेपालेषु लक्षैकग्रामा: वर्णिता:[२०४]।

इतिहासे प्रसिद्धिरियमीदृशी यन्नेपालजनपदमार्येतरजातीया: नृपतय: प्राचीनकाले प्राशासन्। परन्तु मध्ययुगे मोहम्मदीयाक्रमणत्रस्ता मेवाड़ीयराजपपूतशाखैकाऽत्र प्रव्रज्य शासनसूत्रमधिचक्रे। वर्तमानसमये तेषामेव राजपूतजनानामत्र शासनं विद्यते।

प्राचीननेपालजनपदो वर्तमाननेपालराज्येन परिचीयते। राज्यमिदं भारतस्योत्तरस्यां दिशि हिमालयमध्यवर्ती भारतवर्षात् पृथगेव देश:। लुम्बिनीपशुपतिनाथावत्रत्यौ प्रमुखौ तीर्थौ स्त:।

## (३२) पञ्चाला: -

प्राचीनसाहित्ये पञ्चालजनपदोऽतिप्रसिद्धो महद्गौरवं दध्रे। महाभारतयुगे पञ्चालाधिपसुता द्रौपदी पाण्डवै: परिणीता। राजशेखरो जनपदमेतमन्तर्वेद्यन्तर्गतं प्रोवाच। तस्मिन् युगे जनपदस्याऽस्य राज-धानी कान्यकुब्जनगरमवर्तत[२०५]।

पञ्चालजनपदस्य गणना ह्युत्तरापथवर्तिषु जनपदेष्वप्यवर्तत।

साहित्यशास्त्रे पञ्चालजनपदनाम्ना पाञ्चाली रीतिः प्रसिद्धा बभूव[२०६]। राजशेखरो रीतिमेनां बहुतरां प्रशशंस। पञ्चालजनपदस्य विद्वांसः कवयश्च शास्त्ररचनासु काव्यनिर्माणेषु च प्रतिभान्विताः सुनिपुणा आसन्[२०७]। कामिन्यश्च चतुःषष्टिकलासु कुशला अवर्तन्त[२०८]।

प्राचीनसाहित्ये पञ्चालजनपदस्य द्वौ भागौ वर्णितौ समुपलभ्येते- उत्तरपञ्चालाः दक्षिणपञ्चालाश्च। महाभारते विवरणमेतल्लभ्यते -

द्रोणशिष्यैः कौरवपाण्डवैः पञ्चालाधिपो द्रुपदः पराजितो द्रोणस्य शरणमानीतः। द्रोणस्तु पञ्चालजनपदं द्वयोर्भागयोर्विभज्योत्तरपञ्चालजनपदं स्वाधिकारवर्तिनं चकार। दक्षिणपञ्चालजनपदस्तु द्रुपदस्याऽधिकारे-ऽवशिष्टः[२०९]। उत्तरपञ्चालानां राजधानी अहिच्छत्रनगरं दक्षिणपञ्चालानाञ्च कम्पिल्लनगरमवर्तत। बौद्धयुगे पञ्चालजनपदस्य गणना षोडशमहाजनपदेषु समुपलभ्यते[२१०]।

प्राचीनवर्णनानि प्रतिपादयन्ति -

पञ्चालजनपदः कुरुजनपदतः प्राच्यामवर्तत। विस्तृतेऽस्मिन् जनपदे वर्तमानबरेलीपीलीभीतबदायूंफर्रुखाबादफतहगढ़जनपदाः सम्मिलिता आसन्। कान्यकुब्जपर्यन्तमयं जनपदो विस्तृतोऽवर्तत। तापसवत्सराजनाटकवर्णनैर्व्यक्तमेव, यत् पञ्चालानां दक्षिणे गङ्गापारे वत्सजनपदस्याऽवस्थितिरविद्यत।

कनिंघममहोदयस्याऽभिमतमस्ति -

वर्तमानरुहेलखण्डक्षेत्रे पञ्चालजनपदो गङ्गाया उत्तरवर्त्यासीत्। अहिच्छनगरं बदायूंजनपदवर्त्यांवलाग्रामेण परिचीयते। आंवलासमीपं कस्यचित् प्राचीननगरस्य भग्नावशेषाः पुरातत्त्वविद्भिरुपलब्धाः। अहिच्छत्रनगरस्यैवैते भग्नावशेषाः सन्तीति इतिहासविद्भिरनुमीयते।

दक्षिणपञ्चालजनपदस्याऽवस्थितिर्गङ्गायाः दक्षिणतटव-र्त्यासीत्। अस्य राजधानी कम्पिल्लनगरमवर्तत। नगरस्याऽस्या-ऽपि भग्नावशेषाः पुरातत्त्वविद्भिः समुपलब्धाः। गङ्गायाः दक्षिणे

तटे कम्पिल्लामिधाना पुरी वर्तते। तत्रैकमुत्स्थलं द्रुपदकोटनाम्ना लोके प्रसिद्धमस्ति।

### (३३) पाण्ड्याः -

श्यामिलकेन पाण्ड्यजनपदस्य वर्णनं चोलमहिषककेरलजनपदैः सह कृतम्[२११]। अतो जनपदोऽयं दाक्षिणात्यो निश्चीयते। पाण्ड्यजनपद-निवासिनां नागरिकाणां जनानामुज्जयिनीनिवासो तेन प्रमाणितः।

प्रमाणेनाऽनेनाऽनुमीयते, यत् पाण्ड्यजनपदोऽपि गुप्तसाम्राज्या-न्तर्गतोऽवर्तत। इन्दुमतीस्वयंवरप्रसङ्गे कालिदासः पाण्ड्याधिपस्य पाण्ड्यजनपदस्य च रुचिकरं वर्णनञ्चकार[२१२]। पाण्ड्यजनपदस्य राजधानी तेनोरगपुरं प्रोक्ता[२१३]। रघुदिग्विजयप्रसङ्गेऽप्यसौ पाण्ड्यजनपद-विजयमवर्णयत्[२१४]।

कालिदासप्रोक्ता पाण्ड्यजनपदराजधानी नगरमिदमुरगपुरं मद्रास-(चेन्नई) नगराद् दक्षिणदिशि षष्ट्युत्तरैकशत (१५०) क्रोश-विप्रकृष्टान्तरालवर्तिनी त्रिचनापल्लीजनपदे वर्तते। वर्तमानसमये नेगापट्टननाम्नेदं नगरं ज्ञायते। अरइयूराभिधानेनाऽपीदं प्रसिद्धम्। अनेके समीक्षकाः वर्तमानमदुरानगरमेव प्राचीनकालीनेनोरगपुरेण परिचाययन्ति[२१५]।

राजशेखरः पाण्ड्यजनपदमनेकेषु प्रसङ्गेषूल्लिलेख[२१६]। सम्भवतस्तस्य पाण्ड्यद्रविडजनपदयोरेकत्वमभिमतम्। पाण्ड्यानाम-धिपतिस्तेन द्रविडपतिः प्रोक्तः[२१७]। पाण्ड्यजनपदस्तेन समुद्रतटवर्ती सूचितः। ताम्रपर्णी सरिच्च तन्मध्ये प्रवहति[२१८]। कर्पूरमञ्जर्यां तेन प्रोक्तम् - पाण्ड्यजनपदस्य द्वे वस्तुनी प्रसिद्धे स्तः - रमण्यो मलयपवनश्च[२१९]।

कुलशेखरवर्मणा पाण्ड्यजनपदस्याऽवस्थानं दक्षिणभारते सूचितम्[२२०]। जनपदोऽसौ केरलजनपदतोऽपि दक्षिणायामवर्तत।

वर्तमानभौगोलिकस्थितिमभिलक्ष्य मदुरातिनेवेल्लीजनपदौ

पाण्ड्यजनपदान्तर्गतावास्ताम्। सम्भवतस्त्रावणकोरकोचीनराज्यस्य दक्षिणवर्तीनि क्षेत्राण्यपि तदन्तर्गतान्यासन्। जनपदस्याऽस्य सीमान आसन् -

उदीच्यां कावेरी सरित्, प्रतीच्यां मलयगीरिः केरलजनपदश्च, प्राच्यां बङ्गसागरो मन्नारबङ्कश्च दक्षिणायां च हिन्दमहासागरः।

## (३४) बङ्गाः -

श्यामिलकेन पादताडितकनाटके वर्णितम् - उज्जन्यिां बङ्गवासिनोऽपि दृश्यन्ते[२२१]। भासो बङ्गजनपदमुल्लिलेख, तञ्चासौ पूर्वीयेषु जनपदेषु समकेतयत्। चण्डप्रद्योतकन्यां बासवदत्तां बङ्गाधिपोऽभिललाष। प्रस्तावमेनञ्चण्डप्रद्योतोऽपि सूचीबद्धमकरोत्[२२२]।

बङ्गजनपदस्योल्लेखः प्राचीनसाहित्ये प्राचुर्येण समुपलभ्यते। पुराणेषु वर्णनानि सन्ति, यद् बलिसुतस्य बङ्गस्य नाम्ना जनपदोऽयं बङ्गाभिधानो बभूव[२२३]। बङ्गजनपदस्य गणना प्राचीनशास्त्रकारैः पूर्वीयेषु जनपदेषु विहिता[२२४]।

वायुपुराणे[२२५], मत्स्यपुराणे[२२६], गरुडपुराणे[२२७] बृहत्संहितायाञ्च[२२८] बङ्गजनपदः प्राच्योऽभिहितः। कामसूत्रस्य जयमङ्गलाटीकायां टीकाकारेण लिखितम् - बङ्गजनपदमध्ये लौहित्य (ब्रह्मपुत्र) सरित् प्रवहति।

सामान्यतः पूर्वबङ्गालराज्यं (वर्तमानकाले बङ्गलादेशः) बङ्गजनपदोऽवर्तत। अस्मिन् जनपदे मुख्यरूपेण वर्तमानचटगांव-मैमनसिंहढाकाजनपदक्षेत्राण्यभूवन्।

अत्र डी० सी० सरकारमहोदयस्याऽभिमतं वर्तते - वर्तमान-दक्षिणपूर्वबङ्गालराज्यमेव बङ्गजनपदः सम्भाव्यते[२२९]। परन्तु बी० सी० लामहोदयः समग्रमेव बङ्गालराज्यं प्राचीनं बङ्गजनपदं प्रतिपादयति[२३०]। भगवतशरणोपाध्यायोऽपि लिलेख - बङ्गजनपदो वर्तमानकालीनत्रिपुराराज्यात् पश्चिमदिशि संस्थितमासीत्।

गौडजनपदाच्चाऽयं जनपदो भिन्नमेवाऽवर्तत[२३१]।

## (३५) बाह्लवा: -

राजशेखरेण बाह्लवो जनपदो वर्णित:। अत्रत्या: प्रमदा: वसन्तर्तौ ह्यतिशयेन प्रसीदन्ति[२३२]। काव्यमीमांसायां जनपदोऽयमुत्तरापथवर्ती गणित:[२३३]। राजतरङ्गिण्यां बाह्लवजनपदस्य सङ्केतो विद्यते। अस्याऽवस्थिति: काश्मीरजनपदस्य दक्षिणपूर्वदिश्यासीत्। वर्तमानसमये बाह्लवजनपदो वल्लपुरेण (वल्लवरेण) परिचीयते। पर्वतीयराज्यमिदं हिमाचलप्रदेशे विद्यते।

## (३६) बाह्लीका: -

श्यामिलकेन बाह्लीको जनपद: समुल्लिखित:[२३४]। प्राचीन-भारतीयजनपदेषु बाह्लीकजनपदो गौरवास्पदमासीत्। स्कन्दपुराणे भारतवर्षस्य द्वासप्तति(७२) जनपदेषु बाह्लीकजनपदोऽपि परिगणितो विद्यते[२३५]। जनपदेऽस्मिन् ग्रामाणां लक्षचतुष्टयं सम्मिलितमस्ति। युधिष्ठिरस्य राजसूययज्ञप्रसङ्गे पाण्डवैरुत्तरीयजनपदाभियानयात्रासु बाह्लीकजनपदोऽपि विजित:[२३६]। अत्रत्यो राजा प्रजाजनै: सहोपहारा-नादाय यज्ञविधौ सम्मिलितो अभवत्। कालिदासोऽप्यवर्णयत् -

रघो: सैन्यानि दिग्विजयप्रसङ्गे बाह्लीकजनपदे वंक्षुसरित्तट-मसृपन्[२३७]। तत्र रघुणा हूणा: पराजिता:[२३८]।

महरौलीग्रामस्य प्राचीनाभिलेखेनैकेन सूचनाऽधिगम्यते, यच्चन्द्रगुप्ताभिधानो महीपतिर्बाह्लीकानजयत्। सम्भवतो महीपतिरयं गुप्तवंशीय: सम्राट् चन्द्रगुप्तो द्वितीयो विक्रमादित्य इत्युपाधिधारी ह्यवर्तत। कामसूत्रे वात्सायनो बाह्लीकजनपदं स्त्रीराज्यं प्रोवाच। अत्रत्या: स्त्रियोऽनेकान् पुरुषान् परिणयन्ति स्म। स्त्रीणामन्त:पुराण्यप्यासन्। अत्राऽन्त:पुरेषु बहव: पुरुषास्तयैव पतिरूपेण न्यवसन् यथैकस्य पुरुषस्यान्त:पुरेऽनेका: स्त्रिय: पत्नीरूपेण तिष्ठन्ति[२३९]।

प्रसिद्धश्चीनदेशवास्तव्यस्तीर्थयात्री ह्वेन्त्सांगमहोदयोऽपि

बाह्लीकजनपदस्य वर्णनञ्चकार। जनपदस्याऽस्याऽभिधानमसावलिखत् फो-हो-लो। तेन वर्णितं, यदत्र प्रदेशे भारतीयसभ्यतायाः प्रचारः प्रसारश्च वर्तते। अथ चाऽत्र शतसंख्यकाः बौद्धमठाः सन्ति[२४०]।

बाह्लीकजनपदो वर्तमानसमये बल्ख(बैक्ट्रिया) देशेन परिचीयते। अफगानिस्तानदेशस्य पश्चिमोत्तरदिश्यस्य जनपदस्य स्थितिर्वर्तते। वासुदेवशरणाग्रवालस्य मतमिदमस्ति - बाह्लीकजनपदस्य स्थितिः काम्बोजजनपदात् प्रतीच्यां वंक्षुसरितश्च दक्षिणदिश्यवर्तत। क्षेत्रमिदं हिन्दूकुशपर्वततः पश्चिमोत्तरदिश्यवर्तत[२४१]।

## (३७) भर्गाः -

श्यामिलकः काशीकोशलजनपदाभ्यां सह भर्गजनपदमप्यवर्णयत्[२४२]। पूर्वभारतवर्तिषु जनपदेष्वस्य जनपदस्य गणना विधीयते। पालिसाहित्ये जनपदोऽयं पूर्वीयः प्रोक्तः। युधिष्ठिरस्य राजसूययज्ञस्य प्रसङ्गे महाभारतकारेण वर्णितम् - वत्सजनपदं विजित्य भीमो भर्गाधिपं निषादाधिपतिमपि विजितवान्[२४३]।

ऐतरेयब्राह्मणे[२४४] पाणिनीयाष्टाध्याय्याञ्च[२४५] भर्गवंशीयक्षत्रियाणामुल्लेखाः सन्ति। वर्णनैरेभिर्जनपदस्याऽस्याऽवस्थितिः पूर्वभारतीया प्रतिभाति। बौद्धसाहित्ये जनपदोऽयं भग्गाभिधानेन कथितः। राजधानी चाऽस्याऽऽसीत् - सिंसुमारगिरिः[२४६]।

वर्तमानसमये भर्गजनपदश्चुनारजनपदप्रदेशेन परिचीयते[२४७]।

## (३८) मगधाः -

प्राचीनसमये मगधजनपदोऽतिशक्तिम्पन्नः सुसमृद्धश्चाऽवर्तत। अत्रत्यैर्नृपतिभिः केषुचित् कालेषु समग्रं भारतवर्षं विजित्यैकसूत्रे च निबध्य महतो विशालस्य साम्राज्यस्य प्रतिष्ठा विहिता। संस्कृतनाटकेषु मगधजनपदस्योल्लेखा अनेकशः समुपलभ्यन्ते।

भाससमये मगधानां नरपतिर्दर्शकाभिधानो बभूव। तस्य भगिनीं पद्मावतीं वत्सराजोदयनः परिणिनाय[२४८]। मगधाधिपश्चण्डप्रद्योतसुतां

परिणेतुं प्रास्तौत्, चण्डप्रद्योतश्च प्रस्तावमेनं विममर्श[२४९]। मुद्राराक्षस-नाटककथा मुख्यरूपेण मगधराजधान्याः कुसुमपुरेण सम्बद्धा वर्तते। वेणीसंहारनाटके[२५०] तापसवत्सराजनाटके[२५१] चाऽपि मगधजनपद-स्योल्लेखाः वर्तन्ते। राजशेखरकृतरूपकेषु मगधजनपदस्य वर्णनानि प्राचुर्येण समुपलभ्यन्ते[२५२]। श्यामिलकेन पादताडितकभाणे वर्णितम् - मगधजनपदनागरिका उज्जयिन्यामवलोक्यन्ते[२५३]। कौमुदीमहोत्सव-नाटककथासूत्रमपि मगधजनपदेन सम्बद्धमस्ति।

मगधानामुल्लेखाः वैदिकसाहित्ये, महाभारते, पुराणेषु, बौद्धसाहित्ये, च प्राचुर्येण समुपलभ्यन्ते। अथर्ववेदे मगधा आर्यसभ्यताबाह्यक्षेत्रवर्तिनो वर्णिताः[२५४]। महाभारते जरासन्धो मगधानामधिपः प्रोक्तः, राजधानी चाऽस्य राजगृहमवर्तत। कृष्णस्य मथुरामसावनेकश आचक्राम। युधिष्ठरस्य राजसूययज्ञप्रसङ्गे कृष्णेन सह भीमार्जुनौ तं विजेतुं राजगृहं ययतुः।

वर्णनैरेभिः प्रतीयते यन्मगधजनपदसीमानः प्रतीच्यां शोणनद-पर्यन्तमुत्तरस्याञ्च गङ्गासरित्पर्यन्तं विस्तृता आसन्[२५५]। मगधानां राजधानी (राजगृहम्) गिरिव्रजनगरी अपि प्रोक्ता। महाभारतेऽस्याः मनोरमं चित्रणमस्ति। नगरीयं पञ्चभिर्गिरिभिः परिवेष्टिता प्राकृतिकमनोरमसौन्दर्येण सम्भृताऽवर्तत[२५६]।

विष्णुपुराणकारेण वर्णितम् -

मगधेषु विश्वस्फटिको नाम नराधिपो बभूव। सर्वप्रथममसौ तत्र वर्णधर्मपरम्परां प्रारम्भ्याऽऽर्यसम्यतां प्रावर्तयत्[२५७]।

बौद्धयुगे मगधजनपदोऽतिशयेन महाशक्तिसम्पन्नः समृद्धिशाली च प्रसिद्धो बभूव। ई० पू० षष्ठशताब्द्यां तत्र बिम्बसाराभिधानो नृपतिरासीत्। गङ्गातो दक्षिणे मगधजनपदोऽवर्तत, उत्तरस्याञ्च लिच्छविगणराज्यम्। अस्मिन् समये मगधराजधानी राजगृहमासीत्। परन्तु नन्दवंशपर्यन्तं मागधैर्नरपतिभिर्लिच्छविगणराज्यं( उत्तरविहारं)

विजित्याऽधिकृत्य च मगधराजधानी गङ्गातटवर्तिनी कृता। तस्मिन् समये पाटलिपुत्रं (कुसुमपुरं) मागधपार्थिवानां प्रधानं नगरं बभूव।

साहित्यशास्त्रे मगधानां प्रसिद्धिर्बभूव। तत्र लेखनशैली काव्यरीतिर्मागधी प्रथिता बभूव।

कालिदाससमये मगधानां प्रतापोऽतिविस्तृत आसीत्। मगधाधिपा अतिशक्तिशालिनो बभूवुः। इन्दुमतीस्वयंवरे मगधाधिपोऽप्युपस्थितोऽवर्तत[२५८]। मगधानां राजधानी पुष्पपुराभिधाना मनोरमणीया कीर्तिता[२५९]। गुप्तकालीनसाम्राज्यकेन्द्रमिदं गुप्तवंशपतनसमकालमेव सततं क्षीणभावं प्रपेदे। तदनन्तरं मगधराज्यं बिहारप्रान्ते विलीनं सञ्जातम्।

मगधजनपदो गङ्गायाः दक्षिणवर्तिषु भूभागेषु दक्षिणविहारेण परिचीयते। अत्र मुख्यरूपेण पटनागयाजनपदौ सम्मिलितौ स्तः। आप्टेमहोदयस्य विवेचनं विद्यते -

मगधजनपदः पश्चिमदिशि आवाराणस्याः प्राच्यां मुङ्गेरपर्यन्तम् उत्तरदिशि आगङ्गातो दक्षिणायां सिंहभूमपर्यन्तञ्च विस्तृतोऽवर्तत[२६०]। अस्य सीमान आसन् -

प्राच्यामङ्गबङ्गजनपदौ, प्रतीच्यां काशीकोशलजनपदावुदीच्यां गङ्गासरिद् दक्षिणायाञ्चोत्कलजनपदः।

## (३९) मत्स्याः -

मत्स्यजनपदो महाभारतकालेऽतितरां प्रसिद्धो महत्त्वशाली च गण्यते स्म। राजा विराट्[२६१] पाण्डवानां सम्बन्धी सञ्जातः। विराजः सुता उत्तरा अर्जुनपुत्रेणाऽभिमन्युना परिणीता।

प्राचीनकालादेवाऽस्य मत्स्यजनपदस्य सङ्केताः साहित्ये समुपलभ्यन्ते। ऋग्वेदे[२६२], शतपथब्राह्मणे[२६३], गोपथब्राह्मणे[२६४], कौशीतक्युपनिषदि[२६५] च जनपदोऽयमुल्लिखितः। मनुस्मृत्यां मत्स्यजनपदोऽतिपवित्रो ब्रह्मर्षिदेशेषु परिगणितः[२६६]।

महाभारतकारो मत्स्यजनपदं विस्तरेणाऽवर्णयत्। पाण्डवानां

त्रयोदशमाज्ञातवासवर्षं मत्स्याधिपनगरे व्यतीतम्। रोहितकशौरसेन-जनपदमार्गेण ते मत्स्यदेशराजधानीं विराटनगरं प्राविशन्।

वर्तमानकाले धौलपुर (राजस्थान) जनपदस्य पश्चिमक्षेत्रेण प्राचीनमत्स्यजनपदः परिचीयते[२६७]। वर्तमानं बैरतनगरमेव महाभारतवर्णितं विराटनगरं विद्यते। नगरमिदं जयपुरत उत्तरस्यां चत्वारिंशन्मीलविप्रकृष्टान्तरालेन वर्तते।

**(४०) मद्राः -**

मद्रजनपदोऽतिप्राचीनो वर्तते। वेणीसंहारनाटकेऽस्य जनपदस्य सङ्केतो विद्यते[२६८]। महाभारते मद्रजनपदस्य विस्तरेण वर्णनमस्ति। मद्राधिपेन शल्येन नकुलसहदेवयोर्मातुलेनाऽपि महाभारतयुद्धे दुर्योधनस्य पक्षो गृहीतः। पुराणप्रसिद्धा सती सावित्री मद्राधिपस्याऽश्वपतेः सुताऽऽसीत्[२६९]।

मद्रजनपदः सम्भवतो बाह्लीकजनपदान्तर्गतोऽवर्तत। मद्रजनपदस्य सम्भवतो द्वौ विभागाववर्तेताम् - पूर्वमद्रोऽपरमद्रश्च। चन्द्रभागेरावतीसरितोर्मध्यवर्ती द्व्याप आसीत् पूर्वमद्रः। अपरमद्रजनपदस्य सीमानश्चन्द्रभागासरितो वितस्ता (जेहलम) सरित्पर्यन्तं विस्तृता अभूवन्। अपरमद्रजनपदस्य राजधानी शाकलनगरं (वर्तमानस्यालकोटनगरम्) बभूव। गुरुगोविन्दसिंहसमयपर्यन्तं जनपदोऽयं मद्राभिधानेन ज्ञायते स्म।

**(४१) मलदाः -**

श्यामिलको मलदजनपदस्यैकं सामन्तनृपतिमवर्णयत्। असावुज्जयिन्यां भ्रमन्नवलोक्यते स्म[२७०]।

मलदजनपदस्योल्लेखः प्राचीनसाहित्ये बहुधोपलभ्यते। भरतनाट्यशास्त्रेऽस्य सङ्केतो विद्यते[२७१]। महाभारते भीमकृतमलदजन-पदविजयवर्णनमस्ति[२७२]। रामायणे चाऽपि बाल्मीकिना पूर्वीयेषु जनपदेषु मलदजनपदो वर्णितः। मलदेषु कारूषेषु च ताटका राक्षसी व्यचरत्[२७३]।

मलदजनपदः सामान्यतः पूर्वभारतस्य माल्दाप्रदेशेन परिचीयते। परं पर्जीटरमहोदयो मलदान् मलजान् संभाव्य तान् वर्तमानबिहार-प्रदेशे शाहाबादजनपदवास्तव्यान् प्रतिपादयामास[२७४]। तत्र बक्सरप्रदेशो प्राचीनो मलदजनपदो मन्तव्यः[२७५]।

## (४२) मलयाः -

मुद्राराक्षसनाटककारेण मलयजनपदस्योल्लेखो विहितः। मलयाधिपः सिंहनादो मलयकेतोः पञ्चप्रधानसहायकनृपतिष्ववर्तत[२७६]। ते पञ्च राजानोऽवर्तन्त - कुलूताधिपश्चित्रवर्मा, कश्मीराधिपः पुष्कराक्षो मलयाधिपः सिंहनादः सिन्धुदेशाधिपः सिन्धुषेणः पारसीकाधिपश्च मेघनादः। सर्वेषामेतेषां जनपदानां स्थितिः प्रायशो भारतवर्षस्य पश्चिमोत्तरवर्ती भवितव्या।

मलयजनपदस्याऽभिज्ञानं विवादास्पदमेव। सामान्यतो मलयगिरिभूभागेषु मलयजनपदोऽवगन्तव्यः। विलसनमहोदयेन तैलङ्गमहोदयेन च पश्चिमघाटप्रदेशेषु केरलेषु च मलयजनपदस्थितिः प्रोक्ता। परं मुद्राराक्षसवर्णितमलयजनपदः पृथगेव प्रतिभाति। तस्य दक्षिणभारतस्थितिकल्पना न सम्भवा। प्रो० ध्रुवमहोदयस्य सम्मतौ मलयजनपदः कुलूतेभ्यो हिमगिरिवर्तिभ्यः प्राचीदिग्वर्त्यासीत्। अथ च समीक्षकैः कैश्चिन्नेपालेषु राप्तीगण्डकसरितोर्मध्यवर्तीनि क्षेत्राण्यपि मलयजनपदरूपेण प्रोक्तानि।

## (४३) महाराष्ट्राः -

महाराष्ट्रजनपदः प्राचीनकालादेव महत्त्वशाली प्रसिद्धो वर्तते। राजशेखरो महाराष्ट्रजनपदमेतमतितरां प्राशंसत्। अतिविस्तृतेऽस्मिन् जनपदे विदर्भकुन्तलजनपदावप्यन्तर्गतावववर्तेताम्[२७७]। महाराष्ट्रकामिन्यो मनोरमाश्चित्ताकर्षकारिण्यश्च भवन्ति। गौरवर्णानाञ्च तासां कपोलाश्चम्पाकुसुमसमाः मनोहारिणो वर्तन्ते[२७८]। कामविलासनिपुणास्ताः सत्त्वरमेव कामोन्मत्ताः सञ्जायन्ते[२७९]।

पुराणेषु महाराष्ट्राणां वर्णनानि प्राचुर्येण समुपलभ्यन्ते। स्कन्दपुराणकारो जनपदमेतं दक्षिणापथवर्तिनं जगाद[२८०]। मार्कण्डेय-पुराणस्य वचनमस्ति - महाराष्ट्रप्रदेश: कूर्मस्य दक्षिणकुक्षौ स्थित:[२८१]।

आर० जी० भण्डारकरमहोदयस्य सम्मतिर्वर्तते -

प्राचीनसमये राष्ट्रकूटवंशीया: नरपतयो दक्षिणभारतं प्राशासन्। तेषां पूर्वपुरुषो रट्टाभिधानेन प्रसिद्धो बभूव। तदनन्तरमिदं राज्यं महारट्टनाम्ना, तदनन्तरञ्च महाराष्ट्रनाम्ना लोके प्रसिद्धं सञ्जातम्[२८२]।

यशोधरेण महाराष्ट्रजनपदविस्तारो नर्मदासरित आरभ्य दक्षिणदिशि कर्णाटपर्यन्तं प्रोक्त:[२८३]। वर्तमानमहाराष्ट्रराज्यमेव प्राचीनकालीनो महाराष्ट्रजनपदो विद्यते।

## (४४) महिषका: -

श्यामिलकेन चोलपाण्ड्यकेरलजनपदनागरिकै: सह महिषकजनपदनिवासिनां समुपस्थितिरुज्जयिन्यां प्रदर्शिता[२८४]। वर्णनेनाऽनेन प्रतीयते, यन्महिषकजनपदोऽपि दक्षिणापथे जनपदानामेतेषां सन्निकटवर्ती बभूव। मीराशीमहोदयस्य सम्मतिर्वर्तते -

प्राचीनकाले हैदराबादराज्यस्य दक्षिणो भाग एव महिषक-जनपदोऽवर्तत[२८५]।

सरकारमहोदयो वर्तमानमैसूरप्रदेशमेव महिषकजनपदमब्रवीत्। अथवा रेवातीरसंस्थिता माहिष्मत्येव महिषकजनपदोऽभवत्[२८६]।

परं पादताडितकभाणे चोलपाण्ड्यकेरलै: सह महिषक-जनपदोल्लेखनसद्भावादत्र मैसूरराज्यमेव महिषकजनपदं प्राचीनकालीनं वक्तुमुचितम्।

## (४५) मुरला: -

राजाशेखरो मुरलजनपदमवर्णयत्[२८७]। जनपदोऽयं मुरलासरित्तट-वर्ती सम्भाव्यते। अतएवाऽयं मुरलाभिधानेन प्रथितां गत:। केचन विद्वांसो मुरलासरितं केरलप्रदेशवर्तिनीं मत्वा मुरलजनपदमपि

दक्षिणापथवर्तिनं कथयन्ति। परन्तु मतमिदं विवादास्पदमेव वर्तते।

मुरलानदी पूर्वमेव सरितां प्रसङ्गे वर्णिता। भवभूतिः नदीमेनां गोदावरीसहायिकामब्रवीत्। महामुनेरगस्त्यस्य भार्या लोपामुद्रा मुरलां गोदावरीसकाशं प्रैषीत्[२८८]। कालिदासः सह्यक्षेत्रेष्वपरान्तजनपदे च मुरलजनपदस्थितिं प्रावोचत्। अतो मुरलजनपदस्याऽवस्थितिः केरलापरान्तजनपदयोर्मध्यवर्तिनी सम्भाव्यते। मीराशीमहोदयस्य सम्मतौ हैदराबादराज्यस्योत्तरीयो भूभाग एव प्राचीनकाले मुरलजनपदनाम्ना प्रसिद्धोऽवर्तत[२८९]। केचन समीक्षकाः केरलजनपदमेव मुरलजनपदं प्रतिपादयन्ति[२९०]।

## (४६) रमठाः -

बालरामायणनाटके राजशेखरो रमठजनपदमवर्णयत्। महाभारते रमठजनपदो भारतवर्षस्य पश्चिमोत्तरसीमास्ववस्थितः प्रोक्तः[२९१]। सरकारमहोदयस्याऽभिमतं विद्यते यद् रमठजनपदो गजनी-बरवान-जनपदयोर्मध्यवर्ती वर्तते[२९२]।

## (४७) रोहीतकाः-

पादताडितकभाणे रोहीतकवासिनां मृदङ्गवादकानां वर्णनानि सन्ति। उज्जयिन्याः पानागारेषु मृदङ्गान् वादयन्तस्ते लोकगीतानि गायन्ति स्म[२९३]। महाभारते वर्णनानि समुपलभ्यन्ते - रोहीतकजनपदो हीन्द्रप्रस्थं निकषा पश्चिमदिग्वर्ती वर्तते। सहदेवो जनपदमेनमजयत्[२९४]।

इतिहासविदो रोहीतकजनपदं यौधेयगणस्य निवासं प्रवदन्ति। गरुडपुराणे मध्यदेशनिवासिनो यौधेयगणस्योल्लेखो लभ्यते[२९५]। वर्तमानसमये हरयाणाराज्यवर्तिना रोहतकजनपदेन प्राचीनरोहीतक-जनपदः परिचीयते।

## (४८) लङ्का -

भारतीयपरम्पराः लङ्काद्वीपस्य सिंहलद्वीपस्य चैकत्वं प्रतिपाद्य तं दक्षिणापथवर्तिनं प्रतिपादयन्ति। जनपदोऽयं रामेश्वरतः समुद्रमुत्तीर्य

सामान्यतः सप्ततिमीलविप्रकृष्टान्तरालेन द्वीपरूपो वर्तते। वर्तमानसीलोनद्वीप एव प्राचीनकालीनो लङ्काद्वीपोऽस्ति।

प्राचीनसाहित्ये लङ्काद्वीपस्य सिंहलद्वीपस्य वा वर्णनानि विस्तरेण समुपलभ्यन्ते। संस्कृतनाटकेषु रामकथासम्बन्धिषु सविशेषमयं वर्णितः। लङ्काधिपती रावणो रामस्य प्रियां भार्यां सीतामपजहार। तदनन्तरं समुद्रे सेतुमाबध्य लङ्कां प्रविश्य रावणञ्च निहत्य रामः सीतामुद्दधार।

हर्षवर्धनकाले सिंहलजनपदस्य द्वीपस्य समृद्धिशालिव्यापारिककेन्द्ररूपेण प्रसिद्धिरासीत्। नियमितरूपेण तत्र पोतानामावागमनमभवदिति समीक्षकैर्निश्चीयते। सिंहलद्वीपाधिपैः सह भारतीयनरपतीनां घनिष्ठो वैवाहिकसम्बन्धोऽवर्तत। रत्नावलीनाटिकायाः कथासूत्रमस्ति -

सिहलनरेशेन स्वकीया सुता रत्नावली वत्सराजाय समुद्रमार्गेण प्रेषिता। तया व्यापारिकपोतमारुह्य सिंहलतः कौशाम्ब्यै प्रस्थितम्। समुद्रमार्गे सामुद्रिकझञ्झावातेन पोतः खण्डशो भग्नो जलनिधिसलिले निमग्नः। परन्तु कौशाम्बीवास्तव्यैः पोतव्यवहारिभी रक्षिता सा रत्नावली कौशाम्बीं नीता यौगन्धरायणाय च महामन्त्रिणे समर्पिता[२९६]।

प्राचीनसाहित्ये वर्णनानि समुपलभ्यन्ते, यत् सिंहलद्वीपं दक्षिणभारतीयनरेशाः पराक्रमशालिनोऽधिचक्रिरे। दक्षिणभारतीयनृपतयो द्वीपमेनमनेकश आचक्रमुः। सम्भवतो गुप्तवंशीयाः सम्राजोऽपि द्वीपमेनमधिचक्रुः। सिंहलजनपदीयाः वाराङ्गनाः विशालायामवलोक्यन्ते स्म[२९७]। राजशेखरेण वर्णितम् -

सिंहलकामिन्यः सततं मानशीलाः भवन्ति। सिंहलद्वीपस्य राजधान्यां लङ्कापुर्यां भवनतोरणेषु पुष्पस्रजोऽवलोक्यन्ते स्म[२९८]।

लङ्कायाः सिंहलद्वीपस्य च स्थितिविषये विद्वत्सु समीक्षकेष्वितिहासवित्सु च मतभेदाः संलक्ष्यन्ते। जैकोबीहीरालालादयो विद्वांसो लङ्काद्वीपं न समुद्रपारीयमामनन्ति। मध्यभारत एव कुत्रचिल्लङ्का-

जनपदस्याऽवस्थितिरवर्ततेति तेषां सम्मतिः। परन्तु मायाप्रसादः त्रिपाठीमहोदयोऽलिखत् –

लङ्काजनपदस्याऽवस्थितेः मध्यभारते विन्ध्यप्रदेशे वा प्रतिपादनं न समुचितम्। यथा जैकोबीमहोदयो प्रत्यापादयत्। रामायणस्याऽप्यध्यनेन[२९९] स्पष्टमेव यल्लङ्काजनपदः सागरेण परिवेष्टितो विशालो द्वीपो वर्तते। लङ्काजनपदस्याऽवस्थितिर्विन्ध्यप्रदेशतो योजनशतविप्रकृष्टान्तरालवर्तिनी प्रोक्ता[३००]। आधुनिकप्रमाणानुसारमन्तरालमेतद् याथार्थ्यं वहति[३०१]।

भगवतशरणोपाध्यायो मध्यभारते लङ्कास्थितिं प्रबलप्रमाणैर्निषिध्य लङ्कां समुद्रपारीयमेव द्वीपं प्रत्यापादयत्[३०२]।

प्राचीनसाहित्योक्तवर्णनानि स्पष्टरूपेण प्रतिपादयन्ति, यद्रामेश्वरतः समुद्रमुत्तीर्य लङ्काद्वीपं गन्तुं शक्यते। कालिदासः सुस्पष्टरूपेण लङ्कामेव सिंहलमुक्त्वा समुद्रपरिवेष्टितं द्वीपमकथयत्[३०३]। मुरारिरपि स्पष्टरूपेणाऽवर्णयत् –

पुष्पकविमानमारुह्य लङ्कातः प्रस्थितो रामः सुवेलगिरिसानोर्यात्रां प्रारेभे। समुद्रमुत्तीर्याऽसौ सेतुबन्धमवालोकयत्, तदनन्तरञ्च समुद्रतीरम्। सेतुबन्धोऽयं लङ्काभारतयोर्योजकः[३०४]।

प्राचीनसाहित्ये लङ्काद्वीपस्याऽवस्थितिः दक्षिणापथवर्तिषु जनपदेषु वर्तते। लङ्काताम्रपर्णीमलयाचलाः दक्षिणभारतस्य प्रमुखानि क्षेत्राण्यासन्[३०५]। लङ्काद्वीपस्य विकासविषये राजशेखरेण कथैका वर्णिता –

मेरुपर्वताज्जम्बूशाखामेकामानीय गरुडो लङ्कायाः विकासमकरोत्[३०६]।

लङ्कासिंहलद्वीपयोरेकत्वे प्रतिपादितेऽपि केषुचित् प्रसङ्गेषु तयोर्भिन्नत्वमपि प्रतीयते। एकस्मिन् प्रसङ्गे राजशेखरो लङ्कास्थितिं सिहंलादुत्तरेणाऽकथयत्[३०७]। बालरामायणनाटके सीतास्वयंवरनाटके-

ऽभिनीयमाने तत्र सिंहलद्वीपस्याऽधिपस्योपस्थितिरपि कविना वर्णिता। धनुरुत्थापनकार्ये सङ्कुचन्तं सिंहलपतिमवलोक्य रावणो ब्रवीति –

सिंहलपते ! सन्देहोऽयं किमर्थम् ? सन्देहेन वीररसो बाधितो भवति[३०८]।

अत्र राजशेखरेण सिंहलपतिर्न रावणोऽभिमतः। यदि तथाऽभविष्यन्न कविस्तथाऽलिखिष्यत्। अतः कविना रावण एव लङ्कापतिः प्रोक्तो न सिंहलपतिः।

बालरामायणनाटके लङ्कातः पुष्पकविमानेन निवर्तमानो रामः सागरमुल्लंघ्य सिंहलद्वीपमवलोकयति। अत्र रोहणगिरिक्षेत्रे मणयः समुपलभ्यन्ते[३०९]। रोहणगिर्युपत्यकायामगस्त्यस्य मुनेराश्रमो वर्तते[३१०]। तत्र प्रशस्तलक्षणानि मुक्ताफलानि प्राप्यन्ते[३११]।

मुरारिणाऽप्येवंविधमेव वर्णनं समुपस्थापितम्। अयोध्यां लङ्कातः समागच्छतो रामस्य पुष्पकविमानं चन्द्रलोकं सम्प्राप्य पुनः निवर्तमानं समुद्रतटवर्तिनीं भूमिं स्पृशति। अत्राऽगस्त्यस्य द्वितीय आश्रमो वर्तते। समीपमेव सिंहलद्वीपो लक्ष्यते[३१२]।

प्रस्तुतेषु सिंहलद्वीपवर्णनेषु तथाऽस्पष्टता विद्यते, यथा तस्य यथार्थस्थितिकल्पना न सुकरा। प्राचीनपरम्परासु लङ्कासिंहलद्वीपयो-रेकत्वं लक्ष्यते। वर्तमानसमयेऽपि लंकासिंहलद्वीपावेतौ सीलोनद्वीपेन परिचीयेते।

बौद्धसाहित्येऽपि सिंहलद्वीपस्य वर्णनानि प्राचुर्येण सन्निहितानि सन्ति। तानि वर्णनान्यपि परिचाययन्ति, यत् सिंहलद्वीप एव वर्तमानसीलोनद्वीपो वर्तते। महावंशदीपवंशग्रन्थयोर्वर्णनैः प्रतीयते यत् सम्राजोऽशोकस्य सुता सुतश्च संघमित्रामहेन्द्रौ बौद्धधर्मप्रचाराय सिंहलद्वीपमाजग्मतुः। तत्कालीनाः सीलोनद्वीपवर्तिनोऽवशेषाः वर्तमानसमयेऽपि तत्र समुपलभ्यन्ते।

श्रीलङ्काद्वीपस्य विस्तारो ह्युत्तरत्तो दक्षिणं यावत् ६-१० अक्षांशाः,

पूर्वतः पश्चिमञ्च ७९' ४५-८२" देशान्तराः वर्तति। प्राचीनसमये द्वीपस्याऽस्य राजधानी अनुराधापुरमुत्तरवर्तिसमस्थलभूमिभागमध्येऽवर्तत।

वर्तमानसमये डॉ० सांकलियामहोदयो अन्ये च केचन विद्वांसो लङ्काजनपदं मध्यभारतसंलग्नं ओड़ीसादिक्षेत्रेषु साधयितुं प्रायतन्त, परं न कानिचिदपि मान्यप्रमाणानि तैः प्रस्तुतानि।

## (४९) लम्पाकाः -

बालरामायणे लम्पाकजनपदस्य सङ्केताः समुपलभ्यन्ते[३१३]। लम्पाकनिवासिन्यः कामिन्यो हेमन्तर्तौ केशान् विशेषसंस्कारैः संस्कुर्वन्ति। काव्यमीमांसायां जनपदोऽयमुत्तरवर्तिषु जनपदेषु परिगणितः[३१४]।

वर्तमानसमये लम्पाकजनपदः कुभा (काबुल) सरित उत्तरस्यां लमगानक्षेत्रेण परिचीयते। जलालाबादनगरादिदं स्थानं विंशतिमील-विप्रकृष्टान्तरालेन पश्चिमोत्तरदिशि वर्तति। डे महोदयो लम्पाकजनपदं भुरुण्डाभिधानेनाऽपि परिचाययति[३१५]।

## (५०) लाटाः -

प्राचीनकाले पश्चिमसमुद्रतटवर्तिना लाटजनपदेन परा प्रसिद्धिः प्राप्ता। पादताडितकभाणे श्यामिलको लाटीयानां लम्पटानां डिण्डिमपदप्रसिद्धानां चित्रणं कृतवान्। पिशाचेभ्यो नातिभिन्नास्ते[३१६] सर्वजनसमक्षं विवस्त्रा एव स्नानमकुर्वन्। ते स्वयमेव वस्त्राणि प्रक्षालयन्तः विप्रकीर्णकेशाश्च इतस्ततः पर्याटन्, मलिनमृल्लिप्तपादाः शय्यारोहणमकुर्वन्, भक्ष्याभक्ष्यभक्षणे सङ्कोचरहिता आसन्, जीर्णवसन-धारणासक्ताः विपद्ग्रस्तेषु प्रहारकारिणो भुजबलगर्विता आत्मश्लाघा-विकत्थना अभूवन्[३१७]।

लाटजनपदवासिषु शिष्टाचारपरम्पराबोधः स्वल्प एवाऽभवत्। अत्रत्यानां जनानां शब्दोच्चारणमौद्धत्यसम्भृतं ज्जजध्वनिसंयुत-ञ्चाऽवर्तत[३१८]। उद्दण्डोद्धतधृष्टस्वभावा एते रणशूरा अवर्तन्त। उत्तरवस्त्राणि भुजसंवेष्टितानि विधाय तेऽधोवस्त्राणि कटिप्रदेशे

रज्जुभिरबध्नन्[३१९]।

लाटीया रमण्यः कर्णेषु तालीपत्राणि निधाय वेणीशिखराणि मौक्तिकमणिस्वर्णसूत्रस्तम्बैर्विभूषितान्यकुर्वन्। तासां कुचबाहुमूलवक्षांसि कार्पासकवस्त्रैरावृतान्यासन्। नीवीप्रान्तभागाः नितम्बेषु संलग्ना आलक्ष्यन्त[३२०]।

श्यामिलको लाटजनपदं गुप्तनृपतिभिर्विजितमवर्णयत्। तैः लाटडिण्डिमाः पराजित्य बन्दीकृताः[३२१]।

राजशेखरेणाऽपि लाटजनपदः सविशेषं विस्तरेण वर्णितः। तेन सूचितम् – लाटशब्दस्योत्पत्तिर्ब्रह्मणा सम्बद्धा वर्तते। सन्ध्योपासना-समये ह्याचमनं कुर्वतस्तस्य चुलुकादेको मुनिः प्रादुर्बभूव। तस्य मुनेर्वंशजो लाटजनपदस्याऽधिपतिः सञ्जातः[३२२]।

राजशेखरसमये लाटजनपदे शिक्षायाः सभ्यतायाश्च सम्यग्रूपेण प्रचारः प्रसारश्चाऽवर्तत। जनपदमेनं कविरयं राजशेखरो विद्याकेन्द्ररूपेण प्राशंसत्। संस्कृतप्राकृतभाषयोरध्ययनकेन्द्ररूपेणाऽनेन जनपदेन परा प्रसिद्धिरधिगता। साहित्यरचनायामत्रत्या लाटीरीतिर्विकासभावं प्राप्ता[३२३]।

लाटीयजनानां विलासानामपि कविना समुज्ज्वलं वर्णनं विहितम्। अस्मिन् जनपदे प्रवहन्त्यां नर्मदायां सरिति लाटीया रमण्यः स्नान्ति[३२४]। मञ्जिष्ठारागरञ्जितौष्ठाः लाटप्रदेशीयाः प्रमदाः कटाक्षैः कामदेवमपि पीडयितुं क्षमन्ते[३२५]। तासां विलासा हृदयाकर्षकाः वर्तन्ते[३२६]।

कनिंघम महोदयेनोद्घाटितम् –

ई० नवमशताब्द्याः पूर्वार्द्धे लाटजनाधिपः कर्काभिधानो लाटेश्वरोऽवर्तत। लाटबलभीजनपदयोरेकत्वमपि तत्र संभवति[३२७]।

समीक्षकैरितिहासविद्भिश्च लाटजनपदो दक्षिणगुजरातभूमिभागेन परिचीयते। भूभागोऽयं माहीताप्तीसरितोर्मध्यवर्ती वर्तते। सूरत-भडौचबड़ौदाजनपदा अत्र सम्मिलिताः वर्तन्ते[३२८]।

## (५१) वत्साः -

प्राचीनकाले लोकनायकोदयनप्रसङ्गेन वत्सजनपदोऽतितरां प्रसिद्धिं प्राप्तो गौरवान्वितो बभूव। प्रतिज्ञायौगन्धरायणस्वप्नवासवदत्त-प्रियदर्शिकारत्नावलीतापसवत्सराजवीणावासवदत्तादिरूपकाणां नायको वत्सराज उदयन एव वर्तते। कौमुदीमहोत्सवनाटकेऽपि वत्सराजस्यो-ल्लेखोऽस्ति[३२९]। अन्यत्रापि प्राचीनकाव्यसाहित्ये वत्सराजः कविभिरुल्लिखितः[३३०]।

रामायणे महाभारते च वत्सजनपदस्य वर्णनानि समुपलभ्यन्ते। वनं प्रव्रजन् रामो धनधान्यसमृद्धं वत्सजनपदं प्राप्नोत्[३३१]। वत्सजनपदस्य राजधानीं (कौशाम्बीं) पाण्डववंशीयः पार्थिवो नृचक्षुः प्रास्थापयत्। महाभारते वर्णनं विद्यते यद् भीमेन वत्सजनपदो विजितः[३३२]।

ई० पू० षष्ठशताब्द्यां षोडशमहाजनपदेषु चत्वारो जनपदाः विशेषेण शक्तिसम्पन्नाः समृद्धिशालिनोऽवर्तन्त - कोशलमगधावन्तिवत्साः।

वत्सजनपदो गङ्गातो दक्षिणे यमुनामप्युत्तीर्यावन्तिजनपदं यावत् सुविस्तृत आसीत्। प्राच्यामस्य सीमानः काशीकोशलजनपदपर्यन्तं, प्रतीच्याञ्च शूरसेनजनपदं यावद् (मथुरासमीपवर्तिक्षेत्राणि) विस्तृता अभवन्। वत्सजनपदस्य राजधानी कौशाम्बी गङ्गायमुनासङ्गमस्थानात् प्रयागाद् द्वात्रिंशन्मीलविप्रकृष्टान्तरालवर्तिनी यमुनातटावस्थिता ह्यासीत्। प्रयागक्षेत्रं वत्सजनपदान्तर्गतमवर्तत।

## (५२) विदर्भाः -

राजशेखरो विदर्भजनपदं महाराष्ट्रमण्डलस्यैव विभागमेकं जगाद[३३३]। मुरारिरेनं जनपदं महाराष्ट्रमण्डलविभूषणमुक्त्वा राज-धानीं कुण्डिनपुरं प्रावोचत्[३३४]। राजशेखरेणैकस्मिन् स्थाने कुन्तलजनपदे विदर्भनगरमुल्लिखितम्। परमेतद्वर्णनमसङ्गतमेव। काव्यमीमांसा-यामसौ विदर्भान् स्वतन्त्रजनपदत्वेन प्रतिपाद्य वत्सगुल्मनगरमवर्णयत्[३३५]। सम्भवतः कुन्तलजनपदे किमपि विदर्भनगरमविद्यत। परन्तु तन्नगरं

विदर्भजनपदाद् भिन्नमेव सम्भावनीयम्।

प्राचीनसाहित्ये विदर्भजनपदस्य कीर्तिः सर्वत्र प्रथिता बभूव। अस्य जनपदस्य नामकरणसम्बन्धे कथैका प्रसिद्धा वर्तते। कस्मिंश्चित् काले कस्यचिन्मुनेः शापवशादत्र दर्भाणा (कुशानाम्) मुत्पादनमवरुद्धम्। अतोऽयं जनपदो विदर्भाभिधानेन (विगताः दर्भाः प्रदेशाद् यस्मादसौ विदर्भः) लोके प्रथितः[३३६]।

विदर्भजनपदः प्रणयकथाभिः स्वयंवरायोजनसमारोहैश्चाऽपि परिचितो विद्यते। नलदमयन्तीकथायाः महाभारतप्रसिद्धा नायिका दमयन्ती विदर्भराजसुताऽवर्तत। सा विदर्भराजस्य भीमस्य पुत्री ह्यवर्तत। राजधानी चाऽस्य जनपदस्याऽसीत् कुण्डिननगरम्।

कृष्णकथाऽपि विदर्भेषु प्रसिद्धा। कृष्णस्य पट्टमहादेवी रुक्मिणी विदर्भाधिपस्य भीष्मस्य सुताऽवर्तत। कृष्णप्रेमनिमग्ना सा प्रियेण प्रसह्याऽपहृता। कालिदासोऽपीन्दुमतीस्वयंवरमायोज्य रघुवंशे विदर्भजनपदस्य कीर्तिमवर्धयत्। मालविकाग्निमित्रनाटकेऽपि विदर्भजनपदस्योल्लेखो विद्यते। अग्निमित्रसैनिकाः विदर्भान् विजित्य[३३७] द्वयोर्भागयोरेनं जनपदं विभजुः। अत्र वरदासरित उत्तरीयभागस्य शासको यज्ञसेनो दक्षिणविभागस्य च शासको माधवसेनो बभूव[३३८]।

विदर्भजनपदस्य वैदर्भीरीतिः साहित्ये प्रशस्ता सुप्रसिद्धा च बभूव। मुरारिकविना वर्णितम् -

विदर्भकवयः कैशिकीवृत्तिसम्पन्नायां वैदर्भीरीत्यां काव्यानि निबध्नन्ति[३३९]।

विदर्भजनपदो वर्तमानकाले महाराष्ट्रराज्यान्तर्गतबरारप्रदेशेन परिचीयते। कुन्तलजनपदस्योत्तरस्यां दिशि जनपदोऽयं कृष्णासरित्पर्यन्तं सुविस्तृतो बभूव। वर्तमानबिदरक्षेत्रमेव सम्भवतः प्राचीनकालीनो विदर्भजनपदोऽवर्तत।

नन्दलाल डे महोदयेन कुण्डिननगरं कौण्डवीरनगररूपेणाऽभि-

ज्ञातम्[३४०]। अवधबिहारीलाल अवस्थी महोदयोऽमरावतीजनपदान्तर्गत-चन्दौरक्षेत्रवर्ति कौण्डिन्यपुरमेव प्राचीनकुण्डिननगरं प्रतिपादयति। नगरमिदं वर्धासरित्तटवर्ति विद्यते[३४१]। डासनमहोदयो वर्तमानकौण्डिन्य-पुरमेव प्राचीनं कुण्डिननगरं लिखति। नगरमिदं बरारक्षेत्रेऽमरावत्याश्-चत्वारिंशन्मीलविप्रकृटान्तरालेन वर्तते[३४२]।

आप्टेमहोदयस्य कथनं विद्यते -

विदर्भजनपदो वर्धासरिता द्वयोर्भागयोर्विभक्तः - उत्तरो दक्षिणश्च। उत्तरविदर्भस्य राजधानी अमरावत्यासीद्, दक्षिणविदर्भस्य च प्रतिष्ठानपुरम्[३४३]।

## (५३) विदेहाः -

भगवत्याः सीतायाः जन्मभूमिरूपेण प्रसिद्धेन विदेहजनपदेन भारतीयसाहित्ये लोके च परा प्रसिद्धिरधिगता। जनपदस्याऽस्य राजधानी मिथिलाऽवर्तत[३४४]। समग्रो जनपदोऽपि मिथिलाभिधानेन प्रसिद्धो बभूव[३४५]। ब्राह्मणग्रन्थेषूपनिषत्सु च विदेहजनपदस्य वर्णनानि विस्तरेण वर्तन्ते। विष्णुधर्मोत्तरपुराणे[३४६], वायुपुराणे[३४७], मत्स्यपुराणे[३४८] च विदेहाः प्राच्याः प्रोक्ताः। राजशेखरो विदेहान् निमिवंशीयानां नरपतीनां निवासान् प्रावोचत्[३४९]। बुद्धसमये जनपदोऽयं बज्जिगणराज्याभिधानेन प्रसिद्धो बभूव।

विदेहजनपदस्याऽवस्थितिर्मगधेभ्यः पूर्वोत्तरदिशि बभूव। प्राचीनसमयेऽस्मिन् जनपदे वर्तमाननेपालराज्यस्य केचन दक्षिणवर्तिनो भूभागाः, सीतामढी-सीताकुण्डक्षेत्राणि, तिरहुतजनपदस्योत्तरीयो भागश्चम्पारनजनपदस्य च पश्चिमोत्तरीयो भूभागः सम्मिलिता अवर्तन्त[३५०]।

## (५४) शिवयः -

श्यामिलकः शिविजनपदमवर्णयत्। शिविजनपदस्यैको विट उज्जयिन्यां न्यवसत्[३५१]।

शिविजनपदोऽपि प्राचीनो वर्तते। ऋग्वेदेऽप्यस्योल्लेखाः सन्ति। आर्यनृपतीनां शिविजनपदाधिपस्य सुदासेन सह सङ्गरो बभूव[३५२]। महाभारते शिविनरेशस्योशीनरस्य कथा वर्तते, यदसौ कपोतस्य प्राणानां रक्षायै स्वशरीरमांसं विच्छिद्य श्येनायोपाहरत्। पतञ्जलिना शिवीनां राजधानी शिविपुरी प्रोक्ता[३५३]। यूनानदेशाधिपस्य सिकन्दरस्याऽऽक्रमणकाले शिविजनपदो महाशक्तिसम्पन्नोऽवर्तत, यत्र चत्वारिंशत्सहस्रसंख्यापारिमितं पदातिसैन्यमासीत्।

वर्तमानसमये शिविजनपदस्याऽभिज्ञानं पाकिस्तानवर्तिशेरकोटजनपदेन विधीयते। सम्भवत इरावतीचन्द्रभागासरितोर्मध्यवतिनो झंगजनपदभूमिभागा अपि शिविजनपदान्तर्गता अभूवन्।

## (५५) शूरसेनाः -

बिज्जिकया कौमुदीमहोत्सवनाटके शूरसेनजनपदो वर्णितः[३५४]। विन्ध्यवासिनीं देवीमुपासितुं समायाता शूरसेनजनपदाधिपसुता मगधराजतनयस्य कल्याणवर्मणः प्रणयपाशे स्वात्मानं बबन्ध।

भासेनाऽपि शूरसेनजनपदस्योल्लेखो विहितः। अवन्तिराजस्य चण्डप्रद्योतस्य सुतां वासवदत्तां परिणेतुं समुत्सुकेषु राजसु शूरसेनाधिपोऽप्यवर्तत[३५५]। शूरसेनजनपदस्य राजधानी मथुराऽवर्तत[३५६]।

प्राचीनसाहित्ये मनीषिभिर्लेखकैः शूरसेनजनपदस्य बहुधा वर्णनानि प्रस्तुतानि। कथेयं लोके प्रसिद्धा - शत्रुघ्नसुतस्य शूरसेनस्य नाम्ना जनपदोऽयं लोके प्रथितो बभूव।

परं महाभारते कुन्तीवसुदेवयोर्जनकः शूरसेनो वर्णितः। अतोऽनेके समीक्षकाः शूरसेनजनपदस्य नामकरणं तमेवाश्रित्य प्रतिपादयन्ति। परन्त्विदमसङ्गतमेवाऽवगन्तव्यम्। शूरसेनजनपदस्योल्लेखो महाभारतात्पूर्ववर्तिनि रामायणकाव्येऽपि वर्तते[३५७]। अथ च कुन्तीवसुदेवौ महाभारतकालीनौ वर्तेते। महाभारते वर्णनं विद्यते - सहदेवेन शूरसेनजनपदो विजितः[३५८]। कालिदाससेनाऽपीन्दुमतीस्वयंवरप्रसङ्गे

शूरसेनाधिपो वर्णितः[३५९]।

शूरसेनजनपदस्य विस्तारोऽतिव्यापकोऽवर्तत। अस्य सीमान आसन्-

प्राच्यां पञ्चालाः, दक्षिणदिशि चर्मण्वती सरित्, प्रतीच्यां मत्स्याः उदीच्याञ्च कुरवः। वर्तमानमथुरानगरी चैवाऽस्य जनपदस्य राजधान्यवर्तत।

शूरसेनजनपदनाम्नैव शौरसेनी प्राकृतभाषा अत्रत्या लोकभाषा बभूव। सा प्राकृतभाषासु मुख्यतमा गण्यते।

## (५६) शूर्पारकाः -

पादताडितकभाणे शूर्पारकजनपदस्योल्लेखो विद्यते। अत्रत्याः प्रमदाः कविना शौर्पारिकाः प्रोक्ताः। शूर्पारकाणामेका वाराङ्गना उज्जयिन्यां न्यवसत्[३६०]। शूर्पारकजनपदस्य राजधानी चापि शूर्पारकमासीत्।

प्राचीनसाहित्ये शूर्पारकजनपदो लेखकैर्बहुधा समुल्लिखितः। महाभारतीया कथा प्रसिद्धा -

शूर्पाकरकक्षेत्रभूमिः सागरनीरनिमग्ना बभूव। परं परशुरामस्य निवासाय समुद्रो भूमिमेनां जलरहितां शुष्कां विधाय तस्मै समार्पयत्। सा भूमिरपरान्तजनपदान्तर्गता बभूव[३६१]।

बौद्धकाले शूर्पारकजनपदो महत्त्वशाली बभूव, प्रतिष्ठा चाऽस्य वृद्धिं गता। दिव्यावदानग्रन्थे वर्णनानि सन्ति - श्रावस्तीनगरवणिजो विक्रेयवस्तून्यादायाऽत्र समागच्छन्ति स्म[३६२]। अशोकस्य चतुर्दशसु शिलालेखेष्वेकः शूर्पारकेषु विद्यते। अश्वघोषेण बुद्धचरिते भगवतो बुद्धस्य शूर्पारकयात्रा वर्णिता[३६३]। वायुपुराणेऽपरान्तवर्तिनः शूर्पारकनगरस्योल्लेखो विद्यते[३६४]। वायुपुराणवर्णितशूर्पारकनगरस्य पादताडितकभाणोक्तशूर्पारकजनपदस्य चैकत्वं सम्भवति।

प्राचीनसाहित्ये समुल्लिखितस्य शूर्पारकजनपदस्याऽभिज्ञानं वर्तमानकालीननालसोपाराप्रदेशेन विधीयते। प्रदेशोऽयं मुम्बईसमीपं

थानाजनपदान्तर्गतो विद्यते।

## (५७) समन्तपञ्चकाः -

वेणीसंहारनाटके भट्टनारायणः समन्तपञ्चकं नाम क्षेत्रमवर्णयत्। महाभारतयुद्धानन्तरं युधिष्ठरः सेवकानादिदेश - समग्रे समन्तपंचके दुर्योधनोऽन्वेष्टव्यः[३६५]।

सरस्वतीसरित्तटावस्थिताः समन्तपञ्चकाः पवित्रतीर्थरूपेण गण्यन्ते स्म। कृष्णबलरामाभ्यां तत्रत्या तीर्थयात्रा विहिता। कुरुक्षेत्रं तत्परितश्च समग्रः प्रदेशः प्राचीनकाले समन्तपञ्चकनाम्ना ज्ञायते स्म। महाभारते किलैकस्मिन् प्रसङ्गे कुरुक्षेत्रमेव समन्तपञ्चकनाम्ना प्रोक्तम्[३६६]।

आप्टेमहोदयो वर्तमानकुरुक्षेत्रजनपदं समीपवर्तिप्रदेशञ्च समन्तपञ्चकजनपदं प्रतिपादयति[३६७]।

## (५८) सिन्धुसौवीराः -

सिन्धुसौवीरजनपदयोरुल्लेखः सहभावेनाऽपि विद्यते, पृथक् पृथक् चाऽप्यस्ति। विभिन्नसमयेषु जनपदयोरेतयोः प्रशासनाधिकारः सम्भवत एकस्मिन्निव कुलेऽवर्तत[३६८]। अतस्तयोः सहभावो लेखकेन वर्णितः। युधिष्ठरस्य राजसूययज्ञे सिन्धुजनपदस्य सैन्धवाः सौवीरजनपदस्य च दन्तिनस्तत्रत्यैः शासकैरुपहाररूपेण समानीताः[३६९]। विष्णुपुराणेऽपि सहभावो जनपदयोरेतयोः पुराणकारेण सूचितः[३७०]। रुद्रदाम्नः शिलालेखे सिन्धुसौवीरौ जनपदौ सहभावेन विजितौ लक्ष्येते[३७१]।

सिन्धुजनपदस्य स्थितिः सिन्धुसरितः किल उभयतस्तटयोः दक्षिणदिशि समुद्रतीरपर्यन्तमविद्यत। ततः प्राच्यां दिशि सौवीरजनपदो अवर्तत।

संस्कृतनाटकेषु सिन्धुजनपदो बहुधा समुल्लिखितः। महाभारतयुगे सिन्धुजनपदाधिपो जयद्रथो दुर्योधनस्य भगिनीपतिरासीत्[३७२]। मुद्राराक्षसनाटके सिन्धुजनपदाधिपतेः सिन्धुषेणस्य वर्णनमस्ति। असौ मलयकेतोःपञ्चप्रधानसहायकराजस्वेकतमोऽविद्यत[३७३]।

सिन्धुजनपदस्याऽश्वाः प्राचीनकाले प्रशस्याः मन्यन्ते स्म[३७४]। अत एव सैन्धवपदमश्वस्य पर्यायपदरूपेण प्रसिद्धं बभूव। अत्रोपलभ्यमानो लवणोऽपि सैन्धवलवणः प्रोक्तः। स च पञ्चलवणेषु प्रशस्यतमो गण्यते।

सिन्धुजनपदस्याऽभिज्ञानं वर्तमानपाकिस्तानान्तर्गतसिन्धराज्येन विधीयते। प्राचीनकाले जनपदोऽयमतिविस्तृतोऽवर्तत। सिन्धुसरित उभयतटयोरवस्थितोऽयं जनपदो दक्षिणदिशि सागरतीरादारभ्योत्तरस्यां लवणगिरिपर्यन्तं विस्तृतो बभूव। कालिदासेन वर्णितम् -

सिन्धुजनपदस्य शिलाजतुबहुलेषु भूभागेष्वजस्य सैन्धवाः सैन्धवशिलातलान् लिलिहुः[३७५]।

सिन्धुसौवीरजनपदयोः पृथग्भावेनोल्लेखोऽपि बहुधा साहित्यरचनाकारैः कृतः। भासेनाऽविमारकनाटककथासूत्रे वर्णितम् -

सौवीरजनपदाधिपतिर्वैरन्त्यनगराधिपस्य भगिनीपतिरासीत्। सौवीराधिपस्य सुतोऽवर्तत - अविमारकः। वैरन्त्यनगरेश्वरस्य सुता कुरङ्गी लावण्येन सर्वरमणीमौन्दर्यातिशायिनी ह्यासीत्।

अविमारकनाटके भासेन नाटककारेण प्रणयिनोरेतयोः प्रणयगाथा कीर्तिता। सौवीरराजः स्वपुत्राय कुरङ्गीं ययाचे[३७६]। केनचिदपि शापेन हेतुनाऽविमारको विकृतरूपो बभूव। परन्तु कुरङ्गीं प्रत्यनुरागभावं वहन्नसौ वैरन्त्यनगरमागच्छत्। तत्र संयोगवशतः स्वपूर्वरूपमुपपन्नोऽसौ कुरङ्गीमपश्यत्। द्वावेव गुप्तरूपेण परिणयबद्धौ बभूवतुः[३७७]।

भासः सौवीरजनपदं सिन्धुजनपदञ्च पृथग्रूपेण प्रादर्शयत्। अतोऽनेन प्रसङ्गेन प्रतीयते, यत् सिन्धुसौवीरजनपदौ केषुचित् कालेषु सहभावेनाऽवर्तेताम्। अथ च कदाचित् पृथक् पृथक् पार्थिवयोः शासनाधिकारान्तर्गतावप्यवर्तेताम्।

सौवीरजनपदस्याऽवस्थितिः सिन्धुजनपदतः प्राच्यामवर्तत। मुलतानझालावाडप्रदेशौ प्राचीनसमये सौवीरजनपदान्तर्गतावास्ताम्। वी० सी० ला महोदयः सौवीरजनपदं सिन्धुवितस्तासरितोर्मध्यवर्तिनं जगाद[३७८]।

कनिंघममहोदयः सौवीरजनपदं खम्बातबङ्कस्योत्तरवर्तिनं प्रत्यापादयत्[३७९]। विजयेन्द्रकुमार माथुर महोदयः पश्चिमसमुद्रस्य पूर्वभागे गुजरातप्रदेशान्मुलतानजनपदपर्यन्तं भूमिभागं सौवीरजनपदं कथयति।

ग्रीकलेखकैः सौवीरजनपदः सौफीरनाम्ना औफीरनाम्ना वा परिचायितः। अग्निपुराणे कथैकोपलभ्यते -

सौवीरेश्वरस्य पुरोहितेन मैत्रेयाभिधानेन देविकासरितस्तटे विष्णुमन्दिरं निर्मापितम्[३८०]।

सम्भवतो मुलतानजनपदावस्थितं प्रसिद्धं सूर्यमन्दिरं तदेव मैत्रेयनिर्मितं मन्दिरं वर्तते। अत्र विष्णुमूर्तिना सह सूर्यमूर्तिरपि प्रतिष्ठिताऽस्ति।

## (५९) सिंहलाः -

लङ्काद्वीप एव बौद्धकाले सिंहलाभिधानेन प्रसिद्धो बभूव। महावंशपुराणस्यैका कथा प्रसिद्धा -

सिंहलद्वीपस्य प्रथमो भारतीयो नरपतिः सिंहादुत्पन्नो बभूव। अतो द्वीपोऽयं लोके सिंहलाभिधानेन प्रासिद्धिं गतः। सिंहलवर्णनं लङ्काप्रसङ्गेऽवलोकनीयम्। (पृ० १४९)

## (६०) सुराष्ट्राः -

राजशेखरः सुराष्ट्रजनपदमवर्णयत्[३८१]। काव्यमीमांसायां जनपदस्याऽस्य सुविस्तृतानि वर्णनानि सन्ति। द्वारावती (द्वारिकापुरी) जनपदेऽस्मिन्नेव प्रतिष्ठिताऽस्ति[३८२]।

प्राचीनसाहित्ये सुराष्ट्रजनपदस्योल्लेखाः बहुधा समुपलभ्यन्ते। मौर्यवंशीयानां सम्राजां शासनान्तर्गतोऽयमभवज्जनपदः। जनपदस्याऽस्य प्रमुखं नगरं गिरिनगरं (जूनागढ़) बभूव। पद्मपुराणे सुराष्ट्रजनपदो गुर्जरप्रदेशान्तर्गतः प्रोक्तः[३८३]। परन्तु भागवतपुराणे द्वावेतौ पृथक् पृथक् प्रोक्तौ[३८४]। महाभारते वर्णनमुपलभ्यते, यत् सुराष्ट्रजनपदः सहदेवेन विजितः[३८५]।

गुप्तयुगे सुराष्ट्रजनपदो गुप्तसाम्राज्यान्तर्गतो बभूव[३८६]। जूनागढ़े

स्कन्दगुप्तस्य (४५५-४६७ ई०) एकस्मिन् शिलालेखे सुराष्ट्राणां सुदर्शनसरोवरस्य च वर्णनं विद्यते[३८७]। सुराष्ट्राणामभिज्ञानं वर्तमानसौराष्ट्र-(काठियायावाड़) राज्येन विधीयते।

---

## सन्दर्भ ग्रन्थ


१. दिग्घनिकाय (१४.३६) न्तर्गतगोरिन्दसुत्तम्।
२. बालभारत १.३९
३. वेणीसंहारः पृ० ११
४. निवेद्यतां महाराजाय अङ्गेश्वराय। कर्णभार पृ० २
५. पञ्चरात्र पृ० १८
६. मत्स्यपुराण ४८.२५-२६
७. महाभारत - उद्योग पर्व ५०.१९
८. रामायण - बालकाण्ड ११.२-५
९. उत्तररामचरित १.४
१०. अनर्घराघव पृ० ३८०
११. अङ्गेश्वरो जयरथः - वीणावासवदत्तम् पृ० ६
१२. रघुवंशम् ४.५२-५८
१३. दी ज्योग्राफीकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इण्डिया पृ० २५९
१४. कथासरित्सागर ४४.९
१५. पादताड़ितक श्लोक - ७
१६. रघुवंश ४.५२-५८
१७. पोलीटिकल हिस्ट्री आफ एन्शिएण्ट इण्डिया पृ० २५९
१८. दी ज्योग्राफीकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इण्डिया पृ० १३०
१९. कालिदास का भारत प्रथम भाग - पृ० ९५

२०. कैम्ब्रिज हिस्ट्री आफ इण्डिया वो० १ पृ० ६०
२१. ब्रह्माण्डपुराण अध्याय - ७
२२. ततः शूर्पारकं देशं सागरस्तस्य निर्ममे।
सहसा जामदग्न्यस्य सोपरान्तमहीतलम्।।
महाभारत सभापर्व ५१.२८
२३. अवन्तिपुर्यां द्विजसार्थवाहो
युवा दरिद्रः किल चारुदत्तः।
गुणानुरक्ता गणिका च यस्य
वसन्तशोभेव वसन्तसेना।। मृच्छकटिक १.६
२४. महाभारत वनपर्व ३.८९
२५. बुद्धिस्ट इण्डिया पृ० २८
२६. आप्टे कृत संस्कृत-इंग्लिश डिक्शनरी - अपेन्डिक्स - पृ० ३९
२७. काव्यमीमांसा ९.११, १२.४५
२८. पूर्वमेघ ३२-३५
२९. अवन्तीतः पूर्वभागे गोदावर्यास्तथोत्तरे।
मालवाख्यो महादेशो धनधान्यपरायणः।।
शक्तिसङ्गमतन्त्र ३.७.२१
३०. पादताड़ितकश्लोक - २०
३१. कल्चुरल हिस्ट्री फ्रॉम वायुपुराण पृ० २४९
३२. वीणावासवदत्तम् पृ० ६
३३. वामनपुराण १३.४९, मार्कण्डेयपुराण ५७.४८,
विष्णुधर्मोत्तर पुराण १.९.५
३४. वायुपुराण ८८.१७७-१७८
३५. महाभारत - आदिपर्व १७६.७७
३६. ऐतिहासिक नामावली पृ० ४९
३७. अनर्घराघव पृ० ३६९
३८. बालरामायण १०.७०
३९. वही १०.७१
४०. वही ९.३३

४१. कामसूत्रम् ५.५.३२
४२. बालरामायण ३.६३
४३. वायुपुराण २७.२६६
४४. स्कन्दपुराण २.२.६.२७
४५. कालिदास का भारत - प्रथम भाग - पृ० ९०
४६. प्राक्सन्ध्या कुरुषूत्तरेषु गमिता स्नातं पुनर्मानसे
भूयो मन्दरकन्दरान्तरतटेष्वामोदितं यौवनम्।
क्रीडार्थं हिमवद् गुहासु चरिता दृष्टिश्च संलोभिता।।
अविमारक ४.१०
४७. ऐतरेय ब्राह्मण ८.१४
४८. बालरामायण पृ० ५
४९. वही १०.७२
५०. अनर्घराघव पृ० ३६९
५१. बालरामायण १०.७०
५२. वही ९.३५
५३. अनर्घराघव पृ० ७०
५४. चण्डकौशिक - प्रस्तावना
५५. वायुपुराण ४५.१२५
५६. मत्स्यपुराण ११४.४५
५७. गरुडपुराण ४५.१०
५८. बृहत्संहिता १४.८
५९. महाभारत - सभापर्व ४८.७०
६०. महावस्तु ३.३६१.१२
६१. दी ज्योग्राफीकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इण्डिया पृ० ५३
६२. पादताड़ितक - श्लोक २४
६३. प्रियदर्शिका पृ० ७
६४. भागवतपुराण ९.२३.५
६५. बालरामायण ३.६३

६६. दी एन्शिएन्ट ज्योग्राफी आफ इन्डिया पृ० १४८
६७. महाभारत सभापर्व २७.२३
६८. रघुवंश ४.६९
६९. राजतरङ्गिणी ४.१६३-१६५
७०. भारतीय इतिहास की रूपरेखा - पृ० ३६६
७१. पाणिनिकालीन भारतवर्ष पृ० ६२
७२. पोलीटिकल हिस्ट्री आफ एन्शिएन्ट इन्डिया पृ० १८८-१८९
७३. रघुवंश ४.६९
७४. बृहत्संहिता १०.५७
७५. एन्शिएन्ट ज्याग्राफी ऑफ इण्डिया पृ० १४८-१४९
७६. पादताडितक श्लोक - २४
७७. हयाः सुपर्णेन समानवेगाः
श्रीमत्सु काम्बोजकुलेषु जाताः। कर्णभार १.१३
७८. पादताडितक पृ १९३
७९. जे० ए० बी० एस० (१८९५), भाग - १, पृ० २४९
८०. महाभारत - उद्योग पर्व २२.२५
८१. वही २२.२७
८२. कारूषाः मालवाश्चैव पारियात्रनिवासिनः।।
विष्णुपुराण २.३.१७
८३. अष्टाध्यायी ४.१.५४ सूत्रे महाभाष्यम्।।
८४. अविमारक पृ० २१
८५. प्रतिज्ञायौगन्धरायण २.८।।
८६. प्रतिज्ञायौगन्धरायण पृ० ४३
८७. पादताडितक पृ० १८७
८८. काशीपतिर्विष्णुसेनः। वीणावासवदत्तम् पृ० ६
८९. मुद्राराक्षस १.२०
९०. काव्यमीमांसा ३४.११
९१. सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः।।
विक्रमाङ्कदेवचरित १.२१

९२. काव्यमीमांसा ९३.२०-२२
९३. बालरामायण १०.७५
९४. बालरामायण ५.३५
९५. वही १०.७५
९६. कर्पूरमञ्जरी १.१२
९७. विद्धसालभञ्जिका पृ० ३५
९८. कर्पूरमञ्जरी पृ० ६५
९९. आप्टे: संस्कृत-इंग्लिश डिक्शनरी - अपेन्डिक्स पृ० ४१
१००. ऐतिहासिक नामावली पृ० १९६
१०१. कार्पस इन्स्क्रिप्शनम इन्डिकेरम, भाग - ४ पृ० २२६
१०२. अर्ली हिस्ट्री ऑफ इण्डिया पृ० १५६
१०३. गरुडपुराण ५५.१०
१०४. वायुपुराण ४५.१०९
१०५. वेणीसंहार ३.१३
१०६. पूर्वमेघ ५१-५४
१०७. पतञ्जलिकालीन भारतवर्ष पृ० १०५
१०८. युधिष्ठिरेणाऽधिष्ठितपूर्वे कुरुजाङ्गले। मध्यमव्यायोग पृ० २७-२८
१०९. ऐतिहासिक नामावली पृ० २०६
११०. महाभारत सभापर्व २७.५
१११. मुद्राराक्षस १.२०
११२. काव्यमीमांसा ९९.२७
११३. बालरामायण पृ० १५३
११४. वही ३.६१
११५. आप्टे: संस्कृत-इंग्लिश डिक्शनरी-अपेन्डिक्स पृ० ४१
११६. ऐतिहासिक नामावली पृ० २१२
११७. कुशस्थली पुरी रम्या रैवतेनोपशोभिता।
तत्रैव दुर्गसंस्कारं देवैरपि दुरासदम्।।
स्त्रियोऽपि यस्यां युध्येयुः किमु बृष्णिमहारथाः।।
महाभारत-सभापर्व १४.५१
११८. महाभारत-सभापर्व ५१

११९. भयोत्सृष्टं विभूषाणां तेन केरलयोषिताम्।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः।। रघुवंश ४.४५
१२०. बालरामायण पृ० ४४४
१२१. विद्धसालभञ्जिका १.१७
१२२. बालरामायण २.१०४
१२३. मालतीमाधव ६.१९
१२४. सुभद्राधनञ्जय पृ० ५, तपतीसंवरण पृ० ६
१२५. सुभद्राधनञ्जय पृ० १६८
१२६. अर्ली हिस्ट्री ऑफ इण्डिया पृ० ४६६
१२७. स्कन्दपुराण १.२.३९.१४३
१२८. बालरामायण २.१५
१२९. महावीरचरितम् पृ० ४८
१३०. बालरामायण २.२३
१३१. पादताडितक श्लोक - ५३
१३२. कैम्ब्रिज हिस्ट्री आफ इण्डिया - भाग १ पृ० ३०८
१३३. विष्णुधर्मोत्तरपुराण १.१२.२-४, गरुडपुराण ५५.११
१३४. पादताडितक श्लोक - १३४
१३५. दक्षिणकोशलाधिपतिपुत्री। बालरामायण पृ० ३६०
१३६. राजन्वन्तः प्रतन्वन्तु मुदमुत्तरकोसलाः। अनर्घराघव ७.१४७
१३७. उत्तरकोसलेन्द्र ............। बालरामायण पृ० ३९७
१३८. वायुपुराण ८८.१९८
१३९. कोसलोच्छित्तये गतवता रुमण्वता। - तापसवत्सराज पृ०९०
१४०. बालरामायण पृ० १४५
१४१. काव्यमीमांसा पृ० २२६
१४२. भागवतपुराण ९.२३.३९
१४३. वही ९.२४.१
१४४. महाभारत सभापर्व १४.२१
१४५. रघुवंश ५.३९-४०
१४६. मालविकाग्निमित्र ५.२
१४७. वही ५.१३

१४८. वेणीसंहार पृ० २२६

१४९. पोलीटिकल हिस्ट्री ऑफ इण्डिया पृ० ९३

१५०. पादताडितक पृ० २५४

१५१. पाणिनिकालीन भारतवर्ष पृ० ६२

१५२. अष्टाध्यायी ४.३.९३

१५३. आप्टेः संस्कृत - इंगलिश डिक्शनरी - अपेन्डिक्स पृ० ४२

१५४. काव्यमीमांसा २८.२५

१५५. अनर्घराघव पृ० ३८

१५६. ऐतिहासिक नामावली पृ० १०९

१५७. काव्यमीमांसा ३१.६।।

१५८. काव्यमीमांसा ९३.२०-२२।।

१५९. दी ज्योग्राफीकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया-पृ० ११७।।

१६०. वही पृ० २७

१६१. हर्षचरित-षष्ठोच्छ्वासः।

१६२. आंन युवानच्वाङ्ग- वो० i पृ० ३४३।।

१६३. महाभारत-वनपर्व ४५.१४-१६।।

१६४. बालरामायण ३.३८।।

१६५. रधुवंश ६.४३

१६६. अनर्घराघव पृ० ३७५।।

१६७. वही ७.११६

१६८. नदीनां मेकलसुता नृपाणां रणविग्रहः।
कवीनाञ्च सुरानन्दश्चेदिमण्डलमण्डनम्।। कर्पूरमञ्जरी

१६९. पादताडितक श्लोक-२४।।

१७०. महाभारत - सभापर्व ३१.३७।।

१७१. शिलालेख संख्या १३।।

१७२. स्कन्दपुराण २.२.२६.५।।

१७३. दी ज्योग्राफीकल डिक्शनरी आफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० २९

१७४. आप्टेः संस्कृत-इंगलिश डिक्शनरी-अपेन्डिक्स पृ० ४२।।

१७५. बालरामायण पृ० १३८-१३९।।
१७६. त्वय्यासन्ने परिणतफलश्यामजम्बूबनान्ता:
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा: दशार्णा:।। पूर्वमेघ-२५
१७७. कल्चुरल हिस्ट्री फ्राम वायुपुराण पृ० २५४-२५५।।
१७८. कालिदास की कृतियों में भौगोलिक स्थानों का प्रत्यभिज्ञान पृ० १७०
१७९. दी ज्योग्राफीकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इण्डिया पृ० १५०-१५१
१८०. आप्टे: संस्कृत-इंगलिश डिक्शनरी-अपेन्डिक्स पृ० ४१।।
१८१. सुभद्राधनञ्जय १.४।।
१८२. पादताडितक पृ० १५९।।
१८३. वामनपुराण १३.४१।।
१८४. बृहत्संहिता ५.६७।।
१८५. अस्ति दाशेरको नाम तेषां भागे तु पश्चिमे।
अस्ति राजन् मरुर्देश: सर्वसत्त्वभयङ्कर:।।
विष्णुधर्मोत्तरपुराण १.१६२.२
१८६. शृङ्गारहाट - भूमिका पृ०३०।।
१८७. काव्यमीमांसा ५१.७।।
१८८. प्राचीन भारत का भौगोलिक स्वरूप पृ० ८३-८४
१८९. हिस्टोरिकल ज्योग्राफी आफ एन्शिएन्ट इन्डिया पृ० २८०-२८१
१९०. कुन्तिभोजश्च चैद्यश्च चक्षुर्भ्यां तौ जनेश्वरौ।
दाशार्णका: प्रमद्राश्च दाशेरगणै: सह।।
महाभारत-भीष्म पर्व ५०.४७
१९१. त्रिकाण्डशेष २.१-९
१९२. दी ज्योग्राफीकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इण्डिया पृ० २६
१९३. आप्टे: संस्कृत-इंगलिश डिक्शनरी - अपेन्डिक्स पृ० २६।।
१९४. ऐतिहासिक नामावली पृ० ४३३।।
१९५. पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोलकेरलै:।
आन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान्।।
महाभारत-समापर्व ३१.७१।।

१९६. बालरामायण ५.३४।।

१९७. वही १०.६८।।

१९८. विद्धसालभाञ्जिका १.२९।।

१९९. बालरामायण ३.६३।।

२००. अनर्धराघव पृ० ३७०-३७१।।

२०१. बालरामायण ३.६३।।

२०२. काव्यमीमांसा ९३.२२-२३।।

२०३. महाभारत-वनपर्व २५४.७।।

२०४. स्कन्दपुराण १.२.३९.१३९।।

२०५. कर्पूरमञ्जरी पृ० १५९

२०६. कर्पूरमञ्जरी १.१।।

२०७. बालरामायण १०.८६।।

२०८. वही १०.८७।।

२०९. अथ प्रयतितं राज्ये यज्ञसेन त्वया सह।
राजाऽसि दक्षिणे कूले भागीरथ्याहमुत्तरे।।
महाभारत-आदिपर्व १६५.२४

२१०. अङ्गुतरनिकाय ६.१०

२११. पादताडिक श्लोक २४

२१२. पाण्ड्योऽमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः।।
ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु।।
रघुवंशे ६.६०,६४

२१३. रघुवंश ६.५९।।

२१४. वही ४.५०।।

२१५. के० एस० सांकलिया : दी एनल्स ऑफ भण्डारकर रिसर्च इन्स्टीटय़ूट - भाग २ पृ० १८१-१९१

२१६. बालभारत १.७,२.१२२।।

२१७. बालरामायण पृ०१३४।।

२१८. बालरामायण ३.३१।।

२१९. कर्पूरमञ्जरी १.१५।।
२२०. सुभद्राधनञ्जय पृ० १६८
२२१. पादताडितक श्लोक २४।।
२२२. प्रतिज्ञायौगन्धरायण २.८।।
२२३. भागवतपुराण ९.३२.५
२२४. काव्यमीमांसा १४.१२।।
२२५. वायुपुराण ४५.१२२।।
२२६. मत्स्यपुराण ११४.४४।।
२२७. गरुडपुराण ५५.१२।।
२२८. बृहत्संहिता १४.८।।
२२९. हिस्टोरिकल ज्योग्राफी आफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० २७
२३०. हिस्टोरिकल ज्योग्राफी आफ एन्शिएण्ट इण्डिया पृ० २६७।।
२३१. इण्डिया इन कालिदास पृ० ५१
२३२. बालरामायण ५.३५।।
२३३. काव्यमीमांसा ९४.९-११।।
२३४. पादताडितक पृ० १६८।।
२३५. स्कन्दपुराण १.२.३९.१५५।।
२३६. महाभारत-सभापर्व ५२.१३।।
२३७. रघुवंश ४.६७।।
२३८. वही ४.६८
२३९. कामसूत्र २.६.४३।।
२४०. ऑन युवानच्यांग भाग १ पृ० १०९।।
२४१. पाणिनिकालीन भारतवर्ष पृ० ६२।।
२४२. पादताडितक पृ० १३४।।
२४३. महाभारत-सभापर्व ३०.१०-११।।
२४४. ऐतरेय ब्राह्मण ३.८४.४१।।
२४५. अष्टाध्यायी ४.१.१११।।
२४६. शृङ्गारहाट पृ० २५१।।
२४७. ऐतिहासिक नामावली पृ० ६५३
२४८. स्वप्नवासवदत्तम् पृ० १५-१६

२४९. प्रतिज्ञायौगन्धरायण २.८

२५०. वेणीसंहार ६.१८

२५१. तापसवत्सराज पृ० १६३

२५२. बालभारत १.६७, बालरामायण ३.६३,
विद्धसालभञ्जिका पृ० ९४।।

२५३. पादताडितक श्लोक २४।।

२५४. अथर्ववेद ५.२२.१४

२५५. प्राचीन भारत का भौगोलिक स्वरूप पृ० ३८

२५६. एष पार्थ महान् भाति पशुमान् नित्यमम्बुमान्।
निरामयः सुवेशाढ्यो निवेशो मागधः शुभः।।
वैभारो विपुलः शैलो वराहो वृषभस्तथा।
तथा ऋषिगिरिस्तालशुभाचैत्यैकपञ्चषाः।।
एते पञ्चमहाशृङ्गाः पर्वताः शीतलद्रुमाः।
रक्षन्तीवाभिसंहत्य संहताङ्गाः गिरिव्रजम्।।

महाभारत - सभापर्व २१.१-३

२५७. विष्णुपुराण ४.२४.६१

२५८. रघुवंश ६.२१

२५९. प्रासादवातायनसंस्थितानां
नेत्रोत्सवं पुष्पपुराङ्गनानाम्।। रघुवंश ६.२४

२६०. आप्टेः संस्कृत-इंगलिश डिक्शनरी अपेन्डिक्स पृ० ४७

२६१. वेणीसंहार पृ० २९४

२६२. ऋग्वेद ७.१८.६

२६३. शतपथ ब्राह्मण १३.५.४.९

२६४. गोपथ ब्राह्मण १.२.९

२६५. कौषीतक्युपनिषद् १४.१

२६६. कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः।।

मनुस्मृति २.१९

२६७. आप्टेः संस्कृत-इंगलिश डिक्शनरी - अपेन्डिक्स पृ० ४७

२६८. वेणीसंहार पृ० २१८

२६९. महाभारत - वनपर्व २९३.५
२७०. पादताडितक पृ० १९३
२७१. भरतनाट्यशास्त्र १४.१४
२७२. महाभारत - सभापर्व ३०.८
२७३. मलदांश्च ताटका दुष्टराक्षसी।। रामायण बाल० २४.३२
२७४. पर्जीटर: मार्कण्डेय पुराण पृ० ३०८
२७५. ऐतिहासिक नामावली पृ० ७१५
२७६. मुद्राराक्षस १.२०
२७७. बालरामायण १०.७४-७५
२७८. कर्पूरमञ्जरी १.१६
२७९. विद्धसालभञ्जिका १.२९
२८०. स्कन्दपुरण २.१.१४.५
२८१. मार्कण्डेयपुराण ५८.५३
२८२. अर्ली हिस्ट्री ऑफ इण्डिया पृ० २९, ३१४, ३२२, ३२६
२८३. कामसूत्र - जयमङ्गला टीका २.५.९
२८४. पादताडितक श्लोक २४
२८५. जे० ए० एस० आई० भाग १२ (जून १९४९) पृ० १-४
२८६. ज्योग्राफीकल डिक्शनरी ऑफ एन्शिएण्ट एण्ड मिडीवल इन्डिया पृ० ३०
२८७. विद्धसालभञ्जिका ३.१८
२८८. उत्तररामचरितम् पृ० १८५
२८९. कार्पस इन्स्क्रिप्शनस इन्डिकेरम - भाग ४, पृ० ३१४
२९०. ऐतिहासिक नामावली पृ० ७५३
२९१. महाभारत - सभापर्व ३२.१२, भीष्मपर्व ९.१६
२९२. ज्योग्राफीकल डिक्शनरी ऑफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० २६
२९३. पादताडितक पृ० १६८
२९४. महाभारत - सभापर्व ३२.४-५
२९५. गरुडपुराण ५५.१०
२९६. रत्नावली पृ० १०

२९७. पादताड़ितक पृ० २२३

२९८. विद्धसालभञ्जिका १.२९

२९९. रामायण ३.४७.२९, ३.५५.१९,

३००. वही ४.५८.२०

३०१. डेवलमेन्ट ऑफ ज्योग्राफीकल नोलेज इन एन्शियएण्ट इण्डिया पृ० १६४-१६५

३०२. कालिदास का भारत - भाग १ पृ० १२१

३०३. रघुवंश १२.४२,१३.२२,६.६२

३०४. अनर्घराघव पृ० ३२०-३२५

३०५. कर्पूरमञ्जरी १.१७

३०६. बालरामायण पृ० ६४१

३०७. सिंहलानुत्तरेण लङ्काम्। बालरामायण पृ० १०१

३०८. सिंहलपते ! किमिदं सन्दिह्यते ! न च सन्देहदेहो वीररसनिर्वाहकः।। बालरामायण पृ० १४१

३०९. बालरामायण १०.४८

३१०. वही पृ० ६६७

३११. वही १०.५९

३१२. अनर्घराघव पृ० ३६३

३१३. बालरामायण ५.३५

३१४. काव्यमीमांसा ९३.२०-२२

३१५. दी ज्योग्राफीकल डिक्शनरी ऑफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० ११३

३१६. लाटडिण्डिमा नामैते नातिभिन्नाः पिशाचेभ्यः। पादताडितक पृ० १८४

३१७. वही श्लोक ४३

३१८. वही श्लोक ५७

३१९. वही श्लोक ५८

३२०. वही श्लोक ११३

३२१. वही पृ० १८२

३२२. बालरामायण पृ० १८२

३२३. यद्योनिः किल संस्कृतस्य सदशां जिह्वासु यन्मोदते
यत्र श्रोत्रपथावतारिणि कटुर्भाषाक्षराणां रसः।
गद्यं चूर्णपदं पदं रतिपतेस्तत्प्राकृतं यद्वच-
स्तांल्लाटांल्ललिताङ्गि पश्य नुदती दृष्टेर्निमेषव्रतम्।।
बालरामायण १०.७८

३२४. काव्यमीमांसा ६८.११

३२५. बालरामायण ३.५७

३२६. विद्धसालभञ्जिका १.२९

३२७. ज्योग्राफी आफ एन्शिएण्ट इण्डिया पृ० २३७

३२८. आप्टे: संस्कृत-इंगलिश डिक्शनरी - अपेन्डिक्स पृ० ४७

३२९. कौमुदीमहोत्सव ९.११

३३०. प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे। पूर्वमेघ - ४२

३३१. रामायण - अयोध्याकाण्ड ५२.१०१

३३२. महाभारत सभापर्व ३०.१०

३३३. बालरामायण १०.७४

३३४. अनर्घराघव पृ० ३६२

३३५. काव्यमीमांसा १०.३

३३६. ऐतिहासिक नामावली पृ० ८५४-८५५

३३७. वशीकृतः किल वीरसेनप्रमुखैः भर्तुर्विजयदण्डैः विदर्भनाथः।
मालविकाग्निमित्र पृ० १२१

३३८. तौ पृथग्वरदामूले शिष्टामुत्तरदक्षिणे।
नक्तं दिवं विभज्याऽसौ शीतोष्णकिरणाविव।। मालविकाग्निमित्र ५.१३

३३९. अनर्घराघव ७.१०२

३४०. दी ज्योग्राफीकल डिक्शनरी ऑफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० १०६

३४१. प्राचीन भारत का भौगोलिक स्वरूप पृ० ६१

३४२. क्लासिकल डिक्शनरी पृ० १७१

३४३. आप्टे: संस्कृत-इंगलिश डिक्शनरी - अपेन्डिक्स पृ० ४७

३४४. बालरामायण १०.९३

३४५. स्कन्दपुराण २.७.६.१५

३४६. विष्णुधर्मोत्तरपुराण १.९.३
३४७. वायुपुराण ४५.१२३
३४८. मत्स्यपुराण ११४.४५
३४९. बालरामायण १.२३
३५०. आप्टेः संस्कृत-इंगलिश डिक्शनरी - अपेन्डिक्स पृ० ४७
३५१. पादताडितक श्लोक १३३
३५२. ऋग्वेद ७.१०.७
३५३. अष्टाध्यायी ४.२.१०४ - सूत्रे पातञ्जलमहाभाष्यम्।
३५४. कौमुदीमहोत्सव पृ० ८
३५५. प्रतिज्ञायौगन्धरायण २.८
३५६. कौमुदीमहोत्सव पृ० १५
३५७. रामायण - किष्किन्धाकाण्ड ४३.११
३५८. महाभारत - सभापर्व ३१.२
३५९. रघुवंश ६.४५
३६०. पादताडितक पृ० १९३
३६१. ततः शूर्पारकं देशं सागरस्तस्य निर्ममे।
सहसा जामदग्न्यस्य सोऽपरान्तमहीतलम्।।
महाभारत शान्तिपर्व ४९.६६-६७
३६२. दिव्यावदान २१.३-४
३६३. बुद्धचरित २१.२२
३६४. वायुपुराण
३६५. वेणीसंहार पृ० २२२,
३६६. महाभारत शल्यपर्व ५३.१-२
३६७. आप्टेः संस्कृत-इंगलिश डिक्शनरी - अपेन्डिक्स पृ० १६२९
३६८. भागवतपुराण ५.१०.१
३६९. सैंधवानां सहस्राणि हयानां पञ्चविंशतिम्।
अददात् सैन्धवो राजा हेममाल्यैरलङ्कृतान्।।
सौवीरो हस्तिभिर्युक्तान् रथांश्च त्रिशतान् वरान्।
जातरूपपरिष्कारान् मणिरत्नविभूषितान्।।
महाभारत - सभापर्व अध्याय - ५१

३७०. सौवीराः सैन्धवाः हूणाः शाल्वाः कोशलवासिनः। विष्णुपुराण

३७१. आनर्तसुराष्ट्रश्वभ्रभरुकच्छसिन्धुसौवीरकुकुरापरान्त - निषादादीनां समग्राणाम्। रुद्रदाम्नः शिलालेखः

३७२. वेणीसंहार ४.२, पञ्चरात्र १.४२

३७३. मुद्राराक्षस १.२०

३७४. बालरामायण १.१४

३७५. रघुवंश ५.७३

३७६. अविमारक पृ० २१

३७७. वही पृ० १६१

३७८. हिस्टोरिकल ज्योग्राफी ऑफ इण्डिया पृ० २९६

३७९. एन्शिएण्ट ज्योग्राफी ऑफ इण्डिया पृ० ५६९

३८०. सौवीरराजस्य पुरा मैत्रेयोऽभूत् पुरोहितः।
तेन चायतनं विष्णोः कारितं देविकातटे।।
अग्निपुराण २००.६

३८१. बालरामायण ३.६३

३८२. काव्यमीमांसा ८८.१९-२४

३८३. पद्मपुराण १.९२.२

३८४. भागवतपुराण १.१०.१४, १.१५.३९

३८५. महाभारत - सभापर्व ३१.६२

३८६. पादताडितक पृ० १५२-१६०

३८७. स्ववीर्यार्जितानामनुरक्तप्रकृतीनाम् .........आनर्त-सुराष्ट्रश्वभ्रमृगुकच्छसिन्धुसौवीरकुकुरापरान्त-निषृादादीनाम्। गिरिनारशिलालेखात्।।

# पञ्चमोऽध्याय:
## जातीयराज्यानि विदेशीया: जनपदाश्च

### (क) जातीय राज्यानि

१. आभीरा: 
२. कङ्का:
३. कारस्करा:
४. किन्नरा:
५. किराता:
६. खसा:
७. गन्धर्वा:
८. तुषारा:
९. दाशेरा:
१०. निषादा:
११. यक्षा:
१२. विद्याधरा:
१३. शबरा:
१४. पुलिन्दा:

### (ख) विदेशीया: जनपदा:

१. चीनदेश:
२. पारसीकदेश:
३. यवनदेश:
४. शकदेश:

# पञ्चमोऽध्यायः

## भारतीयजातिराज्यानि विदेशीयाश्च जनपदाः

संस्कृतनाटकेषु केषाञ्चित् तथाविधानां राज्यानामुल्लेखाः वर्तन्ते यानि जातिविशेषैः सम्बद्धानि प्रतिभान्ति। प्रायशस्तत्र वन्यजातीनां राज्यानां वर्णनानि समुपलभ्यन्ते, परं काश्चनाऽर्धदिवश्रेणिगतानामपि जातीनामत्र परिगणनं विद्यते। यथा किन्नरविद्याधरादयः। राज्यानामेतेषां जातीनाञ्च प्रदर्शनमत्र रुचिकरमस्ति।

अत्र प्रकरणे द्विविधानि राज्यान्यमवलोक्यते - भारतीयराज्यानि विदेशीयाश्च जनपदाः तेषां क्रमशश्चित्रणं विधीयते ।

## (क) भारतीयजातिराज्यानि

भारतीयजातिराज्यानां चतुर्दशसंख्यकानां संकेताः संस्कृतनाटकेषु प्राप्यन्ते।

### (१) आभीराः -

आभीरराज्यं पश्चिमभारतवर्तिषु जनपदेषु वर्णितमुपलभ्यते। आभीरजातिनिवाससद्भावादिदं राज्यमाभीरनाम्ना प्रोक्तम्। प्राचीन-काले राज्यमिदं गुप्तसाम्राज्यान्तर्गतमपि प्रतीयते। आभीरराज्यराजपुत्रो मयूरदत्त उज्जयिन्यां न्यवसत्[१]।

महाभारतवर्णनानि राज्यमाभीरं पश्चिमराजस्थानवर्ति प्रति-पादयन्ति[२]। गुर्जरप्रदेशस्य दक्षिणपश्चिमभूभाग एवाऽऽभीराभिधानेन प्रोक्तः[३]। पेरीप्लसवर्णनैराभीराज्यं सुराष्ट्रेन सह घनिष्ठभावमावहत् प्रतीयते।

महाभारतप्रोक्तवर्णनैः प्रतीयते यदाभीरजातिजनाः सोमनाथं निकषा सरस्वतीसरित्तीरवर्तिषु भूभागेषु निवसन्ति स्म[४]। समुद्रगुप्तस्य प्रयागप्रशस्तिराभीरजातिं दक्षिणपश्चिमभारतस्य प्रमुखशक्तिरूपेण परिचाययाति[५]।

## (२) कङ्काः -

प्राचीनभारतीयसाहित्ये कङ्का आक्रमणकारिणः प्रोक्ताः। जातिरियं मूलरूपेण स्रुघ्नजनपद (वर्तमानकालीन सोगडियाना) निवासिनी प्रोक्ता। अस्मिन् जनपदे वर्तमानाफगानिस्तानदेशस्योत्तरीयाः भूभागास्तत्संलग्नाश्च रूसदेशस्य दक्षिणवर्तिनो भूभागाः सम्मिलिताः लक्ष्यन्ते। भागवतपुराणे कङ्का आर्येतरजातिजनेषु परिगणिताः[६]।

पादताडितकभाणे वर्णनमुपलभ्यते -

सार्वभौमनगरे (उज्जयिन्याम्) कङ्कजातीयः काङ्कायनाभिधानश्चिकित्सको हरिश्चन्द्रनाम्नाऽपि लोके प्रसिद्धो न्यवसत्[७]।

## (३) कारस्कराः -

कारस्कराणामुल्लेखो महाभारतकारेण विन्ध्यभूमिनिवासिनीषु दक्षिणभारतवर्तिनीष्वार्येतरजातिषु कृतः[८]। कारस्करा ह्येते आर्यजातिबहिष्कृताः जनाः प्रोक्ताः। बौधायनधर्मसूत्रस्य वचनानि वर्तन्ते -

ब्राह्मणाः कारस्करनिवासगृहाणि न गच्छेयुः। यदि कदाचित् कथञ्चित् तैः सह सम्पर्को भवत्येव, शुद्धिसंस्कारः करणीयः[९]।

नन्दलाल डे महोदयस्य मन्तव्यं वर्तते -

मैसूरराज्यस्य (कर्णाटजनपदस्य) दक्षिणकनाराप्रदेश एव प्राचीनकाले कारस्करराज्यमवर्तत। वर्तमानसमये स्थानमिदं भूडबद्रीतो दशमीलविप्रकृष्टान्तरालेन जैनमतावलम्बिनां प्रसिद्धं तीर्थं विद्यते।

शकुन्तलारावशास्त्रिमहोदयानां सम्मतिरस्ति यत् कारस्कराः मद्रजातीयाः पञ्चनदप्रदेशाद् दक्षिणभारतं समायाताः[१०]।

कौमुदीमहोत्सवनाटके कारस्कराणामुल्लेखो विद्यते[११]। मगधराजस्य

सुन्दरवर्मणो दत्तकपुत्रो माधवसेनः कारस्करजातीयोऽवर्तत ।

**(४) किन्नराः -**

किन्नराणां परिगणनं प्राचीनैर्मनीषिभिरर्धदिवेषु विहितम् । गानविद्याप्रवीणा ह्येते ज्ञायन्ते स्म । साहित्ये कविभिः कण्ठमाधुर्यं किन्नरैरुपमितम्[१२] । भवभूतिर्गन्धमादनगिरौ किन्नरनिवासमवर्णयत् । लङ्कातोऽयोध्यामागच्छतो रामस्य स्वागताय स्तुतिगानाय चाऽलकेश्वरेण किन्नरयुगलमेकमामन्त्रितम्[१३] ।

वर्णनैरुपयुक्तैरेभिः स्पष्टमेव यत् किन्नरजातिर्हिमालयस्योत्तर-पश्चिमक्षेत्रवर्तिनी बभूव । सङ्गीतविद्यायां किन्नरा अतिनिपुणाः भवन्ति स्म । अमरकोषे कुबेरः किन्नरेश्वरः प्रोक्तः[१४] । किम्पुरुषपर्वते (हिमकूटे) गन्धमादने च तेषां निवासोऽभवत् ।

वर्तमानसमये हिमाचलप्रदेशे हिमालयस्योत्तरीयो भागः किन्नौरनाम्ना प्रसिद्धः । निवासिनश्च तत्रत्याः किन्नरा अभिधीयन्ते । तेषां भाषा किन्नरी विद्यते ।

राहुलसांकृत्यायनमहोदयोऽलिखत् -

त्रिविष्टपसीमसु शतद्रुसरिदुत्तरवर्तिनीषु पर्वतीयद्रोणीषु सप्ततिमीलपर्यन्तं दैर्घ्यमायतञ्च प्रायशः सहस्रत्रयं वर्गमीलविस्तृता पर्वतीयभूमिः किन्नरप्रदेशो विद्यते । पूर्वकालीनं रामपुरबुशहरराज्य-मेतदन्तर्गतमविद्यत[१५] । अथ च प्रायशः सर्वे समीक्षकाः मनीषिणो वर्तमान-किन्नौरप्रदेशमेव किन्नरराज्यमामनन्ति[१६] ।

परन्तु प्राचीनभारतीयसाहित्ये किन्नराः विशेषरूपेण हेमकूटपर्वतेन गन्धमादनगिरिणा वा सम्बद्धाः वर्णिताः । पर्वतौ चैतौ वर्तमानगढ़वाल-प्रदेशे विद्येते । अतः प्रतिभातीदं यत् प्राचीनकाले किन्नरक्षेत्रं वर्तमानोत्तरीयगढ़वालहिमाचलप्रदेशयोर्विस्तृतमासीत् ।

**(५) किराताः -**

प्राचीनसाहित्ये किरातानामुल्लेखाः बहुधा समुपलभ्यन्ते । वर्णनैरेभिः

प्रतीयते यत् किराताः वन्यजातिजना अवर्तन्त। निवासश्चैषां हिमालयवर्तिभूभागेषु विन्ध्यवनेषु चाऽप्यवर्तत। राजशेखरेण प्रोक्तम् -

किराताः विन्ध्यवनेषु निवसन्ति। ते वनेष्वाखेटेन जीविकां निर्वहन्ति[१७]।

किरातानां वीरभावो प्राचीनसाहित्ये प्रसिद्धः। सेनासु तेषां नियुक्तिः प्रवेशश्च स्पृहणीयोऽवर्तत। मुद्राराक्षसनाटके विशाखदत्तेन वर्णितम् - मलयकेतुनेतृत्वे किरातैः कुसुमपुरं परिवेष्टितम्[१८]।

पादताडितकभाणे किरातानां सार्वमौमनगरे (उज्जयिन्यां) निवासस्य वर्णनमुपलभ्यते[१९]। हर्षेणाऽपि वर्णितम् -

राज्ञामन्तःपुरेषु किराताः सेवकरूपेण नियुज्यन्ते[२०]।

महाभारते किरातानामार्येतरभावोऽभिव्यज्यते[२१]। सम्भवतस्ते हिमालयस्य दक्षिणवर्त्युपत्यकासु न्यवसन्। इन्द्रकीलपर्वते तपस्यताऽर्जुनेन पार्वतीपरमेश्वरौ किरातरूपधारिणौ समवलोकितौ।

बहुभिः समीक्षकैः किरातानां मूलस्थानं मंगोलीयं प्रतिपादितम्। आकामरूपप्रदेशात्ते काश्मीरपर्यन्तं हिमालयोपत्यकासु प्रासरन्[२२]। आप्टेमहोदयेन लिखितम् - भारतस्य प्राच्यक्षेत्राणि सिलहटासमवर्तीनि किरातानां मुख्यानि निवासस्थानान्यासन्[२३]। महाभारते[२४] पुराणेष्वपि[२५] तथा वर्णनानि समुपलभ्यन्ते। अथर्ववेदे किरातानामुल्लेखोऽस्ति। ते हिमालयस्य पूर्ववर्तिक्षेत्रोपत्यकानिवासिनो मताः[२६]। रघुवंशेऽपि कालिदासेन ब्रह्मनदघाटीषु किरातानां निवासः प्रोक्तः[२७]।

## (६) खसाः -

प्राचीनसाहित्ये खसानामुल्लेखाः प्रायशः समुपलभ्यन्ते। महाभारतयुद्धे खससैनिका अपि युद्धाय समुपतस्थुः[२८]। मार्कण्डेयपुराणे[२९] भागवतपुराणे[३०] राजतरङ्गिण्यां[३१] च खसानां खसजातिनिवासस्थानानाञ्च वर्णनानि सन्ति। विशाखादत्तेन वर्णितम् -

मलयकेतोः सैन्यसमुदये खससैनिका अप्यासन्[३२]।

खसजातिजनानां मूलनिवासस्थानानि हिमालयस्य मध्यक्षेत्राण्यासन्निति सामान्यतो विदुषां मतम्। अस्मिन् सम्बन्धे कूर्माञ्चलप्रदेशस्य नेपालजनपदस्य च मध्यवर्तिनः क्षेत्रस्य गणना विधीयते। आर० एस० महोदयः कूर्माञ्चलपर्वतीयक्षेत्रमेव खसजातिजनानां मूलस्थानं प्रत्यापादयत्। डी० सी० सरकार महोदयः कश्मीरजनपदस्य पर्वतीयभूभागमेव खसजातिमूलस्थानं लिलेख। वर्तमानसमयेऽत्रत्याः निवासिनः खबकनाम्ना परिचीयन्ते[33]। पर्वतीयकश्मीरजनपदादेव प्रव्रज्य खसाः पूर्ववर्तिषु पर्वतीयक्षेत्रेषु स्वनिवासानकल्पयन्। कल्पनैषा विद्वद्भिः स्वीकृता।

मध्यहिमालयपर्वतीयक्षेत्रनिवासिनीषूच्चजातिषु खसजातित्त्वसम्भावना विद्वद्भिः प्रतिपादिता। खसाश्च सामान्यतः क्षत्रियवर्णबहुलाः भवन्ति स्म। परं ब्राह्मणवर्णभावोऽपि केषाञ्चित् खसानामविद्यत।

इतिहासस्य मध्यकाले मोहम्मदीयानामाक्रमणकारिणामत्याचारैः संत्रस्ताः केचन राजवंशाः मध्यहिमालयक्षेत्राण्यागत्य राज्यानि संस्थापयामासुः। तैः सार्द्धं समागताः सैनिकाः खसाभिधानेन प्रसिद्धाः बभूवुः।

## (७) गन्धर्वाः -

प्राचीनसाहित्ये गन्धर्वाणां विशेषेणोल्लेखो विद्यते। हिमालयवर्तिषु क्षेत्रेषु तेषामुपस्थितिः प्रायशो निर्दिष्टा विद्यते। गन्धर्वराजश्चित्ररथो देवराजस्येन्द्रस्य पारिषदेषु प्रमुखोऽवर्तत। कादम्बरीकथायां कादम्बरीमहाश्वेते प्रमुखनारीपात्रे गन्धर्वजातीये राजसुते अवर्तेताम्।

गन्धर्वजातिः सङ्गीतविद्यानिपुणा प्रसिद्धा। अतः सङ्गीतविद्याविचक्षणाः जनाः लोके गन्धर्वपदेनाऽभिषिक्ता विधीयन्ते।

गन्धर्वाः विशिष्टशक्तिसम्पन्ना अभिमताः। पुराणादिषु शास्त्रेषु ते ह्यर्धदेवजातिषु परिगणिताः। डा० रांगेय राघवमहोदयेन लिखितम् -

गन्धर्वाः सोमरसपायिनोऽभवन् । सोमरसविक्रेतारोऽपि ते बभूवुः । आर्यास्तेषां सोमरसक्रेतारोऽभवन्[३४] ।

गन्धर्वप्रदेशाः समीक्षकैर्हिमालये गन्धमादनसुमेरुपर्वतीयक्षेत्रेषु कैलासभूधरस्य च दक्षिणपश्चिमदिग्वर्तिक्षेत्रेषु च सम्मताः । बदरीक्षेत्रात् कैलासगिरिपर्यन्तं क्षेत्राणि गन्धर्वप्रदेश इति वक्तुं शक्यते ।

पुराणेषु गन्धर्वजातिरिन्द्राधीना प्रोक्ता। इन्द्रो हि चित्ररथं गन्धर्वाणामधिपतिञ्चकार। तदनन्तरञ्च तं दिव्यशक्तिसम्पन्नमकरोत्[३५] । विशिष्टावसरेषु वीरस्तुतिगानं तेषां कर्तव्यं तेन निर्दिष्टम्। दिव्यगन्धर्वाः सीतायाः रामस्य च स्तुतिं जगुरिति कविभिर्वर्णितम्[३६] ।

रामायणस्य कैश्चिद् वर्णनैः प्रतीयते, यद् गन्धर्वजनपदोऽयं सिन्धुसरितो द्वयोः पार्श्वयोः समवस्थितो बभूव। कैकयजनपदाधिपस्य युधाजितोऽनुरोधं संरक्ष्य भरतो गन्धर्वराज्यं विजित्य स्वराज्यं संस्थापयामास। तत्र सिन्धुनदपूर्वतटप्रदेशेषु तक्षशिलायामसौ स्वसुतं तक्षं, पश्चिमतटवर्तिप्रदेशेषु च पुष्कलावत्यां (वर्तमान चारसड्डानगरम्) पुष्कलं राजानञ्चकार[३७] । कालिदासेनाऽपि गन्धर्वदेशः सिन्धुनदेन सम्बद्धो वर्णितः[३८] ।

वर्णनैरेभिरनुमीयते, यद् गन्धर्वजनपदो वर्तमानपाकिस्तानदेशस्य रावलपिण्डी–सम्भागस्य तक्षशिलासम्भागादारभ्य सिन्धुनदमुत्तीर्य पेशावरसम्भागस्य चारसड्डापर्यन्तं विस्तृतो बभूव।

गन्धर्वप्रदेशस्थितिर्यद्यपि गान्धारजनपदान्तर्गता प्रोक्ता, तथापि सङ्गीतविद्याविचक्षणाऽर्धदेवपदाभिषिक्ता गन्धर्वजातिर्हिमालयक्षेत्रवासिन्येव प्राचीनसाहित्ये वर्णिता संलक्ष्यते।

## (८) तुषाराः –

श्यामिलकः सार्वमौमनगरे(उज्जयिन्यां) तुषारजातिजनानामुपस्थितिं प्रादर्शयत्[३९] । शकानामनु भारतवर्षं तुषारा आचक्रमुः।

कुषाणसम्राट् कनिष्को भारतीयेतिहासे महतीं प्रतिष्ठां बभाज। ख्रिष्टस्य प्रथमशताब्द्यामयं कनिष्को राज्याधिकारं सम्प्राप्य पुष्पपुरं (पिशावरं) राजधानीञ्चकार। कुषाणजातिजनानामेवैका शाखा तुषाराभिधाना बभूव।

महाभारतेऽपि तुषाराणामुल्लेखः समुपलभ्यते। तेषां मूलपुरुषो ऋषिकोऽवर्तत। अर्जुनो दिग्विजययात्रायाम् ऋषिकान् विजिगाय[४०]। विष्णुधर्मोत्तरपुराणे[४१] गरुडपुराणे[४२] च तुषाराणामवस्थितिः पश्चिमोत्तरभारते निर्दिष्टा। महाभारतकारेण तुषारजनपदीया अश्वाः प्रशस्ताः प्रोक्ताः[४३]।

तुषारजनपदो वर्तमानसमये तुखारिस्तान (चीनी तुर्किस्तान, सिक्यांग) प्रदेशेन परिचीयते। तदेव स्थानं तुषाराणां मूलस्थानमिति विदुषां सम्मतिः। बैक्ट्रियापर्यन्तमस्य देशस्य सीमा संलक्ष्यते। आक्सस (वंक्षु) सरिदस्य प्रदेशस्य मध्यवर्तिनी प्रवहति। तुषारजातिजनाः कश्मीरजनपदस्योत्तरदिग्विभागे मध्यैशियाक्षेत्रेऽपि निवसन्ति स्म। इत्यपि संकेताः समुपलभ्यन्ते[४४]।

## (९) दाशेराः –

दाशेरजातिजनानां सङ्केता अपि प्राचीनसाहित्ये समुपलभ्यन्ते। दाशेराः प्रायशो मत्स्यजीविनोऽवर्तन्त। बिज्जिकया वर्णितम् –

पुलिन्दशबरदाशेराणां साहाय्येन कल्याणवर्मा स्वराज्यं पुनरप्यलभत[४५]।

कौमुदी महोत्सवनाटकवर्णनैः प्रतिभाति, यद् दाशेरजनपदो गणराज्यमासीत् स्थितिश्च तस्य वर्तमानमध्यप्रदेशस्य विन्ध्यक्षेत्रेऽवर्तत। पादताडितकभाणे दाशेरकजनपदस्य सङ्केताः विद्यन्ते। परमेते दाशेरकाः बिज्जिकावर्णितदाशेरकेभ्यो भिन्ना एव प्रतिभान्ति। दाशेरकाः सभ्याः शक्तिशालिन आर्यजातीया वर्तन्ते, परं बिज्जिकाप्रोक्तानां दाशेरकाणां गणना वन्यजातिषु विधीयते।

## (१०) निषादाः -

प्राचीनभारतीयेतिहासे साहित्ये च निषादाः प्रमुखं स्थानं भजन्ते। मुख्यरूपेण नौकाजीविनस्ते यात्रिणां सरित्सन्तरणसहायका अवर्तन्त[४६]। वनानि गच्छन् रामो निषादपतिगुहसाहाय्येन भागीरथीमुदरत्[४७]।

आखेटमपि निषादाः जीविकासाधनमङ्गीचक्रुः। निषादेनैकेन विद्धः क्रौञ्चपतत्री बाल्मीकिं रामायणरचनायै प्रैरयत्। रुधिराप्लुतं पतत्रिणं प्रेक्ष्य बाल्मीकिहृदये करुणभावो जजागार[४८]।

रामायणवर्णनानि प्रतिपादयन्ति यत्तस्मिन् युगे निषादानां सर्वतन्त्रस्वतन्त्रं स्वराज्यमवर्तत। राजधानी च तेषामासीत् - शृङ्गवेरपुरम्। राज्यञ्चेदं कोशलजनपदस्य दक्षिणपश्चिमवर्तिनि दिग्विभागे गङ्गातीरे समवस्थितमविद्यत। कोशलजनपदान्निष्क्रम्य रामो निषादराज्यमुल्लंघ्य दक्षिणवर्तीनि वनानि जगाम।

परं महाभारते निषादराज्यस्थितिः किञ्चिद् भिन्नैव लक्ष्यते। सम्भवतो राज्यमिदं वर्तमानराजस्थानप्रदेशस्योत्तरस्यां हरियाणाप्रदेशस्य च दक्षिणायां समवर्तत।

आर्यपरम्पराबाह्याः एते निषादाः सहदेवेन विजिताः[४९]। सरस्वतीसरिदत्र निषादजनपदे प्रवहति स्म। परं निषादसम्पर्कदोषनिवृत्तये सा भूम्यन्तः प्रविष्टा[५०]। रुद्रदाम्नो गिरिनाराभिलेखे (१२० ई०) पश्चिमक्षेत्रे राज्यविस्तारवर्णनेषु निषादानामपि गणना विद्यते[५१]।

गुप्तयुगे निषादानां स्वतन्त्राणि राज्यानि नगराणि च ध्रुवमवर्तन्त। पादताडितकभाणे कविना निषादनगरमुल्लिखितम्[५२]। परं नगरस्याऽस्य भौगोलिकस्थितिर्न निश्चयेन याथार्थ्येन निश्चेतुं शक्या। प्राचीनसाहित्ये ह्यार्येतराः सामान्यरूपेण निषादाः प्रोक्ता इति मैक्डानलमहोदयस्य सम्मतिः[५३]।

वर्तमानसमये कोलमुण्डभीलादि जातिजनास्तेषामेव निषादानां सन्ततयो वर्तन्ते। वासुदेवशरणाग्रवालेन लिखितम् -

प्राचीनकाले निषादानामार्यैः सह प्राचुर्येण घनिष्ठभावेन च सम्बन्धा अवर्तन्त। निषादानां वसतयश्चाऽऽर्यवसतिपर्यन्तं विस्तृता आसन्[५४]।

## (११) यक्षाः -

प्राचीनसाहित्ये यक्षाणां वर्णनान्यपि प्राचुर्येण समुपलभ्यन्ते। कैलासगिर्युपत्यकासु मध्यहिमालयेषु तेषां वसतयोऽवर्तन्त। अलकापुरी तेषां राजधान्यासीत्।

गुह्यकापराभिधानेनाऽपि प्रसिद्धा यक्षजातिरतिशक्तिसम्पन्ना धनसमृद्धिशालिनी ज्ञानविज्ञानसमुन्नता चाऽऽसीत्। अतो यक्षाणां गणनाऽर्धदेवेषु प्रथिता सञ्जाता। कुबेरस्तेषामधिपतिरभवत्। यक्षाणां स्थानवर्णनमलकानगरीप्रसङ्गे विस्तरेण प्रोक्तम्।

## (१२) विद्याधराः -

संस्कृतकवयो विद्याधरानपि प्राचुर्येण विस्तरेण चाऽवर्णयन्। साहित्ये ते दिव्यशक्तिसम्पन्नाः प्रोक्ताः। निवासस्थानानि तेषामवर्तन्त-हिमवत उत्तुङ्गप्रदेशाः। कालिदासेन तेषां प्रणयगाथानामपि कीर्तनं विहितम्। ते स्वप्रियाणां चरितानि गैरिकधातुशकलैर्भूर्जपत्रेषु प्रणयपत्र-रूपेण लिखन्ति[५५]। विद्याधराणामधिष्ठात्री देवता वर्तते - विद्या[५६]।

विद्याधरजातिर्विशेषरूपेण यन्त्रविद्यापण्डिता विविधविज्ञानानाञ्च स्वामिनी प्रसिद्धाऽवर्तत। एवञ्चेमे विद्याधराः ज्ञानविज्ञानानामधिष्ठातारो लोकसमुन्नताः गण्यन्ते। भवभूतिना उत्तररामचरिते नाटके वर्णितम्-

विद्याधरयुगलमेकं विमानमारुह्य भगवतो रामस्याऽश्वमेधयज्ञ-प्रसङ्गे चन्द्रकेतुलवयोः पारस्परिकयुद्धं तुलनात्मकं समीक्षाञ्चकार[५७]।

नागानन्दनाटकस्य नायिकानायकौ कविना विद्याधरजातीयौ निर्दिष्टौ।

प्राचीनसाहित्ये विद्याधराणां निवासस्थानानि कविभिर्हिमालयस्य पर्वतीयभूभागाः प्रदर्शिताः। अत्र भागीरथी मन्दाकिनी चेति सरिद्द्वयं

प्रभवति। अत्रैव हिमाच्छादिताः गन्धमादनगिरिशृङ्खलाः शोभन्ते। अतः केचन विद्वांसो गढ़वालमण्डलस्योत्तरवर्तिपर्वतीयक्षेत्रमेव विद्याधराणां निवासजनपदं प्रवदन्ति। यतोऽत्रैव भागीरथीमन्दाकिन्योः सरितोरुद्गमो विद्यते। समीक्षकाणां मन्तव्यमिदं समुचितमेव प्रतीयते, यद् गढ़वालमण्डलस्योत्तरवर्तिनः पर्वतीयप्रदेशा एव विद्याधराणां निवासभूमयः।

### (१३) शबराः पुलिन्दाश्च –

संस्कृतसाहित्ये शबराणां पुलिन्दानाञ्च वर्णनानि बहुधा समुपलभ्यन्ते। वन्यजातिजनाः ह्येते विन्ध्यगिरिक्षेत्रेषु न्यवसन्[५८]। वर्तमानकालीनैः समीक्षकैर्मनीषिभिरेतेषां शबराणां पुलिन्दानाञ्च वसतयो विन्ध्यगिरिक्षेत्रवर्तिन्यो निर्णीताः[५९]।

महाभारतकारेण प्रोक्तम् – शबराः पुलिन्दाश्च ह्यार्येतरजातिजनाः वर्तन्ते। एतेषां ग्रामाः स्वतन्त्रप्रदेशा एव गण्यन्ते स्म। यद्यप्यत्रत्येषु क्षेत्रेष्वार्यसम्राजामेव सार्वभौमाधिकारो बभूव, तथाप्याभ्यन्तरिकप्रशासने तेषां स्वातन्त्र्यमक्षुण्णमभवत्।

आर्याणां राजनीतिकव्यहारेषु शबराणां पुलिन्दानाञ्च यत्र तत्र यदा कदा चञ्चुपातोऽवलोक्यते स्म। बिज्जिकया वर्णितम् –

मगधजनपदस्य दक्षिणपश्चिमसीमान्तेषु शबराणां पुलिन्दानाञ्च निवासाः वर्तन्ते। चन्द्रसेनो मगधजनपदमधिचक्रे। मगधेश्वरस्य कल्याणवर्मणः सचिवो मन्त्रगुप्तो वन्यजातीयानेतान् शबरान् पुलिन्दांश्च स्वराजनीतिप्रयोगेषु संगृह्य पुनः मगधानधिकृत्य कल्याणवर्माणं सिंहासनारूढञ्चकार[६०]।

शक्तिभद्रो विन्ध्यगिरिक्षेत्रनिवासिनः शबरान् पुलिन्दांश्चोल्लिलेख। वत्सावन्तिजनपदमध्यवर्तिवनक्षेत्राणि तेषां निवासस्थलान्यवर्तन्त। अनेके शबरपुलिन्दयुवका आर्यनृपतिसैन्येषु सम्मिलिताः नियुक्ताः भवन्ति स्म। उज्जयिन्याः सेनासु बहवः शबरपुलिन्दयुवकासैनिका आसन्। उज्जयिनीं

विजेतुं वत्सराजस्योदयनस्य सेनापती रुमण्वान् शबरैः सह योद्धुं बाधितो बभूव[६१]। उदयनस्य निग्रहणायोज्जयिनीनरेशेन चण्डप्रद्योतेन शबरसैनिका अपि प्रेषिताः। परन्त्वेतेऽनेके सेनिकाः समराङ्गणे निहताः[६२]।

शबराणां पुलिन्दानाञ्च विन्ध्यगिरिक्षेत्रनिवासमन्येऽपि कवयोऽवर्णयन्। कालिदासेन लिखितम् –

कुशावतीं परित्यज्य रामसुतः कुशः पुनरप्ययोध्यां राजधानीरूपां प्रविष्टः। तस्मिन् प्रसङ्गे विन्ध्यनिवासिनः पुलिन्दा उपहारैः सह समाययुः[६३]। पुराणेषु[६४] पुस्तकेष्वन्येष्वपि[६५] मनीषिभिस्तथ्यमे-तदुद्घाटितम्।

हिमवत्क्षेत्रेष्वपि पुलिन्दानां वर्णनानि समुपलभ्यन्ते। पर्जीटरमहोदयेन पुलिन्दाना द्वे शाखे प्रोक्ते – हिमालयशाखा दाक्षिणात्या च शाखा[६६]। हिमालयशाखा हिमालयक्षेत्रे दाक्षिणात्या च शाखा विन्ध्यगिरिक्षेत्रे न्यवसत्। महाभारते पाण्डवानां गन्धमादनयात्राप्रसङ्गे लेखकेन पुलिन्ददेशो वर्णितः। सम्भवतो देशोऽयं कैलास-तिब्बतदेशवर्तिनी पर्वतीया भूमिर्वर्तते। अतो विदुषां कल्पना विद्यते –

पुलिन्दजातिर्मूलरूपेण हिमालयक्षेत्रनिवासिनी ह्यासीत्। अस्याः शाखैका दक्षिणदिशं प्राव्रजत्।

कैश्चिद् विद्वद्भिः पुलिन्दकुलिन्दजनपदयोरेकत्वं समानार्थकात्वञ्च प्रतिपादितम्। कुलिन्दानां मुद्राः हमीरपुरलुधियानासहारनपुरादिस्थानेषु पुरातत्त्वविद्भिरुपलब्धाः। अतस्तेषां राज्यं शिवालकपर्वतोपत्यकासु सन्निकटवर्तिनीषु च पर्वतीयभूमिष्वासीदिति विद्वद्भिरनुमीयते।

गङ्गामन्दाकिन्यलकनन्दाद्रोणीषु विस्तृतस्य कुलिन्दजनपद-स्योल्लेखो महाभारते विद्यते। तीर्थयात्रायै हिमालयं समागतानां पाण्डवानां स्वागतं कुलिन्दराजः सुबाहुश्चकारेति महाभारतीया कथा प्रसिद्धा। वर्तमानगढ़वालमण्डलस्य श्रीनगरक्षेत्रमेव कुलिन्दराज्यमासीदित्यनुमानं

समुचितमवगन्तव्यम्।

### (१४) हूणाः –

प्राचीनसाहित्ये कविभिर्हूणजातीयजना अपि वर्णिताः। संस्कृत-नाटकेषु तेषां वर्णनानि समुपलभ्यन्ते। महाभारतकारेण हूणदेशः पारसीकानां निकटवर्ती प्रोक्तः[६७]। शक्तिसङ्गमतन्त्रे हूणदेशः कश्मीरजनपदस्य दक्षिणवर्ती मरुदेशस्य चोत्तरवर्ती निर्दिष्टः[६८]।

हर्षचरितवर्णनान्यपि व्यञ्जयन्ति यद् हूणजनपदः पश्चिमोत्तर-भारतान्तर्गत एवाऽवर्तत। कालिदासेन वर्णितम् –

हूणजातीयजनानां शासनाधिकारक्षेत्राणि वंक्षुसरितस्तत्सहायक-नदीनाञ्च तटवर्तिप्रदेशान्तर्गतानि बभूवुः। क्षेत्राण्येतानि बाहीकजनपदो-त्तरवर्तीन्यासन्। कुङ्कुमपुष्पाणि चाऽप्यत्र प्राचुर्येण प्ररोहन्ति स्म। रघुणा हूणा आक्रान्ताः। तस्मिन्नवसरे तस्य चमूनां सैन्धवानां केसराणि केसरपुष्पैः रञ्जितानि[६९]।

प्राचीनकाले हूणाः प्रबलवेगेन क्रूरभावेन च भारतदेश-माक्रान्तमकुर्वन्। शकानामनु हूणा एव प्रबलाक्रान्तारो बभूवुः।

उपर्युक्तवर्णनैरनुमीयते, यत् पूर्वं मध्यैशियानिवासिनो हूणाः कालक्रमेण भारतवर्षस्य पश्चिमोत्तरभूभागानाचक्रमुः। प्रदेशमेन-मधिकृत्य साम्राज्यञ्च संस्थाप्य तेऽत्रैव निवासञ्चक्रिरे। तदनन्तरं कालक्रमेण ते भारतीयधर्मं संस्कृतिञ्चाऽङ्गीकृत्य भारतीयचातुर्वर्ण्य-व्यवस्थायां समाविष्टाः सञ्जाताः। अनेकेषां विदुषां समीक्षकाणां सम्मतिरत्र वर्तते – राजपूतजातीनां षट्त्रिंशद्वंशेषु तेषां हूणानां विलयः सञ्जातः[७०]। भारतीयेतिहासे हूणानां प्रथमाक्रमणस्योल्लेखः समुद्रगुप्तकालीनो लभ्यते[७१]।

## (ख) विदेशीयाः जनपदाः

संस्कृतरूपकेषु वैदेशिकजनपदानां विस्तृतवर्णनस्याऽभावेऽपि कुत्रचित् तेषामपि सङ्केताः ध्रुवमुपलभ्यन्ते। निम्नजनपदानां वर्णनान्यत्र सन्ति –

## (१) चीनदेशः -

प्राचीनभारतीये साहित्ये चीनदेशस्य वर्णनानि प्राचुर्येण सन्ति। रामायणस्य किष्किन्धाकाण्डे[७२] महाभारतस्य च भीष्मपर्वणि नवमेऽध्याये चीनदेशो वर्णितो बभूव। चीनदेशनृपतिर्भगदत्तो महाभारते सङ्गरे दुर्योधनपक्षे युयोध[७३]।

प्राचीनसमये चीनभारतदेशयोर्मध्ये घनिष्ठमैत्रीपूर्णसम्बन्धा अवर्तन्त। व्यापारिकविक्रेयवस्तूनि चीनदेशाद् भारतवर्षे सार्थवाहैर्वणिग्भिः समानीयन्ते स्म। चीनदेशनिर्मितानि वस्तूनि भारतवर्षेऽतिलोकप्रियाण्यासन्। कालिदासेन सूचितं यच्चीनदेशादायातितैर्वस्त्रैः राजकीयपताकाः निर्मीयन्ते[७४] स्म। बहुमूल्यानि चीनांशुकानि समृद्धजना एव परिधातुं क्षमन्ते। हिमवतः सुता पार्वती विवाहमंगलवेलायां चीनांशुकं दधार[७५]।

प्राचीनकाले चीनदेशेन सह भारतवर्षस्याऽऽर्थिकसम्बन्धाः ध्रुवमवर्तन्त। अथ च विविधविशिष्टधार्मिकसांस्कृतिकसम्बन्धा अप्यासन्। भारतीयाः धर्मप्रचारकाः भारतीयं धर्मं प्रासारयन्। चीनदेशादनेकेषां तीर्थयात्रिणां भारतयात्रायाः वर्णनानीतिहासप्रसिद्धानि वर्तन्ते। अत्र ह्वेन्त्सांग-फहियाने- त्सिंगाः विशेषरूपेण प्रसिद्धाः सन्ति।

चीनदेशस्य स्थितिर्भारतवर्षस्योत्तरस्यां हिमवतः परे पारे वर्तते। पूर्वदिशि चाऽयं देशः प्रशान्तमहासागरपर्यन्तं विस्तृतोऽस्ति।

## (२) पारसीकदेशः -

पारसीकदेशोऽपि संस्कृतनाटकेष्वनेकेषु प्रसङ्गेषु कविभिः समुल्लिखितः। तत्रत्याः नागरिका उज्जयिन्यां दृष्टिपथमागच्छन्ति स्म[७६]। मलयकेतोः सहायकराजसु मेघो नाम नरपतिः पारसीकदेशाधिपतिरासीत्[७७]।

महाभारते यवनचीनकम्बोजकुषाणादिदेशैः सह पारसीकदेशस्य वर्णनानि सन्ति[७८]। कालिदासेन वर्णितम् -

रघुः पारसीकदेशमजयत्[७९]। पारसीकदेशं गन्तुं जलमार्गोऽप्यासीत्। परन्त्वसौ स्थलमार्गेणैव तत्र गतः[८०]।

प्राचीनवर्णनैः प्रतीयते, यद् वर्तमानफारस (ईरान) देश एव प्राचीनकालीनः पारसीकदेशोऽभवत्। वर्तमानयुगयोः बिलोचिस्तानाफगानिस्तानदेशयोः कानिचित् क्षेत्राण्यपि तस्मिन् युगे पारसीकदेशान्तर्गतान्यवर्तन्त। पारसीकदेशो भारतवर्षस्य सीमान्तजनपदेषु परिगणितः।

**(३) यवनदेशः –**

पादताडितकभाणे वर्णनमुपलभ्यते – यत् पारसीकैः सह शकयवनतुषारा अप्युज्जयिन्यां न्यवसन्[८१]।

सम्भवतः प्राचीनकाले तद्युगीनसाहित्ये यूनानदेशवास्तव्याः जना एव यवनाः प्रोक्ताः। तेऽप्युदीच्यप्रदेशेषु (पश्चिमोत्तरभारते) निवासञ्चक्रिरे। काव्यमीमांसायां ते पाण्डुवर्णाः समुपवर्णिताः[८२]। महाभारतकारेण वर्णितम् –

कम्बोजशकमद्रादिभिः सह यवना अपि महाभारतयुद्धे दुर्योधनपक्षमवलम्ब्य युयुधिरे[८३]।

पतञ्जलिर्महाभाष्ये भारतवर्षे यवनान् निरवसितशूद्रानलिखत्[८४]। अथ च महाभारतवर्णनानि प्रतिपादयन्ति यत् सहदेवो यवनपुरं विजित्य तेभ्यः करान् सञ्जग्राह[८५]। समीक्षकाः यवनपुरमेतन्मिश्रदेशवर्तिना अलेग्जेण्ड्रियानगरेण परिचाययन्ति[८६]।

**(४) शकदेशः –**

श्यामिलकेन वर्णितम् –

शकाः सार्वभौमनगरे (उज्जयिन्यां) सततं दृष्टिपथमागच्छन्ति[८७]।

शकानामुल्लेखाः रामायणे[८८], महाभारते[८९], महापाष्ये, मनुस्मृतौ[९०] च वर्तन्ते। भारतीयेतिहासपरम्परानुसारेण ई० पू० प्रथमख्रिष्टशताब्द्यां शकाः भारतवर्षमाक्रम्य साम्राज्यमस्थापयन्। तस्मिन् समये विक्रमादित्यः

शकान् पराजित्य तान् भारतवर्षाद् बहिश्चकार। अथ च देशमेनं स्वतन्त्रं व्यदधात्।

शकानां विशिष्टमूलदेशस्य वर्णनान्युपलभ्यन्ते। राजशेखरस्तं देशं शाकद्वीपमवर्णयत्[९१]। प्राचीनविवरणैः प्रतीयते यच्छकाः शाकद्वीपनिवासिनोऽवर्तन्त। द्वीपस्य चाऽस्य सन्निधिर्जम्बूद्वीपेनाऽऽसीत्[९२]। सम्भवतः प्राचीनवर्णनेषु द्वीपस्याऽस्य गणना सप्तद्वीपेषु वर्तते[९३]।

शकजनपदस्य शाकद्वीपस्य वाऽभिज्ञानं वर्तमानसीथिया (सीस्तान) देशेन विधीयते। प्रदेशोऽयं सीरवंक्षुसरितोर्मध्यवर्ती समीक्षकैरनुमीयते। केचन समीक्षका आमनन्ति, यद् वर्तमानफारसदेशस्य पश्चिमोत्तरभूभाग एव प्राचीनसमये शाकद्वीपान्तर्गतो मन्तव्यः[९४]।

शकाः वंक्षुसरितमुत्तीर्य भारतवर्षमाचक्रमुः। साम्राज्यञ्च ते प्रास्थापयन्। परन्तु शनैः शनैस्तेषां पूर्णरूपेणाऽऽर्यीकरणं सञ्जातम्। ते भारतीयजनानामविभाज्याङ्गतां सम्प्रापुः। पेरीप्लसवर्णनानुसारं शकानां राजधानी भिननगरमासीत्। जनपदस्य चाऽस्य समुद्रतटवर्तिनगरं बारबेरियसपत्तनं सुप्रसिद्धं व्यापारकेन्द्रमवर्तत।

---

## सन्दर्भ ग्रन्थ


१. पादताड़ितक पृ० १५९
२. महाभारत_ ९.३७.१
३. ऐतिहासिक नामावली पृ० ६६
४. महाभारत - सभापर्व - अध्ययाय ३१
५. पतञ्जलिकालीन भारतवर्ष पृ० १४४
६. भागवतपुराण २.४.१८
७. पादताडितक पृ० १७९

८. महाभारत - कर्णपर्व ४४.४३

९. बौधायन धर्मसूत्र १.१.३२

१० शकुन्तलारावसम्पादिते कौमुदीमहोत्सवे (१९५२)
इन्ट्रोडक्शन पृ० ४

११. कौमुदीमहोत्सव ४.६

१२. देवीन्द्रगुप्तम्। बी० राघवन्सम्पादितस्य शृगारप्रकाशग्रन्थस्य भूमिकायाम् पृ० ९६३

१३. महावीरचरितम् ७.२५-२६

१४. अमरकोष १.१.६८

१५. किन्नर देश में - पृ० १,१६,३४७

१६. भारतसावित्री पृ० १३६,
हिमालयन गजेटियर - खण्ड-२ पृ० २९६

१७. बालरामायण पृ० ३६९

१८. मुद्राराक्षस पृ० ५४

१९. पादताड़ितक श्लोक - २४

२०. रत्नावली २.३

२१. महाभारत-शान्तिपर्व अध्याय ६५

२२. (क) हिन्दू सभ्यता पृ० ७१,
(ख) भारत की जनजातियां पृ० ४६,४९
(ग) प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका इति ग्रन्थस्य चत्वारिंशत्तमे पृष्ठे उद्धृतमिति शान्तिकुमारचाटुर्ज्यामहोदयस्याऽभिमतम्।

२३. आप्टे: संस्कृत-इंगलिश डिक्शनरी - अपेन्डिक्स पृ० ४१

२४. स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत्।
महाभारत-सभापर्व २६.९

२५. पूर्वे किराताः यस्यान्ते। विष्णुपुराण २.३.८

२६. ऐतिहासिक नामावली - पृ० २९०

२७. रघुवंश ४.७६

२८. महाभारत - द्रोणपर्व १२१.४२-४३, उद्योगपर्व १६०.१०३

२९. मार्कण्डेय पुराण पृ० ३४५

३०. भागवतपुराण २.४.१८
३१. राजतरङ्गिणी १.३.१७
३२. मुद्राराक्षस ३.१२
३३. जिओग्राफीकल डिक्शनरी ऑफ एन्शिएल्ट एण्ड मिडीवल इन्डिया पृ० ३६
३४. प्राचीन भारतीय परम्परा और इतिहास पृ० ख
३५. भवतैव गन्धर्वराज्याधिपत्याभिषेककृतमहाप्रसादश्चित्ररथ:। महावीरचरित पृ० १७३
३६. आश्चर्यचूडामणि पृ० २४५
३७. रामायण - उत्तरकाण्ड १०१.११
३८. रघुवंश १५.८७-८८
३९. पादताडितक श्लोक - २४
४०. महाभारत - सभापर्व २७.२५-२७
४१. विष्णुधर्मोत्तरपुराण १.९.८
४२. गरुडपुराण ५५.१६
४३. महाभारत - सभापर्व ५१.३०
४४. कल्चुरल हिस्ट्री फ्रॉम वायुपुराण पृ० १०
४५. कौमुदीमहोत्सव पृ० ३२
४६. उत्तररामचरित १.२१
४७. बालरामायण पृ० ३६९
४८. मा निषाद प्रतिष्ठां त्वमगम: शाश्वती: समा:।
यत्क्रौञ्चमिथुनादेकमवधी: काममोहितम्।।
रामायण बालकाण्ड २.१५
४९. महाभारत - सभापर्व १३०.४
५०. वही ३१.३
५१. स्ववीर्यार्जितानामनुरक्तप्रकृतीनां सुराष्ट्रश्वभ्रभरुकच्छ-सिन्धुसौवीरकुकुरापरान्तनिषादादीनाम् ................।
रुद्रादाम्नो गिरिनाराभिलेख:।
५२. पादताडितक श्लोक १२४

५३. The words seem to denote so much a particular tribe, but to be the general term for the non-Aryan tribes, who were not Aryan controlled.
वैदिक इन्डेक्स: नेम्स एण्ड ऑब्जेक्ट्स - स निषाद:।
५४. भारत की मौलिक एकता : प्रयाग (१९५४) पृ० १२७
५५. अभिज्ञानशाकुन्तल -सप्तम अंक
५६. कुमारसम्भव १.११
५७. उत्तररामचरित षष्ठाङ्कस्य विष्काम्भक:।
५८. बालरामायण ४.४५
५९. ज्योग्राफीकल डिक्शनरी ऑफ एन्शिएन्ट एण्ड मिडीवल इन्डिया - पृ० ६३
६०. कौमुदीमहोत्सव पृ० १०
६१. वीणावासवदत्तम् पृ० १०
६२. वही पृ० १२
६३. रघुवंश १६.१९-३२
६४. मत्स्यपुराण ११४.४८
६५. बृहत्कथाश्लोक संग्रह १८.१७९,
कादम्बरी - विन्ध्याटवीवर्णनम्।
६६. मार्कण्डेयपुराण पृ० ३१६
६७. कल्चुरल हिस्ट्री फ्रॉम वायुपुराण ग्रन्थे २५७ पृष्ठे महाभारतादुद्धृतम्।
६८. कामगिरेर्दक्षभागे मरुदेशात्तथोत्तरे।
हूणदेश: समाख्यातो हूणास्तत्र वसन्ति हि।।
शक्तिसङ्गमतन्त्र ३.७.४४
६९. कालिदास का भारत - भाग १, पृ० १०३
७०. दी एज आफ इम्पीरीयल गुप्ताज पृ० ४६
७१. ज्योग्राफिकल डिक्शनरी ऑफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० १०
७२. रामायण किष्किन्धा काण्ड ४३.१३

७३. महाभारत - सभापर्व २३.१९
७४. चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य।
अभिज्ञानशाकुन्तल १.३०
७५. कुमारसम्भव ७.३
७६. पादताडितक श्लोक २४
७७. मुद्राराक्षस १.२०
७८. महाभारत - सभापर्व - नवम अध्याय
७९. रघुवंश ४.६०
८०. वही ५.७३
८१. पादताड़ितक श्लोक २४
८२. काव्यमीमांसा ९७.७
८३. कैम्ब्रिज हिस्ट्री ऑफ इण्डिया भाग - १ पृ० २२५
८४. अष्टाध्यायी - २.४.१० सूत्रे पातञ्जलमहाभाष्यम्।
८५. अन्ताखीं चैव रोमां च यवनानां पुरं तथा।
दूतैरेव वशं चक्रे करं चैनामदापयत्।।
महाभारत सभापर्व ३१.७२
८६. ऐतिहासिक नामावली पृ० ७७०
८७. पादताडितक - श्लोक २४
८८. रामायण - बालकाण्ड ५४.११
८९. महाभारत - सभापर्व ३१.७२
९०. मनुस्मृति १०.४४
९१. काव्यमीमांसा १४.९-११
९२. भविष्यपुराण - अध्याय १४९
९३. कल्चुरल हिस्ट्री फ्रॉम वायुपुराण पृ० २६१
९४. प्राचीन मुद्रा पृ० - ७४-७५

# षष्टोऽध्यायः
## नगराणि ग्रामाश्च

१. अमरावती
२. अयोध्या
३. अरारालपुरम्
४. अलका
५. अलिपुरम्
६. आनन्दपुरम्
७. इन्द्रप्रस्थनगरम्
८. उज्जयिनी
९. कटाहनगरम्
१०. काञ्ची
११. कान्यकुब्जनगरम्
१२. काम्पिल्यनगरम्
१३. काशी
१४. किष्किन्धा
१५. कुंडिननगरम्
१६. कुसुमपुरम्
१७. कौशाम्बी
१८. चम्पा
१९. द्वारका
२०. पद्मनगरम्
२१. पद्मपुरम्
२२. पद्मावती
२३. पाटलिपुत्रम्
२४. प्रतिष्ठानपुरम्
२५. प्रयागः
२६. भर्तृस्थानम्
२७. मथुरा
२८. महोदयपुरम्
२९. माहिष्मती
३०. मिथिला
३१. राजगृहम्
३२. लङ्का
३३. लावणकग्रामः
३४. वारणावतनगरम्
३५. वाराणसी
३६. विदिशा
३७, विराटनगरम्
३८. वैरन्त्यनगरम्
३९. व्याधकिष्किन्धा
४०. शृङ्गवेरपुरम्
४१. साकेतः
४२. हस्तिनापुरम्

# षष्ठोऽध्यायः
## नगराणि ग्रामाश्च

कृषिप्रधाने भारतवर्षेऽतिप्राचीनकालादेव ग्रामाणां समुचितो विकासो बभूव। उत्तरवर्तिनि काले जनसंख्यायाः बृद्ध्या सह सभ्यतायाः विकासेन नगराणां निर्मितिरपि वर्धमाना बभूव। आर्थिकीनां राजनीतिकीनाञ्च गतिविधीनां केन्द्ररूपेण प्रतिष्ठितान्येतानि नगराणि महत्त्वाकांक्षिणां जनानां निवासाय विशेषरूपेणाऽऽकर्षकराणि बभूवुः। प्राचीनसाहित्ये संस्कृतनाटकेषु च नगराणां ग्रामाणाञ्च वर्णनानि बाहुल्येन प्राप्यन्ते। अकारादिवर्णक्रमेण तेषां परिचयाः प्रस्तूयन्ते।

**(१) अमरावती –**

पुराणेषु नगरी अमरावती देवराजस्येन्द्रस्य स्वर्गस्य च राजधानीरूपेण प्रसिद्धा। राजशेखरो नगरीमेनां नारीपात्ररूपेण प्रास्तौत्। समरे रामेण रावणे हते भोगवत्यमरावत्युज्जयिनी नगर्यः समवेदनां प्रकटयितुं लङ्कामुपगच्छन्ति[१]।

मध्यकालीनेतिहासेऽमरावती ह्यान्ध्रजनपदस्य राजधानी बभूव। कृष्णासरित्तटवर्तिनीं नगरीमेनां सातवाहनवंशीयो नरपतिः शातकर्णी १८० ख्रिष्टाब्दकाले राजधानीञ्चकार। कृष्णानदीमार्गेण पूर्वसमुद्रादमरावतीपर्यन्तं व्यापारिकपोतानामावागमनसुविधाऽतिरामवर्तत। अतो राजनीतिककेन्द्रेण सह नगरीयं व्यापारिककेन्द्ररूपेणाऽप्यतिशयेन प्रसिद्धिं प्राप्नोत्।

बालरामायणनाटके राजशेखरोऽमरावतीं विशेषतः स्वर्गनगरीरूपेण प्रास्तौत्[२], न तु सातवाहनवंशीयानां नरपतीनां राजधानीरूपेण। पृथिव्यां

स्थितया अमरावत्या सह नाऽस्याः कोऽपि सम्बन्धो लक्ष्यते।

## (२) अयोध्या -

प्राचीनभारतीयसाहित्ये रघुवंशीयानां भूमिपालानां राजधानीरूपेणाऽयोध्यायाः वर्णनानि समुपलभ्यन्ते[३]। सरयूसरित्तटवर्तिनी नगरीयं पापविनाशिनी गण्यते। भासेन वर्णितम् -

सोपस्नेहतया वृक्षानभितः खल्वयोध्यया भवितव्यम्[४]।

राजशेखरेण अयोध्यामभितोऽनोकहानां सौन्दर्यं चित्रितम्[५]। मुरारिरयोध्यामुत्तरकोशलानां राजधानीमलिखत्[६]।

प्राचीनकालादेवाऽतिप्रसिद्धा रमणीयाऽयोध्या विष्णुधर्मोत्तरपुराणे देवैरप्यविजिता, प्राकारेण परिखया च परिवेष्टिता सरयूसरिता सुशोभिता, विशालप्रासादैरलङ्कृता, महापथेषु च विभक्ता कीर्तिता[७]। रामायणेऽयोध्यायाः विस्तरेण वर्णनं विद्यते। द्वादशयोजनपरिधिसीमितेयं नगरी सरयूतटवर्तिनी विद्यते[८]।

अयोध्यानगरी साकेतनाम्नाऽपि प्रसिद्धा बभूव[९]। अयोध्या च साकेतञ्चेति द्वावपि शब्दौ पर्यायवाचिनाववगन्तव्यौ। कालिदासः पुरीमेनां साकेतमप्यवर्णयत्[१०]। अथ चाऽयोध्यामपि जगाद[११]।

भारतीयेतिहासे साहित्ये च अयोध्यासाकेतयोः सामान्यत एकत्वमेव संलक्ष्यते। परं कदाचिद् भिन्नत्वमपि प्रतीयते। बौद्धसाहित्ये केषुचित् प्रसङ्गेषु साकेतनगरमयोध्यातो भिन्नत्वेनाऽभिहितम्[१२]।

रीज डेविज महोदयस्य धारणा विद्यते, यद् बुद्धसमये साकेतनगरमयोध्यातो भिन्नमेव प्रतिष्ठितमभवत्[१३]। सम्भवतः कस्मिंचित् समये सकलो जनपदः साकेतनाम्नाऽभिधीयते स्म। अयोध्या च तस्य राजधानी ह्यवर्तत। आयने अकबरी ग्रन्थे साकेतनामकं स्थानं १४८ x ३६ क्रोशायामं वर्णितं विद्यते[१४]। परन्तु संस्कृतसाहित्ये द्वे अपि पदे साकेतञ्चाऽयोध्या च एकमेवाऽभिधानं सूचयतः। रामायणे स्पष्टरूपेण साकेतनगरं दशरथराजधानीत्वेन वर्णितमस्ति। पतञ्जलिरपि यवनैः

साकेतस्य परिवरणमवर्णयत्[१५]।

सम्भावनेयमपि कल्प्यते, यत् प्राचीनकाले साकेतञ्चाऽयोध्या चैकस्यैव विशालनगरस्य द्वौ भागावर्तेताम्। तयोः स्थितिस्तादृश्येव सम्भावनीया, यथा वर्तमानसमये ह्यांग्लदेशे लन्डनवेस्टमिन्स्टर-नगरयोर्वर्तति[१६]।

अयोध्यानगरी वर्तमानसमये उत्तरप्रदेशे फैजाबादजनपदे सरयू-सरितस्तटे समवस्थिता विद्यते। प्रसिद्धेयं तीर्थस्थली सकललोकपूजिता मोक्षदायिनीषु सप्तनगरीषु परिगणिता[१७]। सरयूतटेऽयोध्यायाः प्राच्यां रामघट्टः प्रतीच्याञ्च गुप्तघट्टो विद्यते। घट्टयोरनयोर्मध्ये सर्वाण्येव पवित्राणि स्थलानि समाविशन्ति। नगर्या अस्याः विस्तारो विद्यते - ३.५ x १.५ किलोमीटराणि।

राजनीतिकरूपेणाऽयोध्यानगरी गुप्तकालपर्यन्तं शक्तिसम्पन्ना महत्त्वशालिनी चाऽगण्यत। परन्तूत्तरवर्तिनि काले शासका अत्रत्याः निर्बलाः सञ्जाताः। मोहम्मदीयानामाक्रमणैरपि शक्तिरस्य क्षीणा सञ्जाता। तेषामाधिपत्येऽयोध्यायाः महत्त्वं हीनतां गतम्। अयो-ध्यातोऽनतिविप्रकृष्टान्तरालेन मोहम्मदीयशासकैः फैजाबादनगरं जनपदस्यैतस्य राजधानीरूपेण स्थापितम्। मुगलसम्राजो बाबरस्यैकः सैन्याध्यक्षोऽयोध्यायाः राममन्दिरं भित्त्वा तत्सामग्र्या तस्मिन् स्थाने मसजिदस्य निर्मितिमकारायत्।

### (३) अरारालपुर -

दिङ्नागः कुन्दमालानाटकेऽरारालपुरमुल्लिलेख। असावरारालपुर-वास्तव्योऽवर्तत[१८]। परन्तु वर्तमानसमये नगरस्याऽस्याऽवस्थितिः परिचयश्च समीक्षकैरद्यावधि न विदितः।

### (४) अलका -

यक्षाधिपस्य कुबेरस्य राजधानी कविभिरलकापुरी वर्णिता। कालिदासेन वर्णितं, यदियं नगरी मानससरःसन्निकटं कैलासपर्वत-

स्योत्सङ्गेऽवस्थिता वर्तते। तन्निकटमेव मन्दाकिनी सरित् प्रवहति[१९]। राजशेखरेणेयं पुरी कैलासगिरौ कुबेरस्य राजधानी कीर्तिता[२०]।

अलकापुर्याः स्थितिर्याथार्थ्येनाऽवर्तत, कविकल्पना वेयमिति तथ्यतो वक्तुमशक्यं प्रमाणानामभावात्। नामसाम्येनाऽस्याः पुर्याः स्थितिरलकनन्दासरितस्तटे सम्भावनीया। अलकनन्देयं गङ्गासरितः प्रधान-सहायिका गढ़वालमण्डले सत्यपथसरसोऽलकापुरीबङ्काच्च प्रभूय देवप्रयागे भागीरथ्यां संविलीयते।

वर्तमानसमयेऽलकनन्दाया उद्गमस्थानं हिमाच्छादितगिरीणामुत्सङ्गे सत्यपथसरो वर्तते। अलकापुरीबङ्कमपि तस्या उद्गमस्थानम्। स्थानमिदं बदरीनाथतीर्थस्थलाद् एकादशमीलविप्रकृष्टान्तरालेन वसुधाराप्रपाताच्च सप्तमीलविप्रकृष्टान्तरालेन वर्तते। समुद्रतलादस्य स्थितिः द्वादशसहस्र (१२०००) फीटोच्चैस्तरामस्ति। हिमाच्छादितेऽस्मिन् प्रदेशे मानवानां वसतिर्न सम्भवा।

अनेके समीक्षकाः गढ़वालमण्डलान्तर्गतचमोलीजनपदस्य गुप्तकाशीद्रोण्यां गुप्तकाशीसोमप्रयागमध्ये मन्दाकिनीतटस्थितं कालीमठमेव कालिदासप्रोक्तामलकापुरीं प्रतिपादयन्ति। लोके प्रसिद्धिरपीदृशी कीर्त्यते, यदत्रैव कालीदेवीमुपास्य कालिदासो देवीप्रसादेन काव्यरचनाप्रतिभामहिममण्डितो बभूव। अथ चाऽसौ कालिदासनाम्ना स्वात्मानं व्यभूषयत्। समीपस्थ एवैकः कविल्ठाभिधानो ग्रामः कालिदास-जन्मभूनाम्ना प्रसिद्धः। ग्राममेनमेव जनाः कालिदासजन्मभुवं प्रचारयन्ति। अस्मात् स्थानात् केदारनाथस्य हिममण्डितानि शिखराण्यतिरमणीयानि मनोहारीणि च प्रतिभान्ति।

## (५) अलिपुरम् -

विशाखदत्तो देवीचन्द्रगुप्तनाटकेऽलिपुरं नाम नगरमुल्लिलेख। शकराजो गुप्तसाम्राज्यमाचक्राम। तस्मिन्नवसरे गुप्तसम्राजो रामगुप्तस्य सैन्यशिविरमलिपुरे समधिष्ठितमासीत्।

अलिपुरमिदमरिपुराभिधानेनाऽपि नाटके लिखितमुपलभ्यते। अलिपुरस्थितिमुपलक्ष्य जायसवाल महोदयेन समीक्षितम् -

हिमाचलप्रदेशे कांगड़ाजनपदे शुतुद्रिविपाशासरितो: (सतलुज-व्यासयो:) मध्यवर्तिनि प्रदेशेऽलिपुरनगरस्य स्थिति: सम्भा-वनीया।

वर्तमानसमये नगरमिदमलिबलनाम्ना लोके प्रसिद्ध: परिचीयते[२१]।

## (६) आलन्दपुरम् -

पादताडितकभाणे श्यामिलकेन वर्णितम् -

आनन्दपुरवास्तव्यो भववर्माऽत्रोज्ययिन्यां निवसति। प्रथितोऽयं विटो लब्धकीर्ति:[२२]।

प्राचीनसाहित्ये ह्यानन्दपुराभिधानेन प्रथितमिदं नगरमानर्तपुर-नाम्नाऽपि विख्यातमासीत्। गुर्जरनरेशस्य शीलादित्यस्य ताम्रदानपट्टे (७६७ ई०) आनन्दपुरस्योल्लेखो विद्यते[२३]। वर्तमानसमये नगरमिदं बड़नगरनाम्ना परिचीयते[२४]।

आनन्दपुरमेकं पञ्चनदप्रदेशेऽपि वर्तते। सिखानां धर्मगुरु: गोविन्दसिंहोऽत्र हिन्दूधर्मरक्षायै खालसामतं प्रावर्तयत्।

## (७) इन्द्रप्रस्थनगरम् -

प्राचीनसाहित्ये इन्द्रप्रस्थं पाण्डवानां राजधानीरूपेण प्रसिद्धं विद्वद्भिर्मनीषिभिर्वर्णितम्। महाभार`तीया कथा प्रसिद्धा।

धृतराष्ट्र: कुरुराज्यं द्वयोर्भागयोर्विभज्य दक्षिणवर्तिनं भूभागं पाण्डवेभ्य: समार्पयत्। हस्तिनापुरात् सुदूरं विप्रकृष्टान्तरालेन दक्षिणदिशि कालिन्दीतटे खाण्डवप्रस्थनामनि स्थाने पाण्डवा इन्द्रप्रस्थाभिधानेन राजधानीं व्यवस्थापयन्। परं महाभारतसमरे कौरवान् विजित्य हस्तिनापुरञ्चाऽधिकृत्य ते तत्रैव निवासमकल्पयन्। तदनन्तरमिन्द्रप्रस्थ-नगरस्य महत्त्वं क्षीणताङ्गतम्।

ई० पू० ९०० संवत्सरे महाभीषणजलसंप्लवो हस्तिनापुरमपि

जलमग्नञ्चकार। तदनन्तरं हस्तिनापुरेऽस्मिन् विनाशलीलां संप्राप्ते पाण्डववंशीयाः नरपतयः कुरुजनपदं विसृज्य वत्सजनपदञ्च समागत्य यमुनातीरे कौशाम्बीमेव राजधानीञ्चक्रिरे तदनन्तरमिन्द्रप्रस्थनगरस्य महत्त्वं पूर्वतोऽपि क्षीणतरं सञ्जातम्।

प्राचीनकाले नगरस्येन्द्रप्रस्थस्य गणना पञ्चसु सुप्रसिद्धप्रस्थेषु - इन्द्रप्रस्थयमप्रस्थवरुणप्रस्थकूर्मप्रस्थदेवप्रस्थेषु मनीषिभिः कृता[२६]। डी० सी० सरकार महोदयेन लिखितम् -

इन्द्रप्रस्थनगरं न केवलमेकं नगरमेवाऽऽसीत्, परं सकलोऽपि जनपद इन्द्रप्रस्थनाम्ना ज्ञायते स्म। जनपदोऽयमुत्तरस्यां मयराष्ट्र-(मेरठ) पर्यन्तं दक्षिणायाञ्च गोदावरीसरितं यावत्, प्राच्यां मथुरापर्यन्तं प्रतीच्याञ्च द्वारकापर्यन्तं विस्तीर्णो बभूव[२७]। दिल्लीनगरे पुरातनदुर्गं पाण्डवदुर्गाभिधानेन प्रसिद्धम्।

## (८) उज्जयिनी -

भारतवर्षस्य राजनीतिकसांस्कृतिकेतिहासे उज्जयिनी (उज्जैन) नगरी विश्वप्रसिद्धा महत्त्वपूर्णा शक्तिशालिनी च प्रथितकीर्तिरासीत्। अस्याः नगर्याः धार्मिकं सांस्कृतिकं राजनीतिकमार्थिकञ्च महत्त्वं सर्वलोकमान्यमवर्तत। अवन्तीजनपदस्य राजधानीरूपेण प्रतिष्ठिता मान्यतां गता[२८] उज्जयिनी भारतवर्षस्य केन्द्रमेवाऽवर्तत। महाकालमन्दिर-मत्रत्यमवलोक्य भारतीयाः धर्मप्राणाः जनाः कृतार्थाः पुण्यशालिनो-ऽभवन्[२९]।

भारतीयलोककथासु प्रसिद्धानि पात्राणि - अवन्तिकुमारीवासवदत्ता सम्राड्विक्रमादित्यादीनि उज्जयिनीवास्तव्यान्यासन्। वत्सराजोदयनसमये चण्डप्रद्योताभिधानो नरपतिरुज्जयिनीं शशास[३०]। तस्य सुता वासवदत्ता वत्सराजेनोदयनेनाऽपहृता[३१]। रत्नावलीनाटिकायां श्रीहर्षेण वर्णितम्-

सागरिकां कारागारें निबद्धां कृत्वा वासवदत्ता लोके किम्वदन्तीं प्रासारयद्, यत्सा तया उज्जयिन्यै विसृष्टा[३२]। मेघदूते कालिदासवर्णनैः

प्रतीयते यदुज्जयिनी विदिशातो दक्षिणदिग्वर्तिनी वर्तते, मार्गे च निर्विन्ध्यासरिदुत्तरणीया भवति[३३]।

विद्धसालभञ्जिकायां नाटिकायां[३४] बालरामायणमहानाटके[३५] च राजशेखरेणोज्जयिनी वर्णिता। नगरीयं चर्मण्वत्या सरिता परिवेष्टिता। परन्तु तथ्यविपरीतमेवैतद् वर्णनम्। नोज्जयिनी चर्मण्वती-सरित्समीपवर्तिनी।

ई० पू० प्रथमशताब्द्यामुज्जयिनी सम्राजो विक्रमादित्यस्य राजधानी बभूव। विक्रमादित्योपाधिधारी गुप्तसम्राट् चन्द्रगुप्तद्वितीयः खिष्टस्य चतुर्थशताब्द्यामुज्जयिनीं द्वितीयां राजधानीञ्चकार। सम्राडयं चक्रवर्ती भूत्वा मालवशकसुराष्ट्रापरान्तान् विजित्य सुव्यस्थित-शासनसुस्थापनहेतोरुज्जयिनीं द्वितीयां राजधानीं कृत्वाऽस्याः महत्त्वम-वर्धयत्। सार्वभौमसम्राजो राजधानीयं सार्वभौमनगराभिधानेनाऽपि प्रथिता बभूव। श्यामिलकेन पादताडितकभाणे नगरीयं सार्वभौमनगरनाम्ना कीर्तिता[३६]।

कालिदासो ह्युज्जयिनीं विशालभिधानेनाऽपि लिलेख[३७]। महाकविस्तां धार्मिकसामाजिकराजनीतिकार्थिकादिसर्वदृष्टिभि-र्महत्त्वशालिनीमवर्णयत्। अतिसमृद्धेयमुज्जयिनी नगरी स्वर्गस्य कान्तिमत्खण्डमेकमेवाऽवर्तत। अवन्तीजनपदस्य राजधानी-भावादियमावन्तिकापदेनाऽपि लोकेऽभिधीयते स्म। उज्जयिनी (आवन्तिका) पौराणिकसाहित्ये मोक्षदासु सप्तपुरीषु गण्यते। महाकालमन्दिराधिष्ठानभावादुज्जयिनी महतीं प्रतिष्ठां कीर्तिञ्च प्राप्नोत्[३८]। कालिदासोऽस्मिन् महाकालमन्दिरे प्रतिदिनं सायंकालवर्तिनीं विशिष्टपूजामवर्णयत्। अत्र देवदास्यो नृत्यन्ति स्म[३९]। महाकालमन्दिरस्य शिवलिङ्गं द्वादशसु ज्योतिर्लिङ्गेषु गण्यते।

उज्जजिन्याः वर्तमानमहाकालमन्दिरस्य निर्मितिर्नाऽतिप्राचीना प्रतीयते। प्राचीनमन्दिरं तु दिल्लीस्थमुसलिमशासकेन सम्राजा

इल्तुमिशेन विध्वस्तम्। परं महाराष्ट्रीयशासनकाले तत्कालीनैः शासकैः मुसलिमाक्रमणकारिभिर्विध्वस्तानां हिन्दूमन्दिराणां जीर्णोद्धारः कृतः। ख्रिष्टस्य एकोनविंशतिशताब्ध्यां राणोजी सिन्धियानरपतेरमात्यो रामचन्द्रो मन्दिरस्यैतस्य पुनर्निर्माणमकारयत्।

उज्जयिन्याः समृद्धयः संस्कृतकवीनां मनांसि हृदयानि चाऽपजह्रुः। ते ह्येतस्याः नगर्याः समुज्ज्वलां समृद्धिं सौन्दर्यञ्चाऽभिव्यञ्जयामासुः। श्यामिलको नगरीमेतां जम्बूद्वीपस्य तिलकभूतां प्रादर्शयत्[४०]। विशालेयं शोभना पुरी विविधकलाविद्याविज्ञानविलासैः प्रथितकीर्तिरभवत्। गुरुजना अत्र वेदानपाठयन्, विद्वांसः शास्त्रार्थं समाचरन्, कवयः काव्यानि नाटकानि च व्यरचयन्, क्षत्रियाः धनुषां टङ्कारध्वनिं प्रासारयन्, मार्गेषु करिणो रथा अश्वाश्चाऽधावन्, विपणिष्वापणेषु विविधद्वीपेभ्य आयातितानि विक्रेयवस्तूनि व्यक्रीयन्त, प्रासादेषु सङ्गीतान्तर्गतगीतनृत्यवाद्यानां विलासा अवर्तन्त। विटाः ननन्दुः, वाराङ्गनाः राजपथेषु महापथेषु वीथिषु च स्वैरं बभ्रमुः पालितपक्षिणां कलरवा अगुञ्जन्, सुन्दरीणां कामिनीनाञ्च कङ्कणध्वनयो प्रासरन्[४१]।

विकासस्य यौवनमये समये नगरीयमुज्जयिनी व्यापारस्य-शिक्षायाः राजनीतिक्रियाकलापस्य च महत्त्वशालि केन्द्रमवर्तत। अत्रत्येषु विपणिवर्त्येष्वापणेषु गुणवन्त्यगुणवन्ति च विक्रेयवस्तूनि सततं सुशोभन्ते स्म। क्रेतॄणां जनानां सम्मर्दा अविरलं कोलाहलमकुर्वन्। महतः साम्राज्यस्य केन्द्रभूतायामस्यां नगर्यां विविधजनपदानां सामन्ताः समृद्धिमन्तो नागरिकाश्च निवासाय भवनानां निर्मितिमकारयन्। अत्र शकयवनतुषारपारसीकमगधकिरातबङ्गमहिषकचोलपाण्ड्य-केरलादिजनपदनिवासिनो जनाः स्थाने स्थाने भ्रमन्तोऽवालोक्यन्त[४२]।

व्यापारोद्योगकेन्द्रभूताया उज्जन्याः समृद्धिशालिनां वणिजां व्यापराणामुद्योगानाञ्च विस्तृतानि विवरणानि संस्कृतरूपककृद्भिः स्वकृतिषु प्रस्तुतानि। ई० प्रथमशताब्द्यां चारुदत्तोऽत्रत्यः सुप्रसिद्धः

सार्थवाहो बभूव। सुदूरदेशेभ्यो जनपदेभ्यो नगरेभ्यो ग्रामेभ्यश्च कलाकुशलकर्मकरा: कारुकाश्च स्वकीयामाजीविकामर्जयितुमुज्जयिनी-मागच्छन्। मर्दनकलाकुशलस्य कुसुमपुरवास्तव्यस्य कलाकारस्य संवाहकस्योज्जयिनीवासस्य कथां भासश्चारुदत्तनाटकेऽवर्णयत्[४३]।

प्राचीनकालीना सम्मान्या सुप्रसिद्धा नगरीयमुज्जयिनी वर्तमान-कालीनोज्जैननगरेण परिचीयते। शिप्रातटवर्तिन्यामस्यां पुर्यां शिप्रातीरे महाकालमन्दिरं सुशोभते। अत्र सिंहस्थकुम्भमेलापकं प्रतिद्वादशवर्षं महता समारोहेण समायोज्यते। अनेके प्राचीनावशेषा अत्र वर्तमानकालेऽपि विद्यमाना: श्रद्धालुतीर्थयात्रिणां भक्तानां मनांस्यावर्जयन्ति।

## (९) कटाहनगरम् -

कौमुदीमहोत्सवनाटके बिज्जिका कटाहनगरमुल्लिलेख। अत्रैको विटो गर्ते न्यपतत्[४४]। नगरस्याऽस्याऽभिज्ञानं न निश्चयेन याथार्थ्येन मनीषिभि: समीक्षितम्।

डी० सी० सरकार महोदयेन वर्तमानपाकिस्तानदेशे जेहलमजनपदे खेतसाभिधानस्य कटासाभिधानस्य वा तीर्थस्योल्लेख: कृत:। सम्भवतो तीर्थमिदमेव प्राचीनकालीनं कटाहनगरं वर्तते[४५]।

## (१०) काञ्ची -

प्राचीनसाहित्ये काञ्ची द्रविडजनपदस्य राजधानीरूपेण कविभिर्वर्णिता। नगर्या अस्या: महत्त्वं राजनीतिकधार्मिकशैक्षणि-कार्थिकगतिविधिभिर्निरन्तरं प्रवर्धमानं बभूव। अथ चेयं पुरी पल्लवंशीयानां नरपतीनां राजधान्यवर्तत[४६]। बिज्जिका नगरीमेनावर्णयत्[४७]। समुद्रगुप्तस्य प्रयागस्तम्भोत्कीर्णो लेखो विद्यते - विष्णुगोप: काञ्चीं शशास।

पवित्रतीर्थरूपेणाऽपि काञ्चीनगरी मनीषिभि: स्मृता। अस्या गणना मोक्षदायिकासु सप्तपुरीषु विधीयते[४८]। अत्र मन्दिराणां रचना भूयिष्ठसंख्यासु भक्तजनैर्देवोपासकै: कारिता। प्राचीनमन्दिराणि प्रायश:

पल्लववंशीयैर्नरपतिभिर्विजयनगरमहीपालैश्च निर्मापितानि समुपलभ्यन्ते।

काञ्चीपुरी द्वयोर्भागयोर्विभक्ता संलक्ष्यते – विष्णुकाञ्ची शिवकाञ्ची च। विष्णुकाञ्च्यां वैष्णवमतावलम्बिनां विष्णुभक्तानां शिवकाञ्च्याञ्च शैवमतावलम्बिनां शिवोपासकानां प्राधान्यमासीत्। कवयः काञ्चीभूमिपालान् शिवस्य तृतीयनेत्रात् समुद्भवानकल्पयन्। राजशेखरोऽवर्णयत् – काञ्चीनरपतयो भगवतः शिवस्य तृतीयनेत्रादवातरन्[४९]।

स्कन्दपुराणे काञ्चीपुर्याः महती प्रतिष्ठा मनीषिणा पुराणकारेण कीर्तिता। महिमानं चाऽस्य देशे विदेशेषु यशस्विनो लेखकाः प्रासारयन्। अत्र कम्पानामनि स्थले प्ररूढो रसालतरुस्तपसो महनीयमुत्कृष्टं श्रद्धास्पदं स्थानमस्ति। पार्वती अत्रैव तपस्तेपे[५०]। अत्र शिवस्य प्रसिद्धमेकाश्वराभिधानं मन्दिरं वर्तते। पार्थिवः कृष्णदेवरायो मन्दिरस्याऽस्य निर्मितिं समापादयदितीतिहासप्रसिद्धिर्वर्तते। मन्दिरे प्रतिष्ठितस्य शिवलिङ्गस्यैकस्य रचनायाः समयोऽष्टोत्तरैकसहस्रसंवत्सरमिति (१००८) लघ्वक्षरैः शिवलिङ्गेऽङ्कितैः प्रतीयते। मन्दिरप्राङ्गणे च वाटिकायां विशालाकारः सच्छायो रसालतरुर्विलसति। सहस्राधिकवर्षपुरातनेऽस्मिन्ननोकहे चतुर्विधान्याम्रफलानि फलन्ति।

विष्णुकाञ्च्यां मण्डपशतैरलङ्कृतं विष्णुमन्दिरं समुल्लसति। तथाविधमद्वितीयं कलालङ्कृतं शिल्पमन्यत्र सुदुर्लभमेव।

### (११) कान्यकुब्जनगरम् –

प्राचीनसमये कान्यकुब्जनगरमतिमहत्त्वपूर्णं महनीयां प्रतिष्ठां प्रसिद्धिञ्च लेभे। वर्धनवंशीयो नरपतिर्हर्षवर्धनो ख्रिष्टस्य सप्तमशताब्द्यां नगरमेनं राजधानीञ्चकार।

स्कन्दपुराणे वर्णनमुपलभ्यते – गङ्गायाः कालीसरितश्च सङ्गमस्थलेऽवस्थिते कान्यकुब्जे महाक्षेत्रे नरपतेर्भोजस्य शासनमस्ति[५१]। कान्यकुब्जनगरस्याऽवस्थितिः पञ्चालजनपदान्तर्गताऽविद्यत[५२]। रामायणे

वर्णनमुपलभ्यते –

कुशनाभाभिधानस्य भूमिपालस्य काश्चन कुब्जाः कन्या आसन्। कुशनाभस्य सुतोऽमावसुस्ता उपलक्ष्य नगरमिदमस्थापयत्। अतो नगरमिदं कान्यकुब्जनाम्ना प्रसिद्धिमवाप।

कस्मिंश्चित् समये कान्यकुब्जनगरमिदं गाधिपुरनाम्नाऽपि प्रसिद्धमासीत्। राजर्षेर्विश्वामित्रस्य पुरमिदं जन्मभूमिभूतं राजधान्यासीत्[५३]। महोदयपुरमप्यस्याऽभिधानमुपलभ्यते[५४]। महोदयपुरस्य स्थापना भूपालेन कुशनाभेन कारितेति रामायणे प्रामाण्यमुपलभ्यते[५५]।

इतिहासप्रसिद्धिर्वर्तते –

कान्यकुब्जनगरं प्रभाकरवर्धनस्य जामातुर्हर्षवर्धनस्य च भगिनीपतेर्मौखरीवंशीयस्य पार्थिवस्य ग्रहवर्मणो राजधान्यासीत्। केषाञ्चिद् भूमिपालानां महद्भिः सुगूढषड्यन्त्रैर्भगिनीबल्लभे ग्रहवर्मणि निहतेऽग्रजे राज्यवर्धने च हते हर्षवर्धनः स्थाण्वीश्वरं नगरं परित्यज्य कान्यकुब्जनगरं राजधानीमकल्पयत्। तदनन्तरं पुरमेतन्महनीयं माहात्म्यं समृद्धिञ्च समधिजगाम। चीनदेशवास्तव्यो यात्री ह्वेन्त्सांगमहोदयो नगरस्याऽस्य कान्यकुब्जस्य महिमानमकीर्तियत्।

राजशेखरः कान्यकुब्जनगरसमृद्धिं सविशेषवर्णयत्। गङ्गातीरे समवस्थितस्य[५६] नगरस्याऽस्य परम्परा अन्यदेशीयाः जना अनुसरन्ति। कान्यकुब्जवासिन्यः कामिन्यो यथा वसनानि धारयन्ति, स्ववपूंषि यथा विभूषणैर्विभूषयन्ति, प्रसाधनैश्च प्रसाधयन्ति, यथा व्यवहरन्ति, यथा विलासान् प्रकटयन्ति, यथा चेष्टन्ते, यथा च सूक्तीर्विरचयन्ति, तथैवाऽन्यदेशीयाः रमण्यस्ता अनुसरन्ति[५७]।

प्राचीनकालीनमिदं कान्यकुब्जनगरं वर्तमानकालीनेन कन्नौजनगरेण परिचीयते। फर्रुखाबादजनपदे नगरमिदं गङ्गाकालीसरितोः सङ्गमस्थलेऽवस्थितं विद्यते।

## (१२) काम्पिल्यनगरम् -

प्राचीनकाले काम्पिल्यमतिप्रसिद्धं महत्त्वशालि समृद्धञ्च नगरमवर्तत। भासः स्वप्नवासवदत्तनाटके नगरमिदं तस्मिन् प्रसङ्गे ह्युल्लिलेख, यदा वत्सराजोदयनस्य विदूषकः स्वामिनो मनो विनोदयितुं काम्पिल्यनगरस्य तत्रत्यभूमिपालस्य ब्रह्मदत्तस्य च कथामवर्णयत्[५८]।

महाभारतकारेण काम्पिल्यनरेशस्य ब्रह्मदत्तस्य तत्पालितायाश्च पूजकीनाम्न्याश्च चटकायाः कथा वर्णिता[५९]। प्राचीनकाले नगरस्याऽस्य महत्त्वं कविभिः काशीतुल्यमेव प्रतिपादितम्।

महाभारते काम्पिल्यनगरं दक्षिणपञ्चालजनपदस्य राजधानीरूपेण वर्णितमस्ति। द्रुपदं विजित्य द्रोणः पञ्चालजनपदं द्वयोर्भागयोर्विबभाज- उत्तरपञ्चालजनपदो दक्षिणपञ्चालजनपदश्च। उत्तरपञ्चालजनपदमसौ स्वयमधिकृत्य दक्षिणपञ्चालजनपदं द्रुपदायोपजहार। द्रोणेन पराजितः: पराभवपीडितो द्रुपदो दक्षिणपञ्चालजनपदं निवासं व्यदधात् काम्पिल्यनगरञ्च राजधानीमकल्पयत्[६०]।

बौद्धजैनसाहित्यग्रन्थेष्वपि काम्पिल्यनगरस्योल्लेखः प्राचुर्येणोपलभ्यते। चीनदेशवास्तव्येन यात्रिणा ह्वेन्त्सांगमहोदयेनाऽपि स्वकीयभारतयात्रायामिदं नगरमवलोकितं विस्तरशश्च वर्णितम्।

प्राचीनकाम्पिल्यनगरं वर्तमानसमये उत्तरप्रदेशस्य फर्रुखाबाद-जनपदस्थितेन कम्पिलाग्रामेण परिचीयते। अत्रत्यैका प्राचीना समुन्नत-भूमिः (टोला) द्रुपदकोटाभिधानेन लोके प्रथिता। अत्र वृद्धगङ्गासरित्तटे द्रौपदीकुण्डं वर्तते। लोकप्रसिद्धिरियमत्र वर्तते - द्रौपदीधृष्टद्युम्नौ कुण्डादस्मादेव द्रुपदयज्ञकर्मकाण्डावसरे समुत्पन्नौ।

## (१३) काशी -

काशीप्रसङ्गे १२० पृष्ठेऽवलोकनीयम्।

## (१४) किष्किन्धा -

रामायणयुगे दक्षिणभारते किष्किन्धानगरी वानरजातीयजनानां

राजधान्यासीत्। तस्मिन् समये वानरेश्वरो बालिः, लङ्काधिपतेः रावणस्य मित्रं किष्किन्धायाः शासनधुरमवहत्। तस्याऽनुजः सुग्रीवोऽग्रजभयभीतः पर्वते हि ऋष्यमूके न्यवसत्। भासोऽवर्णयत् – किष्किन्धा वनौकसां निवासो विद्यते[६१]।

प्राचीना किष्किन्धानगरी हम्पीनगर (विजयनगर) सन्निकटं तुङ्गभद्रासरित्तटे समवस्थितेन अनागुण्डीग्रामेण परिचीयते। अस्मान्नगराद् दक्षिणपश्चिमतः क्रोशैकविप्रकृष्टान्तरालेन पम्पासरः सुशोभते[६२]। बिलारीनामनगरात् त्रिंशत्क्रोशपारिमितदूरस्थितमिदं सरः सपेटरेलवेस्टेशनतः क्रोशद्वयं वर्तति। ऋष्यमूकपर्वतोऽप्यत्रैव समीपे वर्तति। तुङ्गभद्रा सरित् परिवृत्यैनं पर्वतं प्रवहति। ऋष्यमूकगिरि-तुङ्गभद्रासरितोः परिधिक्षेत्रं चक्रतीर्थमित्युच्यते। अत्राऽनेकानि प्रार्थनामन्दिराणि वर्तन्ते।

## (१५) कुण्डिननगरम् –

कुण्डिननगरं महाराष्ट्रमण्डले विदर्भजनपदस्य राजधान्यवर्तत[६३]। प्राचीनसाहित्ये नगरमिदं कुण्डिनपुराभिधानेनाऽपि वर्णितमुपलभ्यते[६४]। अत्र नगरसम्बन्धिताः नलदमयन्तीति, अजेन्दुमतीति, कृष्णरुक्मिणीति कथा अतितरां प्रसिद्धाः। तासु कथासु विदर्भजनपदस्य राजधानी कुण्डिननगरमेव विद्यते। निषधजनपदाधिपतिर्नलः कुण्डिनपुर-निवासिन्या वैदर्भ्या दमयन्त्या पतिरूपेण वृतः। रघुवंशे कालिदासो हीन्दुमतीस्वयंवरमवर्णयत्। सा विदर्भजनपदराजधानीरूपस्य कुण्डिनपुरस्य निवासिन्यासीत्। कृष्णः कुण्डिनपुरादेव रुक्मिणी-मपजहार। रुक्मिणीजनको भीष्मको नृपतिः स्वसुतां शिशुपालाय प्रदातुमभिललाष।

वर्तमानसमये कुण्डिननगरं कुण्डिनपुरनाम्ना परिचीयते। नगरमिदममरावत्या अशीतिमीलविप्रकृष्टान्तरालवर्ति वर्धासरित्तीरेऽव-स्थितमस्ति। तन्निकटमेवैकस्यामुच्चभूभावम्बिकादेव्याः प्राचीनमन्दिरं

वर्तते। लोकप्रसिद्धिरियमत्रेदृशी, यदस्मादेव मन्दिरात् कृष्णेन सह रुक्मिणी ह्यपससार।

## (१६) कुसुमपुरम् -

प्राचीनसमये कुसुमपुरं सकलजगन्मौलिभूतमतिसमृद्धिशालि राजनीतिशैक्षणिकार्थिकादिव्यापारकेन्द्रभूतं विशालं प्रसिद्धं नगरमवर्तत। अनेकशताब्दिपर्यन्तमिदं पुरं भारतवर्षस्य राजधानीभावमलञ्चकार। नगरमिदं पुष्पपुराभिधानेन पाटलिपुत्राभिधानेन वाऽपि प्रथितं बभूव।

मुद्राराक्षसनाटके कुसुमपुरमेव नाम प्रायशः समुपलभ्यते। परन्तु कुत्रचित् पाटलिपुत्रमप्यवलोक्यते[६५]। इन्दुमतीस्वयंवरप्रसङ्गे रघुवंशे कालिदासो मगधजनपदराजधानीं पुष्पपुरमवर्णयत्[६६]। मल्लिनाथोऽत्र टीकायां पुष्पपुरं पाटलिपुत्रं व्याचख्यौ[६७]।

कुसुमपुरस्य स्थितिर्मगधजनपदे गङ्गाशोणसङ्गमे वर्तते। महाभाष्यकारेण कुसुमपुरं शोणसरित्तटवर्ति प्रोक्तम्[६८]।

भारतवर्षस्येतिहासे कुसुमपुरं मौर्यशुङ्गमित्रगुप्तवंशीयानां सम्राजां महासाम्राज्यानां राजधानीत्वमवाप गौरवान्वितञ्च बभूव। यूनानदेशस्य राजदूतो मेगास्थनीजमहोदयो निजसंस्मरणेषु नगरस्याऽस्य महिमामण्डितं गौरवं समृद्धिशालित्वञ्चाऽवर्णयत्[६९]। प्राचीनसंस्कृतकाव्येष्वस्य नगरस्य कविभिर्महती समृद्धिरभिव्यञ्जिता।

धूर्तविटसंवादभाणे कविना प्रोक्तम् -

नगरपदं कुसुमपुरमेवाऽभिव्यनक्ति[७०]। नगरस्यास्य भवनानि बहुभूमिकान्युत्तुङ्गानि वर्तन्ते। विपणिषु महाजनसम्मर्दवतीषु सर्पविधसामग्र्यो विक्रीयन्ते[७१]।

उपयाभिसारिकायां कुसुमपुरस्य राजमार्गाणां विपणीनामापणानां भवनानां वेश्यालयानां प्रमदानां राज्याधिकारिणां वाहनानां विविधविलासानामित्यादीनां सुविस्तृतानि मनोरमाणि विशदानि च वर्णनानि समुपलभ्यन्ते[७२]। स्वर्गमिवासीदत्रत्या भूमिः। नागरिकाः

सततमुत्सवेष्वानन्दाननुभवन्तः सुगन्धवस्तूनि प्रयुञ्जन्ति स्म। अथ च विविधक्रीडाविलाससुखांश्चोपभुञ्जन्ति स्म[७३]। पाटलिपुत्रस्य वाराङ्गना उज्जयिन्यामप्यवलोक्यन्ते[७४]।

राजशेखरः कुसुमपुरं विद्यायाः महाकेन्द्रं जगाद। महतां विदुषां परीक्षाऽत्र समभवत्। अस्मिन्नगरे वर्षोपवर्षपाणिनिपिङ्गलव्याडिवररुचि-पतञ्जलिसदृशानां विदुषां मनीषिणां परीक्षा बभूव[७५]।

पाटलिपुत्रे कलाकुशलाः जनाः न्यवसन्। अत्रत्याः कलामर्मज्ञा अन्यान्यपि स्थानान्याजीविकायै गच्छन्ति स्म। संवाहको नाम मर्दन-कलामर्गज्ञः सम्मर्दकः कुतूहलवशतः पाटलिपुत्रादुज्जयिनीं समाजगाम[७६]।

पाटलिपुत्रस्य स्थापना मगधसम्राजाऽजातशत्रुणा विहिता। पूर्वं तावदस्य मगधजनपदस्य राजधानी राजगृहमवर्तत। गङ्गाया उत्तरवर्तिनो बज्जिगणराज्यस्याऽऽक्रमणेभ्यो मगधजनपदं रक्षणायाऽजातशत्रुः ४८० ई० पू० संवत्सरे गङ्गाशोणसङ्गमे सैन्यस्कन्धावारेण सह नगरमेन-मस्थापयत्[७७]। पूर्वं तावदत्र गङ्गाशोणसङ्गमे पाटलिर्नाम ग्रामोऽवर्तत। पाटलपादपानां बाहुल्यात् ग्रामोऽयं पाटलिरिति नाम लेभे। अज्ञातशत्रुश्च तत्र मृन्मयदुर्गनिर्माणमकारयत्। तदनन्तर अजातशत्रुसुतेन उदायिना पाटलिपुत्रनगरं सुव्यस्थितं कृत्वा राजधानीरूपेण संस्कारितम्।

उत्तरवर्तिनि काले मौर्यवंशीयानां महीपालानां सुप्रतिष्ठितां सुप्रसिद्धां राजधानीमिमां पाटलिपुत्रनगरीं यवनराजदूतो मेगास्थनीजमहोदयो निजसंस्मरणेषु विस्तरेणाऽवर्णयत्।

ख्रिष्टस्य षष्ठशताब्दिपर्यन्तं पाटलिपुत्रं (कुसुमपुरम्) महतीं प्रतिष्ठां प्राप्य विशालमगधसाम्राज्यस्य राजधानीपदमलञ्चक्रे। मागधसाम्राज्ये हीनताङ्गते पाटलिपुत्रस्य प्रतिष्ठाऽपि क्षीणा बभूव। फाहियान-समयेऽतिसमृद्धं सुव्यव्यस्थितं सुप्रतिष्ठितञ्चेदं नगरं ह्वेन्त्सांगमहोदयस्य भारतयात्रासमयेऽतिक्षीणं महत्त्व हीनञ्चाऽवलोक्यते स्म।

प्राचीनकालीनं पाटलिपुत्रं कुसुमपुरं वा नगरं वर्तमान-

पटनानगररूपेण परिचीयते। प्राचीनविवरणान्यनुसृत्य कुसुमपुरस्य स्थितिर्गङ्गाशोणसङ्गमेऽवर्तत। परन्तु वर्तमानसमये पटनानगरं संगमस्थानादस्मात् ५०-६० मीलविप्रकृष्टान्तरालेन पश्चिमदिशि स्थितमस्ति। दीर्घकालावधावस्मिन् नगरेणैतेन स्थितिः परिवर्तिता अथवा गङ्गाशोणसरितो धारामार्गेण परिवर्तनं विहितम्।

कुसुमपुरं पाटलिपुत्रञ्चेत्यभिधानविषयेऽपि विद्वद्भिः समीक्षकैर्विचारविमर्शो विहितः। शकुन्तलारावशास्त्रिमहोदयस्य विचारो वर्तते -

समग्रं विशालं नगरं वाटलिपुत्राभिधानेन ज्ञायते स्म। अथ च तस्यैको भागः कुसुमपुरमासीत्। नगरस्य मध्यभागे, यत्र राजप्रासादादीनां स्थितिरासील्लोके तत्क्षेत्रं कुसुमपुरनाम्ना प्रथितं बभूव[७८]।

## (१७) कौशाम्बी -

प्राचीनकाले कौशाम्बीनाम्नी नगरी वत्सजनपदस्य राजधानी रूपेण लोके प्रथिता बभूव[७९]। उदयनकथासम्बद्धेषु नाटकेषु कौशाम्बी कविभिर्विस्तरेण वर्णिता। नीलगजकपटमायया निगृहीते सत्युदयने चण्डप्रद्योतेन ह्युज्जयिन्याः, सालङ्कायनो हंसकमुवाच -

गच्छ ! वृत्तमेतञ्च कौशाम्बीं गत्वा यौगन्धरायणाय ब्रूहि[८०]।

प्राचीनसमये कौशाम्बीनगरी वत्सजनपदस्य राजधानी चाऽवर्तत। अथ चेयं पुरी व्यारिककेन्द्रमपि महदवर्तत। साकेतश्रावस्तीप्रतिष्ठान-पुरादिसुप्रसिद्धनगराणि गन्तुमियं कौशाम्बी व्यापारमार्गाणां प्रमुखं मध्यवर्ति केन्द्रमवर्तत[८१]। पुराणेषु कथेयं प्रसिद्धा -

गङ्गासरितो महता जलसम्प्लवेन प्रवाहिते हस्तिनापुरे पाण्डववंशीयो नृपतिर्नृचक्षुः (युधिष्ठरात् सप्तमः सन्ततिक्रमः) तत्स्थानं परित्यज्य वत्सजनपदं समागत्य कौशाम्बीं निजवंशराजधानीञ्चक्रे[८२]। वंशस्याऽस्य षड्विंशतिसन्ततिक्रमे ह्युदयनः सञ्जातः।

कौशाम्बीनगरी गङ्गायमुनासङ्गमस्थलात् ३२ मीलविप्र-

कृष्टान्तरालेन पश्चिमदिशि यमुनासरित्तीरवर्तिन्यासीत्। वर्तमानकालेऽपि तस्या अवशेषरूपेण कोसमो नाम ग्रामो वर्तते। ऐतिहासिकैः पुरातत्त्वविद्भिश्चाऽत्र प्रभूतं खननकार्यं विहितम्। खननकार्येण समुपलब्धैरनेकैरवशेषैः सह प्राचीनदुर्गस्याऽपि भग्नावशेषास्तैः सम्प्राप्ताः।

**(१८) चम्पा -**

मुरारिणा चम्पानगरी गौडजनपदस्य राजधानी लिखिता[८३]। राजशेखरो नगरीमेनामङ्गजनपदस्य राजधानीं जगाद[८४]। बौद्धसाहित्ये चम्पानगरी ह्यङ्गजनपदस्यैव राजधानी वर्णिताऽस्ति[८५]। सम्भवतो मुरारिसमये गौडजनपदोऽङ्गजनपदश्च द्वावेवैकशासनान्तर्गताववर्तेताम्। गौडजनपदाधिपतिः केषुचित् समयेषु चम्पां राजधानीं कृत्वा तत्र न्यवसत्। अत एव मुरारिश्चम्पां गौडजनपदराजधानीं लिलेख। नगर्या अस्याः स्थापना पृथुलाससुतेन चम्पेन कारिता[८६]।

महाभारतकाले कर्णस्य हेतोरपि चम्पायाः प्रसिद्धिरभवत्। दुर्योधनः कर्णमङ्गजनपदराज्याधिकारेऽभिषिषेच। अस्य जनपदस्य राजधानी चम्पा ह्यासीत्। अत्र महाभारतीया कथा वर्तते -

मगधाधिपो जरासन्धो दुर्योधनस्यानुरोधं सम्मान्य चम्पां कर्णाय समार्पयत्[८७]।

वर्तमानसमये चम्पापुरीसन्निकटे पर्वतमेकं जनाः कर्णमठं कथयन्ति। अतोऽस्य सम्बन्धः महाभारतयुद्धस्य महावीरेण कर्णेन सम्भाव्यते।

जैनतीर्थेष्वपि चम्पायाः गणना विधीयते। जैनग्रन्थे विविध-तीर्थकल्पे वर्णनमुपलभ्यते -

द्वादशतीर्थङ्करो वासुपूज्यश्चम्पायां जन्म लेभे।

प्राचीनसाहित्ये वर्णनानि सन्ति - चम्पायाः नागरिकैर्महासाहस-शौर्यसम्भृतानि कार्याणि सम्पादितानि। ख्रिष्टस्य द्वितीयशताब्द्यां कैश्चिच्चम्पानिवासिभिर्वीरैः पारं समुद्रे वर्तमानहिन्दचीनदेशस्याऽनाम-

प्रान्ते ह्युपनिवेशोऽपि स्थापितः स च चम्पाभिधानेन प्रथिताङ्गतः। अत्रत्यो भारतीयो राजा श्रीमान् महोदयश्चीनदेशस्येतिहासे प्रसिद्धो बभूव।

प्राचीनचम्पानगरी वर्तमानचम्पापुरेण परिचीयते। नगरमिदं वर्तमानबिहारप्रदेशस्य भागलपुरनगरात् प्रतीच्यां चतुर्मीलविप्रकृष्टान्तरालेन गङ्गातटे समवस्थितमस्ति। अत्र चम्पानाम्नी क्षुद्रनदी गङ्गायां सम्मिलनं प्राप्नोति।

**(१९) द्वारका –**

द्वारका द्वारावती वा नगरी भगवतः कृष्णस्य राजधानीरूपेण प्राचीनेतिहासे महामहिमामयी प्रसिद्धा वर्तते। भट्टनारायणेन[८८] कुलशेखरेण[८९] च स्वनाट्यकृतिषु द्वारकाया उल्लेखो विहितः। पुराणेषु द्वारका सप्तमोक्षदासु पुरीषु परिगण्यते[९०]।

महाभारतीया कथा प्रसिद्धा –

मगधराजस्य जरासन्धस्य सततमाक्रमणैस्त्रस्तो वासुदेवः स्वात्मरक्षायै मथुरां परित्यज्य सौराष्ट्रजनपदं समागत्य द्वारकां राजधानीञ्चकार। पुराणेषु प्रसिद्धिरस्ति –

द्वारकायाः निर्मितिर्विश्वकर्मणा देवस्थपतिना समुद्रस्य मध्ये एकस्मिन् द्वीपे कृता। महाभारतस्य सभापर्वणि अष्टात्रिंशत्तमेऽध्याये द्वारकायाः समृद्धिर्महर्षिणा व्यासेनातिविस्तरेण प्रकटिता।

प्राचीनद्वारकानगरी वर्तमानसमये सौराष्ट्रराज्ये विद्यमानया द्वारकया परिचीयते। परन्त्वनेकेषां समीक्षकाणामितिहासहविदां मते सन्दिग्धमस्त्येतन्मन्तव्यं यदियमेव सा प्राचीनद्वारका। महाभारते पुराणेषु च वर्णनानि समुपलभ्यन्ते, यद् यादवविनाशानन्तरं समुद्रो द्वारकां प्रावाहयत्[९१]।

**(२०) पद्मनगरम् –**

पादताडितकभाणे पद्मनगरस्योलेखः श्यामिलकेन विहितः।

उज्जयिन्याः दयितविष्णुरभिधानो विटः पद्मनगरे शत्रूणां बाणान् सेहे[९२]। नगरमिदं पूर्वावन्त्यामवर्तत। वर्तमानसमये नगरस्याऽस्य व्यवस्थितिः मध्यप्रदेशे पौन्नारनगरेण परिचीयते।

पुराणेषु नासिकाभिधानं नगरं पद्मनगरनाम्नाऽपि प्रोक्तम्। नगरमेतत् सत्ययुगे पद्मनगरनाम्ना, त्रेतायुगे त्रिकण्टकनाम्ना, द्वापरयुगे जनस्स्थाननाम्ना कलियुगे च नासिकाभिधानेन लोके प्रथितं बभूव[९३]।

## (२१) पद्मपुरम् -

भवभूतिः स्वात्मानं पद्मपुरनिवासिनं लिलेख। नगरमिदं दक्षिणापथवर्त्यासीत्[९४]। महावीरचरितटीकायां राघवभट्टो नगरमिदं शरावतीदक्षिणतो निर्दिदेश[९५]। प्राचीनटीकाकारयोस्त्रिपुरारिजगद्धरयोः कथनमस्ति यन्मालतीमाधवप्रकरणस्य घटनाक्षेत्रं पद्मपुरमेव वर्तते। आधुनिकसमीक्षकैरितिहासविद्भिश्च पद्मपुरस्य स्थितिर्विस्तरेण समीक्षिता। अत्र जनरल कनिंघमहोदयस्य मन्तव्यं वर्तते -

ग्वालियरसन्निकटं सिन्धुसरिस्तस्तटे नरवरं नाम स्थानं प्राचीन-समये पद्मावती ज्ञायते स्म। स्थानमिदं पद्मपुरमित्यभिधानेनाऽपि प्रसिद्धं बभूव।

मिराशीमहोदयेन पद्मावती तु ग्वालियरक्षेत्रान्तर्गतैव सम्मता, परन्तु भवभूतिनिवासस्थानाद् भिन्ना प्रोक्ता। तस्य मन्तव्यं वर्तते -

विदर्भप्रान्तस्य भण्डाराजनपदस्य आमाभिधानग्रामात् २३ मील विप्रकृष्टान्तरालवर्ती पद्मपुरग्रामो वर्तते। अयमेव ग्रामो भवभूतेर्निवासो-ऽवर्तत। पद्मपुरञ्च तदेव बभूव। अस्मात् स्थानात् केचन प्राचीनावशेषाः पुरातत्त्वविद्भिः समुपलब्धाः[९६]। ग्रामस्याऽस्य सन्निकटमेवैकः पर्वतको भवभूतिटोरियेति कथ्यते। भवभूतिस्मृत्यामत्र जना अद्याऽपि उत्सवमायो-जयन्ति।

मिराशशीमहोदयस्य कथनं काणेमहोदयेन भण्डारकरमहोदयेन च खण्डितम्। काणेमहोदयस्य वक्तव्यमस्ति -

विदर्भजनपदे न केवलमिदमेवैकं पद्मपुरं वर्तते, अपितु पञ्चाऽन्यान्यपि पद्मपुराणि वर्तन्ते। सर्वेष्वेव स्थानेषु खननकार्यं विधाय सम्प्रातानामवशेषाणां तुलनात्मकमध्ययनं विधेयम्। तदनुसारेणैव भवभूतेर्जन्मस्थानं निश्चेतुं शक्यम्[९७]।

भण्डारमहोदयस्याऽप्यत्र वक्तव्यं विद्यते -

भवभूतेर्जन्मस्थानं नागपुरक्षेत्रे चन्द्रपुरसन्निकटं बांदासमीपं वा कुत्रचित् सम्भावनीयम्। अत्रैव पद्मपुरमप्यासीत्। अत्र वर्तमानकालेऽपि केचन कृष्णयजुर्वेदीयास्तैत्तिरीयशाखाध्यायिनो महाराष्ट्रीयाः ब्राह्मणाःनिवसन्ति[९८]।

## (२२) पद्मावती -

मालतीमाधवप्रकरणस्य घटनाचक्रस्य क्षेत्रं वर्तते - पद्मावती नगरी। मालत्याः जनको भूरिवसुः पद्मावतीश्वरस्य सचिवोऽवर्तत। नगरीयं नर्मदासिन्धुसरितोः सङ्गमेऽवस्थिता वर्णिता। माधवो मकरन्दं ब्रवीति -

"सङ्गमेऽस्मिन् स्नात्वा नगरीं प्रविशाव"[९९]।

आप्टेमहोदयो वर्तमानग्वालियरक्षेत्रे नरवर (नलपुर) मेव पद्मावतीं मनुते। तस्य वचांसि वर्तन्ते -

नरवरसमीपमेव पार्वती (पारा) लवणा (लूना) मधुमती च सरितः प्रवहन्ति। याश्च मालतीमाधवप्रकरणे कविना पार्वतीलवणा-मधुमत्यः सूचिताः[१००]।

केचन विद्वांसो नरवरस्थानात् २५ मीलविप्रकृष्टान्तरालेन पदमपंवायाग्राममेव पद्मावतीं प्रवदन्ति[१०१]। प्राचीनसमये स्थानमिदं नागवंशीयानां नरपतीनां राजधान्यासीत्। ख्रीष्टस्य प्रथमशताब्द्या आरभ्य अष्टमशताब्दिपर्यन्तमत्र नागवंशीयानां नरपतीनामवशेषाः समुपलभ्यन्ते। अत्राऽनेकाः मुद्रा अपि पुरातत्त्वविद्भिः समुपलब्धाः। एकमतिविशालं भग्नावशिष्टं भवनमप्यस्ति। विष्णुपुराणे नागवंशीयानां

नृपतीनां वर्णनानि विद्यन्ते[१०२]।

परन्तु यद्यत्र मालतीमाधवप्रकरणैः सहैतेषां विदुषां मन्तव्यानां तुलनात्मकमध्ययनं विधीयते, सङ्गतिर्वा स्थाप्यते, द्वे अपि स्थाने भवभूतिप्रोक्तां पद्मावतीं नगरीं न द्योतयतः। प्रकरणस्यैतस्य वर्णनैः प्रतीयते, यत् पद्मावती पुरी कुत्रचित् केरलप्रदेशे सम्भावनीया। नगर्या अस्याः उद्यानेषु पूगपादपास्ताम्बूतलताभिराश्लिष्टाः शोभन्ते। तत्रत्यानां वधूनां कपोलास्ताम्बूलपत्राणीव पाण्डुवर्णाः सन्ति[१०३]। पूगपादपास्ताम्बूल-लताश्च केरलप्रदेशे प्राचुर्येण समुद्भवन्ति।

## (२३) पाटलिपुत्रम् -

पाटलिपुत्रस्य वर्णनं कुसुमपुरप्रसङ्गे २१३ पुष्ठेऽवलोकनीयम्।

## (२४) प्रतिष्ठानपुरम् -

कालिदासेन वर्णितम् -

पुरूरवसो राजधानी प्रतिष्ठानपुरमवर्तत। तस्य राजभवन नगरेऽस्मिन् सर्वेषु भवनेषु महत्तमं गङ्गायमुनयोः सङ्गमे निर्मितमवर्तत[१०४]।

वर्तमानसमये प्राचीनप्रतिष्ठानपुरं गङ्गायाः परे पारेऽवस्थितेन झूसीग्रामेण परिचीयते[१०५]। महाभारते प्रतिष्ठानेन सह प्रतिष्ठानपुरस्याऽपि वर्णनमस्ति[१०६]। सर्वासु तीर्थयात्रासु प्रतिष्ठानपुरयात्रा प्रतिष्ठिता मता[१०७]।

## (२५) प्रयागः -

अतिप्राचीनकालादेव प्रयागः पवित्रतीर्थरूपेण प्रसिद्धो वर्तते। उत्तर-वर्तिनि काले प्रयागोऽयं तीर्थस्थानं नगररूपेणाऽपि विकसितो बभूव। अस्य स्थितिर्गङ्गायमुनयोर्मध्यवर्तिनि प्रदेशे सङ्गमस्थले वर्तते। अत्रत्यः श्यामवटः श्रद्धासम्भृतहृदयानां भक्तजनानां सर्वानेव मनोऽभिलाषान् पूरयति[१०८]। उत्तरस्यां दिशि भगवतीं भागीरथीमुत्तीर्य प्रयागं जनाः प्रविशन्ति। अथ यमुनामुत्तीर्य दक्षिणदिग्गामी मार्गो वर्तते[१०९]।

भारतीयजनानां हृदयेषु प्रयागतीर्थस्य महन्महात्म्यं प्रतिष्ठितम्

वर्तते। भक्तजनाश्चैनं प्रति श्रद्धधति। अत्र प्राचीनकाले तपस्विनां तपोवनान्यासन्। जनानां हृदयेषु विश्वासा आसन्, यदस्मिन् सङ्गमे स्नानं सकलान् पापान् कल्मषाश्च प्रक्षालयति। अत्र प्राणानां परित्यागोऽपि महापुण्यशाली वर्तते। तापसवत्सराजनाटके प्रयागतीर्थस्य प्रशंसा कविना निम्नप्रकारेण कीर्तिता –

अत्र गङ्गायमुनयोः सङ्गमो वर्तते। मुनिजना अत्र स्वाभीष्टसिद्धीः प्राप्नुवन्ति। अत्र स्नानेन पापिनोऽपि जनाः पवित्रीभवन्ति[११०]।

अन्यैरपि कविभिः प्रयागतीर्थस्य प्रशंसा सार्थकैः पदैर्विहिता। सङ्गमोऽयं मनसां शान्तिदायकः[१११]। अत्र स्नानेन प्राणानां परित्यागेन च मनुष्याः देवभावं प्राप्य इन्द्रासनस्याऽधिकारिणो भवन्ति[११२]। प्रयागतीर्थस्य पुण्यशालिता कविभिरनेकैरभिव्यञ्जिता। कालिदासेन कीर्तितम् –

गङ्गायमुनयोः सङ्गमस्याऽनुपसौन्दर्यदर्शनं परमानन्दं जनयति। शरीरत्यागदत्र तत्त्वज्ञानं विनाऽपि मोक्षोऽधिगम्यते[११३]।

मुरारिरपि प्रयागतीर्थमतितरां प्रशशंस। अन्तर्वेद्यां स्थितेऽस्मिन् तीर्थे कृष्णवर्णा यमुना गौरवर्णया गङ्गया सङ्गता। सङ्गमोऽयं प्रयागाभिधानेन प्रसिद्धो बभूव। सर्वेषु तीर्थेष्विदं तीर्थं महत्तमं वर्तते[११४]।

गङ्गायमुनयोः सङ्गमो वर्तमानसमयेऽपि प्रयागनाम्ना लोके प्रथितः। अत्र नगरमिदमिलाहाबादाभिधानमपि विकसितं बभूव। लोके कथा प्रसिद्धा वर्तते –

पुरुवंशीयस्य नरपतेः पुरूरवसः पितराविलाबुधावास्ताम्। तत्र तयोर्निवासस्थानमिदमिलानाम्ना इलावासाभिधानेन प्रसिद्धिमवाप। मुसलिमशासनकाले नगरेणाऽनेन राजनीतिकमहत्त्वमधिगतम्। तदनन्तरं सम्राडकबरशाहो नगरमिदमिलाहाबादनाम्ना विभूषितञ्चकार।

प्रयागे प्रतिद्वादशवर्षं कुम्भमेलापकमायोज्यते। माघमासेऽत्र भक्तजनाः गङ्गावासेन प्रतिदिनञ्च गङ्गास्नानेन महापुण्यशालिनो

भवन्ति।

प्राचीनभारतीयसाहित्ये लोके च गङ्गायमुनासरस्वतीनां तिसृणां सरितां सङ्गमस्य कल्पना प्रथिताऽस्ति। अतोऽयं प्रयागस्त्रिवेणीनाम्नाऽपि प्रसिद्धो बभूव। परं वर्तमानसमयेऽत्र गङ्गायमुनयोर्द्वयोरेव सरितोः सङ्गमो दृष्टिगोचरो भवति। सरस्वतीसरित्तु किलाऽदृश्यैवाऽस्ति। अस्मिन् सम्बन्धे तत्र स्थितानां तीर्थपुरोहितानां मन्तव्यमस्ति -

अत्र सरस्वती सरित् प्राचीनकाले प्रकटरूपेण विद्यमाना दृष्टिगोचरीभवति स्म। परन्त्वधुनाऽस्या अस्तित्त्वं सुगुप्तमेव वर्तते।

परन्तु प्रयागेऽत्र तिसृणां सरितां स्थितिवर्णनानि न प्राचीन साहित्येऽपि सामान्यतो समुपलभ्यन्ते। रामायणे[११५] महाभारते[११६] चाऽप्यत्र द्वयोरेव सरितोर्गङ्गायमुनयोः सङ्गमस्य वर्णनानि सन्ति। कालिदास-दिकविभिरपि गङ्गायमुनयोरेव द्वयोः सरितोः सङ्गमः प्रोक्तः[११७]। सम्भवतो नदीत्रयस्य कल्पना नाऽतिप्राचीना। सङ्गमस्य त्रिवेणीति-नामकरणस्य समाधानमेवमपि सम्भवति -

(१) गङ्गा
(२) यमुना
(३) गङ्गायमुनयोश्च सम्मिलिता धारा।

## (२६) भर्तृस्थानम् -

श्यामिलकः शिविजनपदनिवासिनो विटस्यैकस्योपस्थितिं सार्वभौमनगरे (उज्जयिन्याम्) अवर्णयत्। विटोऽयं भर्तृस्थाने निवसन् वृद्धत्वमवाप[११८]। अत्र वासुदेवशरणाग्रवालस्य मन्तव्यमस्ति -

भर्तृस्थानेन कवेरभिप्रायो मुलताननगरं वर्तते। भर्तृपदस्यार्थो विद्यते - प्रभुः स्वामी वा। सूर्यस्यैकः पर्यायवाची शब्दो विद्यते - इनः। इनपदस्याऽप्यर्थो भवति - स्वामी। इनपदस्य स्वाम्यर्थत्वात् (इनकान्त = सूर्यकान्त) भर्तृपदं सूर्यमपि सूचयति। एवं पर्यायेण भर्तृस्थानपदस्यार्थो विद्यते - सूर्यस्थानं सूर्यमन्दिरं वा।

प्राचीनसमये मुलताननगरस्थं सूर्यमन्दिरं सुप्रसिद्धं गौरवान्वितञ्चाऽऽसीत्। शिविजनपदस्य शिविपुर (शेरकोट) नगरान्मुलताननगरं केवलं पञ्चाशन्मीलमात्रविप्रकृष्टान्तरालवर्ति वर्तते। अतः शिविपुरनिवासिनो विटस्य भर्तृस्थाने (मुलताननगरे) वसतिः स्वाभाविकी सम्भावनीया[११९]।

## (२७) मथुरा –

रामायणकालेऽपि मथुरानगरी प्रसिद्धा गौरवान्विता चाऽवर्तत। प्राचीनपरम्पराः प्रसिद्धाः सन्ति, यदियं नगरी रामानुजेन शत्रुघ्नेन लवणासुरं निहत्य स्थापिता। यमुनातीरे मधुवनं छित्त्वा भूमिञ्च परिष्कृत्य स्थापिता नगरीयं मथुरा( मधुरा) नाम्ना लोके प्रथिता बभूव[१२०]।

पुराणेषु कथेयं प्रसिद्धा यल्लवणासुरस्य जनको मधुनामकोऽसुरो बभूव। पुत्रं मृतमवलोक्याऽसावतिशोकाकुलोऽवर्तत। तस्यैवाऽसुरराजस्य नाम्ना नगरीयं मधुरा (मथुरा) लोके प्रसिद्धिङ्गता। शत्रुघ्नो लवणासुरं निहत्य कालेन विभ्रष्टां नगरीमेनां पुनरपि व्यवस्थितामकारयत्।

मथुरानगर्याः बहुभिः प्राचीनसाहित्यकारैरुल्लेखः स्वकृतिषु विहितः। भवभूतिर्मथुरानिवासिनो जनान् माथुरान् लिखति[१२१]। शक्तिभद्रोऽपि नगरीमेनां मधुरां नगरीश्वरञ्च माधुरं सूचयति[१२२]। कौमुदीमहोत्सवनाटकस्य नायिका कीर्तिमती मथुरानिवासिनी राजसुताऽवर्तत। नगरीयं शूरसेनजनपदस्य राजधान्यासीत्[१२३]। महाभारतवर्णनैरपि मथुरानगर्याः शूरसेनजनपदराजधानीभावः सूच्यते।

मथुरानगरी भगवतः कृष्णस्य जन्मभूमिरासीत्। अतोऽनया प्रभूतं यशो गौरवञ्चाऽर्जितम्। स्वमातामहं शूरसेनं निहत्य कंसो जनपदमेनं शौरसेनमधिचक्रे। तदन्तरं भगिनीं देवकीं भगिनीपतिं वसुदेवञ्चाऽपि कारागारेऽसौ न्यक्षिपत्। कंसं हन्तुमेव कृष्णो देवकीगर्भाज्जन्म लेभे[१२४]। भासेन बालचरितनाटके मथुरानगर्याः कारागृहे कृष्णस्य प्रादुर्भावस्य, तस्माच्च स्थानाद् गोकुलग्रामगमनस्य कथा वर्णिता[१२५]। बालवयसि

कृष्णः कंसं जघान। तदनन्तरं मगधाधिपस्य जरासन्धस्य सततमाक्रमणेभ्यस्त्रस्तो मथुरां परित्यज्य द्वारकां जगाम।

प्राचीनकालीना यमुनातटवर्तिनी मथुरा नगरी वर्तमानकालीना मथुरेति परिचीयते। इयं दिल्लीनगरादशीतिमीलमात्रविप्रकृष्टान्तरालवर्तिनी यमुनातीरेऽवस्थिता वर्तते। भारतीयानां हृदयेषु मनस्सु च मथुरानगर्याः धार्मिकराजनीतिकार्थिकमहत्त्वमतितरां वर्तते। पुराणकाराः नगरीमेनां मोक्षदायिकासु सप्तनगरीषु परिगणयन्ति[१२६]।

मथुरामधिकर्तुमनेकैराक्रमणकारिभिराक्रमणाणि संयोजितानि। कुषाणाः मथुराधिकृत्यैनां राजधानीं कृत्वा समुन्नतां सुसमृद्धाञ्च व्यदधुः। हूणजातीया आक्रमणकारिणो मोहम्मदीयाश्चाऽऽक्रान्तारो नगरीमेनामनेकशो लुलुण्ठुः नष्टभ्रष्टाञ्च चक्रुः।

मथुरायां कृष्णजन्मभूमिस्थाने सुविशालं सुरम्यं समुत्कृष्टकलासम्पन्नं कृष्णमन्दिरमवर्तत। औरगंजेबो मुगलवंशीयः सम्राड् मन्दिरमेनं भङ्क्त्वा मसजिदस्य निर्मितिमकारयत्। मसजिदोऽयमद्याऽपि तिष्ठति। औरंगजेबेन नगर्या अस्याः नामाऽपि परिवर्त्य इसलामाबाद इति कृतम्। परन्तु न तन्नाम प्रचलितं बभूव। अद्यापि नगरीयं मथुराभिधानेनैव कीर्त्यते।

## (२८) महोदयपुरम् -

कुलशेखरवर्मणा महोदयपुरस्योल्लेखो विहितः। नगरमिदं केरलजनपदस्य राजधान्यवर्तत। वर्तमानसमये महोदयपुरं केरलजनपदस्थिततिरुवच्चिकलनगरेण परिचीयते[१२७]। पञ्चालजनपदे प्राचीनकाले कान्यकुब्जनगरमपि महोदयपुरनाम्ना ज्ञायते स्म[१२८]। परं कुलशेखरवर्णितं महोदयपुरं केरलजनपदवर्त्येव बभूव।

## (२९) माहिष्मती -

मध्यभारतेऽवन्तिजनपदे माहिष्मती नगरी नर्मदातीरवर्तिन्यवर्तत[१२९]। प्राचीनकाले नगरीयं हैहयवंशीयस्य महीपालस्य

कार्तवीर्यार्जुनस्य राजधानी बभूव[१३०]। कथेयं पुराणेषु प्रसिद्धा यत् कार्तवीर्यार्जुनो निजभुजसहस्रेण नर्मदासरित्प्रवाहमवरुरोध।

मुरारिणा महिष्मती नगरी चेदिमण्डलस्य राजधानी प्रोक्ता। तस्मिन् कालेऽत्र कल्चुरिवंशीयानां नरपतीनां शासनमविद्यत[१३१]। राजशेखरसमयेऽप्यत्र कल्चुरिवंशीया एव राजानः प्रजा अपालयन्[१३२]।

महाभारतकाले चेदिमण्डलस्य राजधानी माहिष्मती नगरी बभूव। तस्मिन् युगे तत्र शिशुपालाभिधानो नृपतिः प्रजानां पालनमकरोत्। राजसूययज्ञप्रसङ्गे दिग्विजयाय प्रयातेन सहदेवेनाऽसौ पराजितः।

कालिदासेनेन्दुमतीस्वयंवरप्रसङ्गे नर्मदातटवर्तिन्याः माहिष्मत्याः माहिष्मतीनाथस्य च मनोरमं वर्णनं विहितम्[१३३]। लोकप्रसिद्धिर्वर्तते, यच्छङ्कराचार्यस्य माहिष्मतीनिवासिना मण्डनमिश्रेण सह शास्त्रार्थो बभूव। इतिहासप्रसिद्धाया अहिल्याबाईमहिष्या अन्तिमदिवसाः महिष्मत्यामेव व्यतीयुः। तयाऽत्राऽनेकेषां देवमन्दिराणां घट्टानाञ्च निर्मितिः कारिता।

वर्तमानसमयेऽपि नर्मदातटावस्थितं मानवरानगरं माहेश्वरनगरं वा किल प्राचीनमाहिष्मती नगरी लोके सम्मतम्। स्थानमिदमिन्दौरजनपदे उज्जयिन्याश्चत्वारिंशन्मीलविप्रकृष्टान्तरालेन नर्मदातीरे वर्तते। पश्चिमरेलवेपथे वर्तमानस्य उज्जैन-खण्डवामार्गस्थितस्य बड़वाहा-स्टेशनतोऽस्य नगरस्य स्थितिः पञ्चत्रिंशन्मीलविप्रकृष्टान्तरालवर्तिनी वर्तते।

## (३०) मिथिला –

भगवत्याः जानक्याः जन्मभूमिर्मिथिलानगरी भारतीयसाहित्ये जनजीवने च महतीं कीर्तिं प्रसिद्धिं गौरवञ्चाऽध्यगच्छत्[१३४]। विदेहजनपदराजधान्यामस्यां पुर्यां जनको नाम प्रजानामधिपतिः शासन-धुरमवहत्। अतो जनकपुरीनाम्नाऽपीयं नगरी प्रथिता बभूव।

प्राचीनसाहित्ये मिथिलाविदेहयोरेकत्वमपि कल्पितं लभ्यते।

मिथिलैव विदेहो वर्तते विदेहश्च मिथिलाऽस्ति। राजशेखरो मिथिलां निमिवंशीयानां भूमिपालानां राजधानीं लिलेख[१३५]। पुराणेषु कथा प्रसिद्धा-

महीपतिर्निमिर्जीवन्नेव मोक्षमधिगम्य विदेहनाम्ना प्रसिद्धो बभूव। तस्य नाम्ना नगरीयं जनपदश्चाऽपि विदेहाभिधानेन लोके प्रथितो बभूव[१३६]। मुरारिणा वर्णितम् -

रामस्य विमानं परावर्तमानं मिथिलाया आकाशं प्राप्य मथुरां जगाम[१३७]।

रामायणे महाभारते पुराणेषूपनिषत्सु च विदेहजनपदस्य मिथिलानगर्यास्तत्रत्यजनाधिपस्य चाऽनेकशो वर्णनानि समुपलभ्यन्ते। भाससमये मिथिलाधीशाः शक्तिशालिषु नृपतिष्वग्रगण्या अवर्तन्त। मिथिलाधीश्वरो अवन्तिराजसुतां परिणेतुं प्रास्तौत्। अवन्त्यधिपः प्रद्योतोऽपि प्रस्तावमेनं विममर्श[१३८]।

वर्तमानसमये मिथिलायाः स्थितिः नेपालदेशस्य पूर्ववर्तिनि भागे पर्वतानामुपत्यकासु वर्तते।

## (३१) राजगृहम् -

मगधजनपदस्य राजधानी राजगृहं प्राचीनसमयेऽतिप्रसिद्धं गौरवमयञ्चाऽऽसीत्। महाभारतकारेण वर्णितम् -

युधिष्ठरस्य राजसूयज्ञप्रसङ्गे भीमसेनो मगधाधिपतिं जरासन्धं जघान।

राजगृहं गिरिव्रजनाम्नाऽपि लोके प्रसिद्धमवर्तत। चेदिराजवसोः सुतो बृहद्रथो नगरमिदं प्रास्थापयत्। पञ्चपर्वतैः परिवेष्टितमिदं नगरमतिसुरक्षितं बभूव। नगरस्याऽस्य संक्षिप्तरूपेण परिचयो मगधजनपदप्रसङ्गेऽस्माभिर्वर्णितः।

तापसवत्सराजनाटके कविना राजगृहनगरं वर्णितम्। मगधराजसुतां पद्मावतीं वत्सराजोदयनः परिणीतवान्। अस्य कार्यस्य सफलयोजना वत्सराजस्य महामन्त्रिणा यौगन्धरायणेन

संयोजिता। नाटकेऽस्मिन् वत्सराजो राजगृहं प्रति[१३९] गच्छन्नवलोक्यते। स्वप्नवासवदत्तनाटके भासो मगधजनपद-राजधानीं राजगृहमवर्णयत्[१४०]।

प्राचीनभारतीयेतिहासस्य मानचित्रे मगधजनपदस्य राजधानीरूपेण व्यवस्थितस्य राजगृहस्य स्थितिरतिमहत्त्वशालिन्यवर्तत। परन्तु मगधजनपदाधीश्वरैः पाटलिपुत्रे (कुसुमपुरे) राजधानीरूपेण वयवस्थापिते राजगृहस्य महत्त्वं क्षीणतां गतम्। नन्दवंशीयानां नृपतीनां शासनकाले पाटलिपुत्रनगरमेव मगधजनपदस्य राजधान्यवर्तत।

### (३२) लङ्का –

दशाननस्य रावणस्य राजधानी लङ्कापुरी प्राचीनभारतीयसाहित्ये महन्महत्त्वमध्यगच्छत्। लङ्काजनपदप्रसङ्गेऽस्याः नगर्याः वर्णनमपि विस्तरेण बभूव। लङ्काद्वीपस्य राजधानी लङ्कानाम्ना लोके प्रथिताऽवर्तत।

### (३३) लावणकग्रामः –

प्राचीनभारतीयलोककथासु लावणकाभिधानो ग्रामोऽतिप्रसिद्धो बभूव। ग्रामस्याऽस्य संस्थितिर्वत्सजनपदान्तर्गतैवाऽऽसीदिति सुनिश्चितम्। मृगयाकपटेन वत्सजनपदामात्यो यौगन्धरायणो वत्सराजमुदयनं वनविहाराय लावणकग्राममानिनाय, तत्र च निवासाय पटशिविरमकल्पयत्।

एकस्मिन् दिवसे मृगयाहेतोर्गते वत्सराजे यौगन्धरायणः पटशिविरमग्निदेवाय समार्पयत्। तत्र च तेन किम्वदन्ती प्रसारिता –

"वत्सराजमहिषी वासवदत्ता पटशिविरवैश्वानरे भस्मीभूता"।

वासवदत्तां स्वर्गङ्गतां समुद्घोष्य यौगन्धरायण उदयनस्य मगधराजसुतया पद्मावत्या सह परिणयनार्थमुद्योगान् प्रासारयत्[१४१]।

लावणकग्रामस्य स्थितिर्वर्तमानसमये सुनिश्चितीकरणमतिकठिन-कार्यमवगन्तव्यम् । अत्र विजयेन्द्रकुमारमाथुरमहोदयस्य कथनमस्ति –

लावणनीलनाम्ना नगरेणाऽस्य लावणकग्रामस्य परिचितिः सम्भवा। कनिंघमहोदयेन वर्तमानमुंगेरनगरमेव लावणको ग्रामोऽभिमतः[१४२]।

वर्तमानमुंगेरनगरमेव प्राचीनकालीनो लावणकग्रामोऽवर्ततेति मतस्य स्वीकरणमतिकठिनम्। मुंगेरनगरस्य स्थितिर्वर्तमानपटनानगरादपि सुदूरवर्तिनी पूर्वदिशि गङ्गातटे वर्तते। स्थानमिदं मगधजनपदान्तर्गतं वर्तते। स्वप्नवासवदत्तनाटकघटनावर्णनैः प्रतीयते, यल्लावणकग्रामस्य स्थितिर्वत्सजनपदान्तर्गता मगधजनपदसीमासन्निकटवर्तिनी भवितव्या। अस्मात् स्थानादेव यौगन्धरायणो वासवदत्तया सह पद्मावतीमुपजगाम।

## (३४) वारणावतनगरम् -

महाभारते वारणावतनगरमतिप्रसिद्धं महनीयं तीर्थस्थानमवर्तत। अत्रत्यं शिवमन्दिरं लोकसमादृतं बभूव। अत्रोत्सवाः समायोज्यन्ते स्म। उत्सवमेनमवलोकयितुं पाण्डवाः धृतराष्ट्रस्याऽनुमतिमुपलभ्य वारणावतङ्गताः[१४३]। पाण्डवान् भस्मीकर्तुं दुर्योधनोऽत्र लाक्षागृहस्य निर्माणमकारयत्[१४४]। दुर्योधनेन सह सन्धातुं पाण्डवैर्ये पञ्च ग्रामाः पणरूपेण प्रस्तुतास्तेषु वारणावतग्रामोऽप्येकोऽवर्तत[१४५]।

प्राचीनवारणावतनगरं मेरठजनपदान्तर्गतं बरनालाभिधानेन ग्रामेण परिचीयते। हिन्डनकृष्णासरितोः सङ्गमे स्थितोऽयं ग्रामो मेरठनगरात् पञ्चदशमीलविप्रकृष्टान्तरालवर्ती वर्तते। अत्रैकोच्चभूमिर्वारणावतनाम्ना प्रसिद्धा। अफगानशासनकाले कश्चिन्मोहम्मदीयः साधुरत्र निवासमकल्पयत्। अत्र तस्य समाधिरपि वर्तते। अत्रैका संस्कृतपाठशालाऽपि भक्तजनैः संस्थापिता।

गढ़वालजनपदे ह्युत्तरकाशीसन्निकटं लक्षेश्वरमहादेवाभिधानं शिवदेवायतनमस्ति। अत्र प्राचीनकालीनाः सुदग्धा इष्टिकाः समुपलब्धाः। लोकप्रसिद्धिरत्र वर्तते, यदत्र शिवमन्दिरे समायोजितं

शिवोत्सवमवलोकयितुं पाण्डवाः समागच्छन्, लाक्षागृहे च निवासमकल्पयन्। उत्तरकाशीसमीपस्थितो गिरिरपि वारणावतगिरिनाम्ना प्रसिद्धः।

देहरादूनजनपदे लाखामण्डलस्थाने प्राचीनकालीनं प्रसिद्धं शिवमन्दिरं वर्तते। तत्रैव पाण्डवाः शिवोत्सवमवलोकयितुं समागता इति प्रसिद्धिः। तस्मात् स्थानात् चकरौतानगरं नातिविप्रकृष्टान्तरालवर्ती। तदेव नगरं प्राचीनकालीनो ह्येकचक्राग्रामोऽवर्ततेति प्रसिद्धिः। अत्र भीमो बकासुरं जघानेति महाभारतीया कथा।

## (३५) वाराणसी -

वाराणसीवर्णनं प्रागेण काशीवर्णनप्रसङ्गे १२० पृष्ठेऽवलोकनीयम्।

## (३६) विदिशा -

प्राचीनकालीना प्रसिद्धा विदिशा नगरी कालिदासेन दशार्णजनपदस्य राजधानी प्रोक्ता[१४६]। नगरीयमवन्तिजनपदस्याऽपि राजधानी वर्णिता वर्तते[१४७]।

पुष्पमित्रशासनकालेऽविन्तजनपदस्य राजधानी विदिशाऽवर्तत। तेनाऽत्र स्वपुत्रोऽग्निमित्रः प्रशासकत्वेन नियुक्तः। अग्निमित्रोऽत्रत्येषूद्यानेषु विजहार[१४८]। अत्रैव राजप्रासादेषु तेन मालविका समवलोकिता।

श्यामिलकोऽपि पादताडितकभाणे विदिशामुल्लिलेख। अत्र दयितविष्णुनाम्नो विटस्य भुजौ बाणेन विद्धौ[१४९]। बाणसमये विदिशाऽतिसमृद्धा नगरी राजनीतिकेन्द्रं व्यापारकेन्द्रञ्चाऽवर्तत। कादम्बरीकथायां बाणेन विदिशा शूद्रकनृपतिराजधानीरूपेण वर्णिता। नगरीयं वेत्रवतीसरित्तीरवर्तिन्यासीत्।

रामायणयुगेऽपि विदिशायाः प्रसिद्धिर्लक्ष्यते। बाल्मीकिना सूचितम्-

शत्रुघ्नपुत्रः शत्रुघाती विदिशायाः शासको नियुक्तः[१५०]। प्राचीनकालीना विदिशानगरी वर्तमानमध्यप्रदेशस्थितभिलसानगरेण परिचीयते।

वेत्रवती सरिदधुना बेतवानाम्ना प्रसिद्धा। भोपालनगरादियं नगरी षड्विंशतिमीलविप्रकृष्टान्तरालवर्तिनी पूर्वदिशि वर्तते। विदिशासन्निकटमेव सांचीस्थले मौर्यसम्राडशोको बौद्धस्तूपानां निर्माणमकारयत्।

## (३७) विराटनगरम् -

महाभारतकालीनं विराटनगरमतिप्रसिद्धं विश्रुतकीर्तिरासीत्। तत्र विराटाभिधानो नृपतिः प्रजानां पालनमकरोत्[१५१]। पाण्डवाः स्वाज्ञातवर्षावधिं विराटनगर एव व्यतीयुः।

विराटनगरं मत्स्यजनपदस्य राजधान्यवर्तत। तन्निकटमेवोप्लव्यनगरमासीत्। अत्र विराटस्य महीपालस्य सैन्यस्कन्धावारः प्रतिष्ठितः। अत्रैव स्थित्वा पाण्डवाः दुर्योधनेन सह योद्धुं समरसज्जाः समायोजयन्।

महाभारतयुद्धप्रसङ्गे पाण्डवानवलोकयितुं तेषां मातुलः शल्यो ह्युपप्लव्यनगरं समागच्छत्। मत्स्यजनपदस्योल्लेखः पूर्वमेव जनपदाध्याये सञ्जातः (पृ० १४५)

प्राचीनविराटनगरं वर्तमान बैरतनगरेण परिचीयते। जयपुरनगरादिदं नगरं चत्वरिंशन्मीलविप्रकृष्टान्तराले ह्युत्तरदिशि वर्तते।

## (३८) वैरन्त्यनगरम् -

अविमारकनाटके भासो वैरन्त्यनगरमुल्लिलेख। अस्य नाटकस्य घटनाचक्रस्य पृष्ठभूमौ वैरन्त्यनगरं वर्तते। नायिकायाः कुरङ्ग्याः जनकस्य कुन्तिभोजस्य राजधानी वैरन्त्यनगरमासीत्। हर्षचरिते बाणेन राज्ञो रन्तिदेवस्य राजधानी वैरन्त्यनगरं प्रोक्तम्।

वैरन्त्यपरिज्ञानं समीक्षकैर्न याथार्थ्येनोपलब्धम्। अत्र विजयेन्द्रकुमारमाथुरमहोदयेन सूचितम् -

वैरन्त्यनगरं चर्मण्वती सरित्सहायिकाया अश्वनद्यास्तटवर्ति भवितव्यम्। भोजाभिधानेनाऽपि नगरमिदं लोके प्रसिद्धमभवत्।

## (३९) व्याधकिष्किन्धा –

कौमुदीमहोत्सवनाटके व्याधकिष्किन्धास्थानस्य वर्णनमुपलभ्यते। दुर्गरूपं स्थानमिदं विन्ध्यवासिन्याः चण्डिकायतनमन्दिरस्य सन्निकटमासीत्। व्याधनाम्नैव दुर्गस्याऽस्य स्थितिः विन्ध्यगिरिश्रेण्यन्तगर्ता सम्भावनीया। अत्र व्याधजातिर्न्यवसत्। स्थानमिदं वर्तमानमिर्जापुरनगरसन्निकटं क्वचिद् भवितेति कल्पना समुचिता।

किष्किन्धानाम्ना द्वे स्थाने परिचीयेते। एका किष्किन्धा तु दक्षिणभारते धारवाड़जनपदे वर्तते। इयं वेलारीसन्निकटं विजयनगरान्मीलत्रयविप्रकृष्टान्तरालेन तुङ्गभद्रासरित्तटवर्तिनी वतते। तस्याः दक्षिणपश्चिमतो मीलद्वयविप्रकृष्टान्तरालेन पम्पासरः सुशोभते। द्वितीया किष्किन्धा दक्षिणभारतवर्तिन्येव निम्बापुर्यामस्ति।

परन्तु द्वे एवेमे किष्किन्धे बिज्जिकावर्णितायाः किष्किन्धायाः पृथगेवाऽवगन्तव्ये। व्याधकिष्किन्धेयं दुर्गरूपा विन्ध्यवासिनीदेवायतनसन्निकटमेवाऽवर्तत। अथ च मथुरातोऽपि नाऽस्या अतिविप्रकृष्टता कल्पयितुं शक्या। मथुरायाः राजसुता कीर्तिमती पादाभ्यामेव चलन्ती देवीपूजनायाऽत्र समायाता। समीपमेव विन्ध्यवने जाबाल्याश्रमोऽपि तत्राऽवस्थितो बभूव। अतो व्याधकिष्किन्धादुर्गं मिर्जापुरसन्निकटमेव क्वचिदवस्थितमासीदिति सम्भावनीयम्।

## (४०) शृङ्गवेरपुरम् –

रामायणकथायां शृङ्गवेरपुरमतिमहत्त्वशालि गौरवान्वितं स्थानं वतते। नगरीयं निषादराजस्य गुहस्य राजधान्यासीत्। रामवनगमनावसरे सुमन्त्रो रथारूढं रामं शृङ्गवेरपुरमानिनाय। अत्राऽसौ रामोऽयोध्यां प्रत्युन्मुखीभूय जनकाय महाराजदशरथाय सन्देशं प्रेषयितुमुपक्रमं व्यदधात्। तदनन्तरं निषादराजो गुहो रामं सीतया लक्ष्मणेन च सह गङ्गायाः पारं निनाय।

वर्तमानकाले शृङ्गवेरपुरमिलाहाबादजनपदान्तर्गतेन

गङ्गातीरावस्थितेन सिगरौरग्रामेण परिचीयते। तुलसीदासोऽपि रामचरितमानसे ग्राममेनं सिगरौराभिधानमवर्णयत्। यं घट्टमाश्रित्य रामो गङ्गामवततारासौ रामघट्टनाम्ना प्रसिद्धः। सिगरौरग्रामस्य स्थितिरयोध्यातोऽशीतिमीलविप्रकृष्टान्तरालवर्तिनी प्रयागाच्च द्वाविंशति-मीलविप्रकृष्टान्तरालवर्तिनी ज्ञेया।

### (४१) साकेतम् -

साकेतस्य वर्णनमयोध्याप्रसङ्गे २०१ पृष्ठेऽवलोकनीयम्।

### (४२) हस्तिनापुरम् -

प्राचीनभारतीयसाहित्येऽथ चेतिहासे हस्तिनापुरं नाम नगरमति-शयेन प्रसिद्धं गौरवान्वितञ्च बभूव। कुरुवंशीयानां नरपतीनां राज-धानी हस्तिनापुरं भागीरथ्याः दक्षिणे तीरे समवस्थिताऽवर्तत। नागपुरनाम्नाऽपीयमभिधीयते स्म। प्राचीनसाहित्ये नगरस्या-ऽस्यानेकानि नामानि समुपलभ्यन्ते, यथा - हस्तिनापुरं, गजपुरं, नागसाह्वयं, हस्तिग्रामम्, आसन्दीवद्, ब्रह्मस्थलमित्यादीनि।

पुराणेषु कथा प्रसिद्धा -

पुरुवंशीयेन नरपालेन बृहत्क्षत्रस्य (कुरोः) सुतेन हस्तिन्निति नामधेयेन हस्तिनापुरं नगरं व्यवस्थापितम्। तस्य नाम्नैवेदं नगरं हस्तिनापुराभिधानं बभूव। कालिदासकृताभिज्ञानशाकुन्तलनाटक-नायकस्य दुष्यन्तस्य राजधानीह्हस्तिनापुरमेवाऽऽसीत्। दुष्यन्तेन सह गान्धर्वपरिणयनानन्तरं गर्भवती शकुन्तला ह्हस्तिनापुरमेवागच्छत्। कौरवाणां राज्यकाले हस्तिनापुरं भारतवर्षस्य मुख्यतमं नगरमवर्तत। महाभारतेऽस्य नगरस्य समृद्धिसौन्दर्यादयो गुणाः कविना विस्तरेण वर्णिताः।

इतिहासे पुराणेषु च प्रसिद्धम् -

हस्तिनापुरनगरं पुनः पुनः प्रकृतिकोपेनाऽऽक्रान्तं बभूव। अनेकशो नगरमिदं गङ्गाजलसम्प्लवाः प्रवाहितवन्तः।

परन्तु पुनः नगरस्याऽस्य पुनर्निर्माणं बभूव। अथ परीक्षितप्रौत्र-नृचक्षुसमये गङ्गाजलौघेन हस्तिनापुरं पूर्णरूपेण प्रवाहितं विनाशितञ्च। तदनन्तरं हस्तिनापुरं परित्यज्य नृचक्षुः वत्सजनपदं प्राब्रजत् यमुनातटे च कौशाम्बीं राजधानीमकरोत्।

जैनसाहित्येऽपि हस्तिनापुरस्य परा प्रसिद्धिर्वर्तति। जैनमतावल-म्बिनामिदं नगरं परमं तीर्थं विद्यते। विविधतीर्थकल्पे ग्रन्थे लेखो विद्यते -

ऋषभदेवः स्वसम्बन्धिने कुरवे कुरुराज्यमुपजहार। कुरुसुतो हस्ती हस्तिनापुरस्य राजधानीरूपेण निर्मितिमकारयत्। अत्राऽनेके तीर्थङ्कराः बभूवुः।

वर्तमानसमयेऽपि हस्तिनापुरं जैनमतावलम्बिनां जनानां महातीर्थं विद्यते। अत्र तेषामनेकाः संस्थाः स्थापिताः विद्यन्ते।

मेरठनगराद् द्वाविंशतिमीलविप्रकृष्टान्तरालेन मवानानगरसमीपे पूर्वोत्तरदिशि गङ्गातीरे हस्तिनापुरग्रामे प्राचीनहस्तिनापुरस्याऽवशेषाः समुपलब्धाः। अत्र गङ्गायाः मुख्या धारा सुदूरमपसृता। परन्त्वत्र वृद्धगङ्गानाम्नी लघ्वी धारैका समीपमेव प्रवहति। प्राचीननगरस्याऽनेके खण्डहरा अप्यत्र सन्ति।

---

## सन्दर्भ ग्रन्थ


१. बालरामायण - अष्टामाङ्कस्य विष्कम्भकः।

२. बालरामायण १.२३

३. कुन्दमाला पृ० ३५, बालरामायण १.२३

४. सोपस्नेहतया वृक्षाणामभितः खल्वयोध्यया भवितव्यम्। प्रतिमानाटक पृ० ७२ ।।

५. बालरामायण १०.९६।।

६. अनर्घराघव ७.१४७
७. विष्णुधर्मोत्तरपुराण १.१३-१-२
८. रामायण - बालकाण्ड ५.७
९. कौमुदीमहात्सव ५.३
१०. रघुवंश ११.९३, १४.१०, १५.३८, १६.२५
११. रघुवंश ५.२१, १२.७९, १४.१३, १८.३६
१२. संयुक्तनिकाय - भाग ३, पृ० १४०
१३. ज्योग्राफी ऑफ अर्ली बुद्धिज्म पृ० ५
१४. आयने अकबरीग्रन्थस्य आंग्लभाषानुवादः (ग्लेडविनकृत) २.३२
१५. अष्टाध्यायी ३.२.११ सूत्रे पातञ्जलमहाभाष्यम्
१६. कल्चुरल हिस्ट्री फ्रॉम वायुपुराण पृ० २५०।।
१७. अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैताः मोक्षदायिकाः।। गरुड़पुराण ii. ३८
१८. कुन्दमाला पृ० ५
१९. तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्।।
पूर्वमेध-६६।।
२०. बालरामायण पृ० ६२७।।
२१. शृङ्गारप्रकाश पृ० ८७०।।
२२. पादताडितकपृ० ३९।।
२३. ऐतिहासिक नामावली पृ० ६२
२४. आप्टेः संस्कृत-इंगलिश डिक्शनरी - अपेन्डिक्स पृ० ३९।।
२५. सुभद्राधनञ्जय पृ० २९।।
२६. शक्तिसङ्गमतन्त्र ३.८।।
२७. ज्योग्राफी ऑफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० १०८
२८. वीणावासवदत्तम् पृ० १३।।
२९. अनर्घराघव पृ० ३७२, बालरामायण पृ० ६४८।।
३०. स्वप्नवासवदत्तम् पृ० १४, प्रतिज्ञायौगन्धरायणम् पृ० २८।।
३१. प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे। पूर्वमेघ - ३२
३२. रत्नावली पृ० १३०।।

३३. पूर्वमेघ २९-३०।।

३४. विद्धसालभञ्जिका पृ० ६।।

३५. बालरामायण ३.४७।।

३६. पादताडितक पृ० १६५।।

३७. पूर्वमेघ-३२

३८. अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैताः मोक्षदायिकाः। गरुड़पुराण ii. ३८.५

३९. अप्यन्यस्मिन् जलधर महाकालमासाद्य सद्यः
पादन्यासैः क्वणितरशनास्तत्र लीलावधूतैः।
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः।
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान्।।
पूर्वमेघ - ३७-३८

४०. पादताडितक - २४

४१. पादताडितक श्लोक - २४

४२. वही श्लोक - २४

४३. चारुदत्त पृ० ६० ।।

४४. कौमुदीमहोत्सव ५.३।।

४५. ज्योग्राफी ऑफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० १०८

४६. मत्तविलास प्रहसन पृ० १०

४७. कौमुदीमहोत्सव ३.३।।

४८. अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैताः मोक्षदायिकाः।। गरुड़पुराण ii. ३८.५

४९. बालरामायण ३.५३।।

५०. स्कन्दपुराण १.३.३.३९।।

५१. कान्यकुब्जे महाक्षेत्रे राजा भोजेति विश्रुतः।
स्कन्दपुराण ७.२.६.२०

५२. एपिग्राफिका इन्डिका - भाग ४ पृ० २५६

५३. बालरामायण १०.८८।।

५४. वही पृ० १६९।।

५५. रामायण - बालकाण्ड ३२.६।।

५६. बालरामायण १०.८९

५७. योमार्गः परिधानंकर्मणि गिरां यः सूक्तिमुद्राक्रमः
भङ्गिर्या कबरीचयेषु रचनं यद् भूषणालीषु च।
दृष्टं सुन्दरि कान्यकुब्जललनालोकैरिहान्यच्च य-
च्छिद्यन्ते ललनासु दिक्षु तरसा यत्कौतुकिन्यः स्त्रियः।।
बालरामायणः १०.९०

५८. राजा ब्रह्मदत्तः, नगरं काम्पिल्यमित्यभिधीयताम्।
स्वप्नवासदत्तम् पृ० १८२

५९. महाभारत-शान्तिपर्व - १३९.५

६०. माकन्दीमथ गङ्गायास्तीस्तीरे जनपदायुताम्।
सोऽध्यवसद् दीनमनाः काम्पिल्यञ्च पुरोत्तमम्।।
दक्षिणांश्चाऽपि पञ्चालान् तावच्चर्मण्वती नदी।
द्रोणेन चैव द्रुपदः परिभूयाऽथ पालितः।।
महाभारत - आदिपर्व १३७.७३-७४

६१. अस्ति किल किष्किन्धा नाम वनौकसां निवासः।
प्रतिमानाटक पृ० १५७

६२. आप्टेः संस्कृत-इंगलिश डिक्शनरी- अपेन्डिक्स पृ० ४१

६३. अनर्घराघव पृ० ३६२., ७.१०१

६४. मालविकाग्निमित्र ९.१०

६५. मुद्राराक्षस पृ० १४०।।

६६. रघुवंश ६.२४।।

६७. पुष्पपुराङ्गनानां पाटलिपुत्रपुराङ्गनानाम्।
उपर्युक्ते माल्लिनाथस्य व्याख्या।।

६८. अष्टाध्यायी २.१.१६ सूत्रे महाभाष्यम्।

६९. ज्योग्राफी ऑफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० ६४-६५

७०. स्थाने खलु कुसुमपुरससदृशस्याऽन्यनगरासदृशस्य
नगरमित्यविशेषग्राहिणी पृथिव्यां स्थितिः।धूर्तविटसंवाद-पृ० ६९

७१. धूर्तविटसंवाद पृ० ६९ ।।

७२. उभयामिसारिका पृ० १२४-१२५।।

७३. वही श्लोक ६।।

७४. पादताडितक पृ० १८२।।

७५. श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा -
अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः।
वररुचिपतञ्जली इह परीक्षितौ ख्यातिमुपजग्मुः।।
काव्यमीमांसा ५५.२१-२३

७६. चारुदत्त पृ० ६०

७७. सुमङ्गलविलासिनी २.५.४०।।

७८. कौमुदीमहोत्सव - इन्ट्रोक्शन पृ० २६

७९. प्रियदर्शिका पृ० ८., कौमुदीमहोत्सव १.११।।

८०. सालङ्कायनेन नियुक्तः, गच्छेमं वृत्तान्तं कौशाम्ब्यां निवेदय।
प्रतिज्ञायौगन्धरायण पृष्ठ ३२।।

८१. भरहुत इस्क्रिप्शन्स पृ० १२।।

८२. अधिसीमकृष्णपुत्रो नृचक्षुर्भविता नृपः। यो गङ्गयाऽपहृते हस्तिनापुरे कौशाम्ब्यां निवत्स्यति।। विष्णुपुराण ४.२१.७-८।।

८३. अनर्घराघव पृ० ३८०।।

८४. बालभारत पृ० २३

८५. दिव्यावदान पृ० १७०, दिग्घनिकाय १.१११, २.२३५

८६. विष्णुपुराण ४.१८.२०

८७. महाभारत-शान्तिपर्व ५.६-७ ।।

८८. वेणीसंहार पृ० २४८ ।।

८९. सुभद्राधनञ्जय पृ० २९।।

९०. अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैताः मोक्षदायिकाः।। गरुड़पुराण ii. ३८.

९१. कल्चुरल हिस्ट्री फ्रॉम वायुपुराण पृ० २५५-२५६., विष्णुपुराण ५.३८.९

९२. पादताडितक श्लोक - २० ।।

९३. ऐतिहासिक स्थानावली पृ० ५२४

९४. अस्ति दक्षिणापथे पद्मपुरं नाम नगरम्। उत्तररामचरित पृ०१०, महावीरचरितम् पृ०७-८, मालतीमाधव पृ० १०

९५. उपर्युक्तपदे महावीरचरितस्य राघवभट्टकृतटीका।।
९६. इहिक्वा खण्ड १ पृ० २८९ ।।
९७. काणे महोदयेन सम्पादितस्योत्तररामचरितस्य प्राक्कथनम् पृ० ७-८
९८. भण्डारकरमहोदयेन संम्पादितस्य मालतीमाधवप्रकरणस्य टिप्पणी खण्डः- पृ० ३
९९. मालविकाग्निमित्र पृ० १९६ ।।
१००. आप्टे: संस्कृत-इंगलिश डिक्शनरी-अपेन्डिक्स पृ० ४४।।
१०१. ऐतिहासिक नामावली पृ० ५२५।।
१०२. उत्साद्याखिलक्षत्रियजातिं नवनागाः पद्मावत्यां नाम पुर्यामनु-गंगाप्रयागं गङ्गायाश्च मागधाः गुप्ताश्च भोक्ष्यन्ति। विष्णुपुराण
१०३. मालतीमाधव ६.१९
१०४. भागीरथ्याः यमुनासङ्गमविशेषपापवनेषु सलिलेष्वात्मानम-वलोकयतः प्रतिष्ठानस्य शिखाभरणभूतं तस्य राजर्षेर्भवनम्।

विक्रमोर्वशीयम्-पृ० ११७

१०५. ऐतिहासिक नामावली पृ० ५८३., ज्योग्राफीकल डिक्शनरी ऑफ एन्शिएण्ट एण्ड मिडिवल इन्डिया पृ० ७१,
कालिदास का भारत - १ भाग पृ० १२४ ।।
१०६. प्रयागं सप्रतिष्ठानम्। महाभारत - वनपर्व - ८५-८६
१०७. एवमेषा महाभाग प्रतिष्ठाने प्रतिष्ठिता।
तीर्थयात्रा महापुण्या सर्वपापप्रमोचिनी।।

महभारत - वन पर्व ८५. ११४

१०८. बालरामायण १०. ११ ।।
१०९. वही पृ० ३७० ।।
११०. सख्यं गता यमुनया सह यत्र गङ्गा
यत्राप्नुवन्ति मुनयः स्वसमीहितानि।
पापीयसां भवति यत्र परा विशुद्धि-
स्तं मामितो नयतमिच्छफलं प्रयागम्।। तापसवत्सराज ३.५६
१११. इमं गङ्गायमुनयोश्चेतो निर्वृतिकारणम्। तापसवत्सराज ६.५
११२. यस्मिन्नापः सह परिगताः सूर्यपुत्रीपयोभिः
मन्दाकिन्याः कुमुदरुचयो मेचकेन्दीवराभैः।

तीर्थे तस्मिन् मम विशदितं देवताभूय भूयः
स्वाङ्गत्यागात् स्पृहयति मनो वासवार्घासनाय।।

बालरामायण ६.७२

११३. रघुवंश १३.५८।।
११४. अनर्घराघव ७.१२७
११५. रामायण - अयोध्याकाण्ड ५४.२-२२।।
११६. महाभारत-वनपर्व ८४.३५.,८७.१८.,९५.४-५।।
११७. रघुवंश १३.५४-५७
११८. पादताडितक श्लोक १३२।।
११९. शृङ्गारहट पृ० २२।।
१२०. एन्शिएन्ट इण्डियन हिस्टोरिकल ट्रेडिशन्स पर्जीटर - पृ० १७०।।
१२१. उत्तररामचरित पृ० १११।।
१२२. माधुरो राजा - वीणावासवदत्त पृ० ४ ।।
१२३. कौमुदीमहोत्सव पृ० १५।।
१२४. बालचरितम् ३.४४।।
१२५. वही पृ० पृ० ७-१०।।
१२६. अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैताः मोक्षदायिकाः।। गरूड़पुराण ii. ३८.५।
१२७. तपतीसंवरण - प्रिफेस पृ० ४।।
१२८. विष्णुधर्मोत्तरपुराण ९.३०.२-३।।
१२९. पद्मपुराण - स्वर्गखण्ड ३.२५।।
१३०. बालरामायण ३.३४।।
१३१. अनर्घराघव पृ० ३.७४।।
१३२. बालरामायण ३.२५
१३३. रघुवंश ६.४३।।
१३४. बालरामायण १०.९३।।
१३५. वही १.२३।।
१३६. प्राचीन भारत का भौगोलिक स्वरूप पृ० ४०।।
१३७. अनर्घराघव ७.१२३
१३८. प्रतिज्ञायौगन्धरायण २.८।।
१३९. तापसवत्सराज पृ० ६०।।
१४०. स्वप्नवासवदत्तम् पृ० १४।।

१४१. स्वप्नवासवदत्तम् पृ० ४०-४२।।
१४२. ऐतिहासिक नामावली पृ० ८१६-८१७
१४३. महाभारत आदिपर्व १४२.२-३।।
१४४. बालभारत पृ० ४७।।
१४५. वेणीसंहार १.१६
१४६. तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीम्। पूर्वमेघ - २४
१४७. रघुवंश ६.३२-३६
१४८. वयसि विदिशान्तीरोद्यानेष्वनङ्ग इवाङ्गवान्।
मालविकाग्निमित्र ५.१
१४९. पादताडितक श्लोक २०
१५०. रामायण - उत्तरकाण्ड १०८.१०
१५१. पञ्चरात्र पृ० ४३
१५२. उपप्लव्यं स गत्वा तु स्कन्धावारं प्रविश्य च।
पाण्डवानथ तान् सर्वान् शल्यस्तत्र ददर्श ह।।
महाभारत - उद्योगपर्व ८.२५
१५३. वैरन्त्यं नाम नगरमप्यस्ति। अविमारक पृ० १६१
१५४. पिता कुरङ्गया भूपालो वैरन्त्यनगरेश्वरः। वही ६.१३
१५५. ऐतिहासिक नामावली पृ० ८८
१५६. कौमुदीमहोत्सव पृ० ३।।
१५७. जे० आर० ए० एस० (१८९४ई०) पृ० २५।।
१५८. जे० ए० एस० बी० वो० १४ पृ० ५१९।।
१५९. कौमुदीमहोत्सव पृ० ८
१६०. बालरामायण पृ० १०९।।
१६१. प्रतिमानाटक पृ० ६२।।
१६२. उत्तररामचरित १.२१।।
१६३. पञ्चरात्र पृ० ६१।।
१६४. तपतीसंवरण पृ० २१ ।।
१६५. वही पृ० ४३।।
१६६. पाणिनीय अष्टाध्यायी ४.२.१०१।।
१६७. ऐतिहासिक नामावली पृ० १०१६।।
१६८. अनसूये ! त्वरस्व त्वरस्व। एते हस्तिनापुरगामिन ऋषयः शब्दायन्ते। अभिज्ञानशाकुन्तल पृ० २८५
१६९. महाभारत - आदिपर्व - अध्याय १०।।

# सप्तमोऽध्यायः

## तीर्थानि ऋषीणामाश्रमाश्च

### (क) तीर्थानि –

१. अगस्त्यतीर्थम्
२. अप्सरस्तीर्थन्
३. अयोध्या
४. उज्जयिनी
५. काञ्ची
६. काशी
७. कुमारीतीर्थम्
८. गोकर्णतीर्थम्
९. चण्डिकायतनम्
१०. द्वारका
११. प्रभासतीर्थम्
१२. प्रयागः
१३. बालुकातीर्थम्
१४. मथुरा
१५. मिथिला
१६. वाराणावतः
१७. वाराणसी
१८. वृन्दावनम्
१९. शक्रावतारः
२०. शचीतीर्थम्
२१. सीतातीर्थम्
२२. सोमतीर्थम्

### (ख) ऋषीणामाश्रमाः –

१. अगस्त्याश्रमः
२. अत्र्याश्रमः
३. कण्वाश्रमः
४. गौतमाश्रमः
५. च्यवनाश्रमः
६. परशुरामाश्रमः
७. बाल्मीक्याश्रमः
८. मतङ्गाश्रमः
९. मारीचाश्रमः
१०. वसिष्ठाश्रमः
११. विश्वामित्राश्रमः
१२. व्यासाश्रमः
१३. शरभङ्गाश्रमः
१४. सुतीक्ष्णाश्रमः

# सप्तमोऽध्याय:

## तीर्थानि ऋषीणामाश्रमाश्च

भारतवर्षेऽस्मिन् धर्मप्रधाने तीर्थानां महत्त्वं गौरवञ्च जनजनहृदयेष्वतितरां प्रतिष्ठितम्। अत्र नागरिकाणां हृदयेषु धर्मं प्रति महती आस्था श्रद्धा च सम्भृता। हेतुनाऽनेन तीर्थानां विकासोऽपि बभूव। प्राचीनमहर्षिभिस्तपस्विभिश्चाऽस्मिन् देशे वनेष्वाश्रमाणां तपोवनानाञ्च स्थापना विहिता। संस्कृतसाहित्ये, विशेषतश्च प्राचीन-संस्कृतरूपकेष्वनेकेषां तीर्थानामाश्रमाणाञ्च वर्णनानि समुपलभ्यन्ते। दिङ्मात्रेण तेषां समीक्षा ह्युपयोगिनी रुचिकरी च वर्तते।

### (क) तीर्थानि

**(१) अगस्त्यतीर्थम् -**

२५१ पृष्ठेऽगस्त्याश्रमोऽवलोकनीय:।

**(२) अप्सरस्तीर्थम् -**

अभिज्ञानशाकुन्तलनाटके कालिदासोऽप्सरस्तीर्थमुल्लिलेख। तीर्थ-मिदं हस्तिनापुरं स्पृशन् गङ्गातटे समवस्थितमविद्यत। दुष्यन्तेन तिरस्कृतां क्रन्दमानां रुदन्तीञ्च शकुन्तलामश्रुस्रवणजलक्लिन्नकपोलां तस्या: जननी मेनकाऽप्सरस्तीर्थस्थानात् क्रोडीकृत्य निनाय[१]। तीर्थस्या-ऽस्य माहात्म्यविषये प्राचीनसाहित्ये कल्पना विद्यते -

अप्सरसोऽत्र स्वक्रमेण समागत्य भक्तजनानां मनसां कामना: पूरयन्ति[२]।

अप्सरसां मूलनिवासः कालिदासेन मारीचाश्रमसन्निकटवर्ती प्रदेशः सूचितः। अभिज्ञानशाकुन्तलनाटके तेन वर्णितम्।

अप्सराः मेनकाभिधाना (मारीचाश्रमनिवासिनी) शकुन्तलां क्रोडीकृत्य मारीचाश्रममानिनाय[३]।

**(३) अयोध्या –**

२०१ पृष्ठेऽवलोकनीयम्।

**(४) उज्जयिनी –**

२०५ पृष्ठेऽवलोकनीयम्।

**(५) काञ्ची –**

२०८ पृष्ठेऽवलोकनीयम्।

**(६) काशी –**

१२० पृष्ठे वाराणसीप्रसङ्गेऽवलोकनीयम्।

**(७) कुमारीतीर्थम् –**

सुभद्राधनञ्जयनाटके कुलशेखरवर्मणा दक्षिणभारतवर्तिनः कुमारीतीर्थस्योल्लेखो विहितः[४]। वर्तमानसमये तीर्थमिदं कन्याकुमारी-नाम्ना प्रसिद्धमस्ति।

भारतवर्षस्य दक्षिणसीमान्ते कुमार्यन्तरीपे समुद्रतटवर्तिनः कुमारीतीर्थस्य त्रिषु दिक्षु जलनिधेः परिवेष्टनमस्ति। प्राच्यां बङ्गसमुद्रः प्रतीच्यामारब्यसागरो दक्षिणदिशि च हिन्दमहासागरो वर्तते। तीर्थस्थानमिदं प्राचीनकाले कुमारीपुरनाम्नापि प्रथितं बभूव। महाभारते[५] पुराणेषु[६] च तीर्थमिदं कुमारीतीर्थनाम्नैव महर्षिभिः प्रोक्तम्। तीर्थमिदं सर्वपापविनाशनं वर्तते।

भारतवर्षस्य बिस्तारः कुमारीतीर्थाद्धिमालयपर्यन्तं योजनसहस्रं वर्तते[७]।

**(८) गोकर्णतीर्थम् –**

अतिप्राचीनकालादेव प्रसिद्धं महनीयं गोकर्णतीर्थं दक्षिणभारतस्य

पश्चिमसमुद्रतटेऽवस्थितं मनीषिभिर्वर्णितम्। श्रीहर्षेणाऽत्रत्या सुप्रसिद्वा लोकसम्मता शिवलिङ्गमूर्तिरुल्लिखिता[८]।

श्रीमद्भागवतपुराणे गोकर्णतीर्थावस्थितस्य शिवमन्दिरस्य माहात्म्यं वर्णितमुपलभ्यते[९]। महाभारते शैवतीर्थरूपेण गोकर्णतीर्थमनेकशः कविना कीर्तितम्[१०]। कालिदासोऽपि पश्चिमसमुद्रतटे गोकर्णतीर्थमवर्णयत्[११]। कुलशेखरवर्मा गोकर्णतीर्थस्य स्थितिं दक्षिणभारतेऽलिखत्[१२]।

वर्तमानकाले गोकर्णतीर्थस्य स्थितिः दक्षिणभारते करवार-जनपदस्योत्तरकनारासन्निकटं विद्यते। समीपमेव वर्तते गेंदियानगरम्[१३]। गोआनगरान्मीलत्रयविप्रकृष्टान्तरालेन दक्षिणदिशि सदाशिवगढो वर्तते। ततश्च त्रिंशन्मीलदूरेण दक्षिणायां करवारकुमतयोर्मध्ये वर्तते गोकर्णतीर्थम्। कुमतातो नगरमिदं दशमीलविप्रकृष्टान्तरालेनोत्तरदिशि विद्यते। अत्र गङ्गवत्याः सरितः सागरेण सह सङ्गमो भवति। गोकर्णतीर्थे विद्यमानं महाबलेश्वराभिधानं शिवमन्दिरं रावणेन निर्मापितमिति वर्तते प्रसिद्धा लोककिम्वदन्ती।

वर्तमानयुगे गोकर्णतीर्थं महाराष्ट्रराज्यस्थं प्रसिद्धं महनीयं तीर्थं मन्यते। मन्दिरस्याऽस्य स्थापत्यकलायां द्राविडी पद्धत्यनुभूयते। शिवरात्रिपर्वण्यत्र प्रतिवर्षं समायोज्यमाने महति मेलापकेऽसंख्यसंख्यासु भक्तजनाः सुदूरस्थेभ्यः प्रदेशेभ्यः समागत्य भगवते शिवशम्भवे श्रद्धासुमनांसि समर्प्य पुण्यशालिनो भवन्ति।

एकस्य गोकर्णतीर्थस्याऽवस्थितिः नेपालराज्येऽपि सुप्रसिद्धा[१४]। परन्तु प्राचीनसंस्कृतसाहित्ये, विशेषतस्तु संस्कृतनाटकेषूल्लिखितं गोकर्णतीर्थं ध्रुवं दक्षिणभारतस्थितमेवाऽस्ति।

### (९) चण्डिकायतनम् -

प्राचीनकाले विन्ध्यवासिन्याः प्रसिद्धमेकं मन्दिरं तीर्थस्थानञ्च चण्डिकायतनाभिधानं विन्ध्यवने स्थितमविद्यत। सुदूरप्रदेशेभ्योऽपि भक्तजनाः चण्डिकायतनं समागत्य देवीञ्च विधिवदुपास्य

मनसामभिलाषाणां पूर्तिं प्रार्थयन्ति स्म। शूरसेनजनपदराजसुता कीर्तिमती देवीं पूजयितुं चण्डिकायतनमुपागता[१५]।

देवीभागवतपुराणवर्णनमनुसृत्य विन्ध्यवासिनीदेवीमन्दिरं मिर्जापुरनगरं निकषा गिरिशिखरे सुशोभते[१६]। गिरिशिखरं निकषा च भगवती योगमायाष्टभुजामन्दिरमस्ति। तस्य गणना तेषु द्वापञ्चाशत्सिद्धपीठेषु विधीयते, यत्र विष्णुचक्रेण कर्तितानि दक्षसुतायाः यज्ञाग्निहुतायाः सत्या अङ्गानि पतितानि। अत्र योगमायायामन्दिरस्थले सत्याः दक्षिणपादाङ्गुष्ठेन पतितम्[१७]।

कथासरित्सागराभिधाने महाकाव्ये विन्ध्यवासिनी देवी महती पावनी ह्यघमर्षिणी कीर्तिता[१८]। ख्रिष्टस्य सप्तमशताब्द्यां सम्भवतोऽस्य मन्दिरस्य महती प्रतिष्ठा माहात्म्यं गौरवञ्चाऽवर्तत।

चण्डिकायतनं विन्ध्यवासिनीदेवीमन्दिरं वा वर्तमानसमयेऽपि प्रतिष्ठितं वर्तते। मिर्जापुरनगरस्य पश्चिमदिशि विन्ध्याचलनगरे विन्ध्यवासिनीदेवीमन्दिरस्य स्थितिर्वर्तते। मन्दिरमिदं बिन्दुवासिनी-मन्दिरमपि लोकैः ज्ञायते[१९]। परन्तु मन्दिरस्याऽवस्थितिर्न गिरिशिखरे वर्तते, अपितु समभूमिस्थलेऽस्ति।

### (१०) द्वारका –

२१७ पृष्ठेऽवलोकनीयम्।

### (११) प्रभासतीर्थम् –

द्वारकां निकषा प्रभासतीर्थस्य वर्णनं कुलशेखरवर्मणा सुभद्रा-धनञ्जयनाटके विहितम्[२०]। देवदर्शनाय प्रचुरसंख्यासु तीर्थयात्रिणोऽत्र समागच्छन्ति स्म। टी० सी० सरकार महोदयस्य मन्तव्यमिदं यत् ख्रिष्टस्य सप्तमशताब्द्यां तीर्थस्याऽस्य महती प्रतिष्ठा लोके प्रसृता बभूव[२१]।

महाभारते प्रभासतीर्थस्य वर्णनानि समुपलभ्यन्ते[२२]। अत्र सरस्वतीसरितः पश्चिमसागरेण सह सङ्गमो विद्यते। अस्मिन्नेव स्थाने

जराभिधानस्य व्याधस्य बाणेन हतः कृष्णो भौतिकशरीरमुत्सृज्य स्वर्गमगच्छत्। पाण्डवा अपि तीर्थयात्रां कुर्वन्तः प्रभासतीर्थमगच्छन्। अत्रैव मदिरापानोन्मत्ताः यादवाः परस्परं कलहायन्तो विनाशमाप्नुवन्[२३]।

**(१२) प्रयागः -**

२२० पृष्ठेऽवलोकनीयम्।

**(१३) बालुकातीर्थम् -**

प्रतिज्ञायौगन्धरायणनाटके भासेन बालुकातीर्थस्य वर्णनानि प्रस्तुतानि। वत्सजनपदात् दक्षिणदिशं प्रति प्रसर्पन् मार्गो बालुकातीर्थे नर्मदामुत्तरति। तदनन्तरञ्च वेणुवनं तदनन्तरञ्च नागवनं विद्यते[२४]।

**(१४) मथुरा -**

२२३ पृष्ठेऽवलोकनीयम्।

**(१५) मिथिला -**

२२५ पृष्ठेऽवलोकनीयम् ।

**(१६) वारणावततीर्थम् -**

२२८ पृष्ठेऽवलोकनीयम्

**(१७) वाराणसी -**

वाराणसी नगरी अतिप्राचीनकालादेव महनीयं गौरवान्चितं सुप्रतिष्ठितञ्च तीर्थं लोके प्रसिद्धं विद्यते। असीवरुणासरितोर्मध्यवर्तिन्यां भूमौ समवस्थितस्य वाराणसीनगरस्य लोके महती कीर्तिः प्रसृता बभूव[२५]। वाराणस्यां गङ्गाप्रवाहोऽसीतिनाम्ना लोकेऽभिधीयते।

काशीजनपदस्य राजधानीरूपमिदं वाराणसीनगरं काशीनाम्नाऽपि प्रसिद्धिमगच्छत्। व्यापारकेन्द्ररूपेणाऽपि तीर्थस्याऽस्य महती प्रतिष्ठा प्राचीनकालादेव ववृते। पतञ्जलिर्नगरमिदं वस्त्रव्यापारकेन्द्ररूपेणाऽवर्णयत्[२६]।

वाराणसी भगवतः शिवस्य निवासो लोके प्रथितः[२७]। अत्रत्याः निवासिनः सांसारिकसुखभोगनिमग्ना अपि भगवन्तं सकलसन्तापहरं

शङ्करं शिवं प्राप्नुवन्ति[२८]। शिवनिवासभूतेयं नगरी वाराणसी सकल-भुवनेभ्यः पृथग्भूता गण्यते। क्षेमीश्वरेण वर्णितम् –

सकलपृथिवीभारं शेषो वहति, परन्तु वाराणसी ध्रुवमेव पृथग्वर्तते[२९]। शिवस्येदं निजं क्षेत्रम्। वाराणसीयमन्तरिक्षनगरी विद्यते[३०]।

प्राचीनभारतीयसाहित्ये राज्ञो हरिश्चन्द्रस्य कथा प्रसिद्धा। अयोध्यानरेशो हरिश्चन्द्रः सकलं राज्यं महर्षये विश्वमित्रायोपहृत्य दानदक्षिणापूर्त्यै वाराणसीमाजगाम।

यतो वाराणसी सकलभुवनपृथग्भूता, न विद्यतेऽयोध्या-राज्यस्याऽङ्गम्। वाराणस्यामसौ स्वपरिवारं स्वात्मानञ्च विक्रीय दक्षिणापूर्तिञ्चकार। एकश्चाण्डालो हरिश्चन्द्रं क्रीत्वा श्मशानरक्षायै नियुयोज। तत्स्थानमद्यापि वाराणस्यां हरिश्चन्द्रघट्टनाम्ना लोके प्रसिद्धमस्ति।

कालिदासेन वाराणसी नगरी काशीति नाम्नाऽपि प्रोक्ता। तेन वर्णितम् – पुरूरवसो शास्त्रविधिसम्मता महिषी काशिराजसुताऽवर्तत[३१]। महाभारतकथायामपि काशीनगरी महामहिममण्डिता प्रसिद्धा गौरवान्विता वर्णिता। स्वभ्रात्रोः परिणयनयनाय भीष्मः काशिराजस्य सुतात्रयमम्बामम्बिकामम्बालिकाञ्चापजहार। शिवस्य नगरीति रूपेणाऽपि काशीनगरी परमप्रतिष्ठिता प्रसिद्धा लोकसम्मता च बभूव। इयं मोक्षदायिकासु सप्तपुरीषु गण्यते[३२]।

श्रद्धासम्भृतहृदयाः भारतीयजनाः धर्मप्रधानां वाराणसीं सदा सर्वकालं श्रद्धास्पदां पावनीं मर्वपापविनाशिनीमघमर्षिणीं सम्भावयन्ति। धार्मिकैर्जनैर्वृद्धावस्थायां काशीवासो मोक्षहेतुरवगम्यते। वाराणस्यां प्राणपरित्यागात् प्राणिनः पुनर्जन्मविनिर्मुक्ताः मोक्षमधिगम्य परमं पदम-धिगच्छन्ति। अत्र सर्वाणि भवबन्धनानि विच्छिद्यन्ते। पुराणेषु कथा प्रसिद्धा –

शिवो ब्रह्मणः पञ्चमं शिरश्चिच्छेद। ब्रह्महत्यारूपं तच्छिरो

संश्लिष्टं यदा न कथमपि शिवहस्तात् पृथग्भूतं, शिवो वाराणसीमामाजगाम। अत्र ब्रह्महत्यापापमुक्तस्य शिवस्य हस्तात् तच्छिरः स्वयमेव पृथग्भूतम्। अतो वाराणस्यां ब्रह्महत्यासदृशः पापोऽपि जनं न स्पृशति। पार्वतीपरमेश्वरौ सर्वकालमत्र निवसन्तौ न कदापि क्षेत्रमेतत् परित्यजतः[३३]।

प्राचीनकालीना वाराणसी वर्तमानवाराणसीरूपेणैव परिचीयते। प्राचीनकालवद् वर्तमानकालेऽपि नगरीयं धर्मस्य विद्यायाश्च प्रमुखं प्रसिद्धं केन्द्रं विद्यते। धर्मलाभाभिलाषसम्भृतमानसाः श्रद्धालवो भक्तजनाः तीर्थयात्रिणो भारतवर्षस्य कोणकोणेभ्यो वाराणसीं प्रतिदिनं समागच्छन्ति।

## (१८) वृन्दावनम् -

भगवतः कृष्णस्य वासुदेवस्य बाललीलाभिः सम्भृतं वृन्दावनतीर्थं लोकेऽतितरां प्रसिद्धं महनीयं वर्तते। भासेन बालचरितनाटके वृन्दावनतीर्थस्य मनोरमं हृदयाकर्षकरं पवित्रञ्च चित्रमङ्कितम्। अत्र गोपाः गोपिकाश्च निवसन्ति कालिन्दीसलिलं पीत्वा गावः स्वातन्त्र्येण विचरन्ति[३४]।

श्रीमद्भागवतपुराणे पुराणकारेण वर्णितम् -

कंसस्याऽत्याचारेभ्य आत्मनः परित्राणाय नन्दो गोकुलं परित्यज्य वृन्दावनं परिवव्राज। कालिदासो वृन्दावनं शूरसेनजनपदान्तर्गतं निरदिशत्[३५]। राजशेखरो वृन्दावनं मथुरां निकषा मथुराराज्यान्तर्गतमलिखत्[३६]।

वर्तमानसमयेऽपि वृन्दावनं प्राचीनवृन्दावननाम्नैव प्रथितमस्ति। तीर्थरूपमिदं स्थानं मथुरातः षण्मीलविप्रकृष्टान्तरालेन पश्चिमोत्तरदिशि यमुनातीरे समवस्थितं विद्यते।

## (१९) शक्रावतारतीर्थम् -

गङ्गातीरवर्तिनस्तीर्थस्य शक्रावतारस्य वर्णनं कालिदासेन कृतम्। नद्यादिजलीयतटेषु पारगमनस्थानान्यवतारपदेनाऽभिधीयन्ते। कालिदासो

लिलेख –

मालिनीतटवर्तिकण्वाश्रमाद् हस्तिनापुरमार्गे गङ्गोत्तरणमार्गस्थानं घट्टं शक्रावतारो वर्तते। अत्र पौराणिकी कथा प्रसिद्धा –

कस्मिंश्चित् समये शक्रेण (इन्द्रेण) सह भ्रमन्ती शची (इन्द्राणी) गङ्गातीरमिदं समासाद्य सर्वेषां तीर्थानामावाहनञ्चकार। तदनन्तरञ्च तया अत्र स्नातम्।

तस्मादिदं स्थानं गङ्गातीरवर्ति सकलं शक्रावतारनाम्ना प्रथितं बभूव। यत्र च शची स्नानमकरोत्, तत्स्थानं शचीतीर्थमभवत्।

हस्तिनापुरं गच्छन्ती शकुन्तला शचीतीर्थे शचीं ववन्दे। तस्मिन्नेव काले तस्या अङ्गुलिगतमङ्गुलीयकं प्रभ्रश्य गङ्गासलिले पतितम्[३७]।

तस्मिन् युगे शक्रावतारे धीवराणां निवासोऽवर्तत। अत्रत्यः कश्चिद् धीवरो ह्येको[३८] मत्स्योदरात्तदङ्गुलीकमलभत।

शक्रावतारतीर्थं मुजफ्फरनगरजनपदे गङ्गातीरे स्थितेन शुक्करतालेन परिचीयते[३९]। विजयेन्द्रकुमारमाथुरमहोदयः शुक्करताल-पदमेव शक्रावतारपदस्याऽपभ्रंशमलिखत्[४०]। अत्र गङ्गायाः परे पारे मंडावरस्थाने मालिनीसरितो गङ्गया सह सङ्गमो भवति। अनेनैव मार्गेण शकुन्तला कण्वाश्रमाद् हस्तिनापुराय प्रातिष्ठत। अत्राऽसौ गङ्गामुत्तीर्य तत्र सरिति सस्नौ। अथ च शचीं वन्दमानायास्तस्याः हस्ताङ्गुल्या अजानत्या एवाऽगुलीयकं प्रभ्रश्य सलिले पतितम्।

## (२०) शचीतीर्थम् –

शक्रावतारप्रसङ्गे शचीतीर्थमुपरिवर्णितमस्ति। तस्य स्थिति-स्तस्मिन्नेव स्थानेऽवर्तत, यत्र शची स्नानमकरोत्।

## (२१) सीतातीर्थम् –

भवभूतिर्दण्डकारण्ये सीतातीर्थं तत्रोल्लिख, यत्र गोदावरी सरिदुत्तीर्यते[४१]। वनवासावधौ रामो गोदावरीसरित्तीरे निवासाय कुटीरमकल्पयत्। तत्र सीता प्रतिदिवसं स्नानाय सरित्तीरमागच्छति

स्म। अतः स्थानमिदं सीतातीर्थाभिधानेन प्रथितं बभूव।

मध्यप्रदेशस्य दमोहजनपदे सुतारसरित्तीरेऽपि सीतानगराभिधानं प्राचीनतीर्थमेकं विद्यते।

## (२२) सोमतीर्थम् -

अभिज्ञानशाकुन्तलनाटके कालिदासःसोमतीर्थमुल्लिलेखाशकुन्तलां प्रति दैवस्य प्रतिकूलतां शमयितुं कुलपतिः कण्वः सोमतीर्थं गतः[४२]।

अभिज्ञानशाकुन्तलनाटकस्य केषुचित् संस्करणेषु प्रभासतीर्थमिति पाठो विद्यते। प्रभासतीर्थञ्च वर्तमानसमये सौराष्ट्रप्रदेशस्थितेन सोमपट्टनेन परिचीयते। अतः प्राचीनसाहित्यवर्णितस्य सोमतीर्थस्याऽवस्थितिस्तस्मिन् क्षेत्रे कल्पनीया यत्र वर्तमानकालीनं सोमपट्टनमवस्थितमस्ति।

प्रभासपट्टनस्य स्थितिः पश्चिमसमुद्रतटे सौराष्ट्रप्रदेशे द्वारकातः किञ्चिद्विप्रकृष्टान्तरालेन वर्तते। अत्राऽतिप्राचीनकालीने शिवमन्दिरे ज्योतिर्लिङ्गस्य प्रतिष्ठा बभूव। अस्मिन् प्रसङ्गे पौराणिकीयं कथा प्रसिद्धा दक्षप्रजापतिशापेन क्षयरोगग्रस्तश्चन्द्रो (सोमो) ऽत्र शिवमाराध्य क्षयरोगविमुक्तो बभूव।

अतः स्थानमिदं सोमतीर्थनाम्ना प्रथितां गतम्। उत्तरवर्तिनि कालेऽत्र सुप्रसिद्धस्य सोमनाथमन्दिरस्य रचना भक्त जनैः कारिता।

नन्दलाल डे महोदयः स्थानमेतदेव सोमतीर्थं प्रत्यापादयत्[४३]। भूगोलपत्रिकायाः भुवनकोषाङ्केऽपि लेखकेन तथ्यस्याऽस्य समर्थनं विहितम्[४४]।

गढ़वालक्षेत्रे केदारनाथोपत्यकायां सोमनाम्नी क्षुद्रसरिदेका मन्दाकिन्यां विलीयते। सङ्गमस्थानमिदं सोमप्रयागभिधानेन प्रसिद्धमस्ति। अति प्राचीनकालीनं पावनं प्रसिद्धं स्थानमिदं कैश्चिन्मनीषिभिः सोमतीर्थमिति परिचीयते। प्रभासपट्टनापेक्षातः स्थानमिदं कण्वाश्रमसन्निकटतरं विद्यते।

महाभारते कुरुक्षेत्रं निकषाऽपि सोमतीर्थस्यैकस्य वर्णनमुपलभ्यते। शिवसुतः कार्तिकेयोऽत्र तारकासुरं जघान[४५]। प्रभासपट्टनापेक्षातः स्थानमिदमपि कण्वाश्रमसन्निकटतरमस्ति। अतः सोमतीर्थस्याऽभिज्ञान-विषये स्थानान्यन्यान्यपि सम्भावनाविषयणि वर्तन्ते।

## (ख) ऋषीणामाश्रमाः

प्राचीनसाहित्ये ऋषीणां तपोवनानामाश्रमाणाञ्च सुविशदानि वर्णनानि समुपलभ्यन्ते। प्राचीनसंस्कृतनाटकप्रसङ्गैः केषाञ्चित् सुप्रसिद्धानामृषीणामाश्रणां स्थितिरत्रोपस्थाप्यते।

### (१) अगस्त्याश्रमः -

प्राचीनसाहित्ये लोककथासु च महर्षेरगस्त्यस्याऽऽश्रमः सुप्रसिद्धो वर्तते। महर्षिरयं विन्ध्यगिरेरुत्तुङ्गतामुल्लंध्य दक्षिणभारते भारतीय-संस्कृतिं प्रचारयामास[४६]। सुदूरं दक्षिणं यावत्तेन यात्रा विहिता[४७]। तमिलसाहित्ये वर्णनानि समुपलभ्यन्ते, यदगस्त्यमुनिरार्यधर्म-संस्कृतिप्रचाराय दक्षिणभारतमागत्याऽत्रैव स्थायिरूपेण निवासञ्चकार[४८]।

प्राचीनसाहित्ये मुनेरगस्त्यस्याऽऽश्रमाणां स्थितिरुत्तरभारते दक्षिणभारते च समानरूपेणाऽनेकेषु स्थानेषु वर्णिता समुपलभ्यते। अगस्त्यस्य पत्नी लोपामुद्रा पुराणप्रसिद्धासु तिसृषु महापतिव्रतास्वेका गण्यते[४९]। अतोऽगस्त्यस्य तत्पत्न्याः लोपामुद्रायाश्च प्रभावेण तयोराश्रमो ह्युत्तरवर्तिनि साहित्ये तीर्थरूपेण महतीं प्रतिष्ठां प्रसिद्धिञ्चाऽधिजगाम।

प्रियदर्शिकानाटिकायामगस्त्यतीर्थस्योल्लेखः कविना श्रीहर्षेण विहितः[५०]। कस्मिंश्चित् समयेऽत्र मुनेरगस्त्यस्य तपोवनमाश्रमो वा प्रतितस्थौ। अत्र स्नानं पूजनञ्चाऽतिपुण्यास्पदं पापविनाशनञ्च लोके प्रसिद्धं बभूव। प्रियदर्शिकानाटिकावर्णनेन प्रतीयते, यदाश्रमस्याऽस्य स्थितिरङ्गजनपदे क्वचिद् विन्ध्यवने सम्भाव्यते।

महाभारतेऽप्यगस्त्यस्याऽऽश्रमस्य वर्णनमुपलभ्यते। तीर्थयात्रा-प्रसङ्गेन पाण्डवाः गयातीर्थादग्रे गत्वाऽगस्त्यस्याऽऽश्रमं सम्प्रापुः[५१]।

अङ्गजनपदस्य स्थितिर्मगधजनपदात् पूर्वदिश्यासीत्। वर्तमानसमये राजगृहं निकषा स्थितिराश्रमस्याऽस्य सम्भावनीया।

स्कन्दपुराणस्य सेतुखण्डस्य षोडशेऽध्याये गन्धमादनपर्वते अगस्त्याश्रमस्य अगस्त्यतीर्थस्य च वर्णनानि समुपलभ्यन्ते। अत्राऽसौ मुनिर्भार्यया लोपामुद्रया सह न्यवसत्। गढ़वालमण्डले ऋषिकेशनगरान्मीलशतद्वयविप्रकृष्टान्तरालेन ह्युत्तरदिशि मन्दाकिन्याः वामतीरे मुनेरगस्त्यस्य प्राचीनमन्दिरं प्रतिष्ठितं वर्तते। बी० सी० ला महोदयेन तदेव स्थानमगस्त्याश्रमरूपेण सम्मतम्[५२]।

आर्यधर्मं संस्कृतिं च प्रचारयितुं प्रसारयितुं च मुनिरगस्त्यो विन्ध्यगिरिमुल्लंध्य दक्षिणभारतं जगाम। तत्रैवाऽसौ स्थायिनिवासमकल्पयत्। अतो दक्षिणभारतेऽनेकेषु स्थानेषु मुनेरगस्त्यस्याऽऽश्रमाणां परम्परा मनीषिभिर्विद्वद्भिर्वर्णिता। दण्डकारण्ये गोदावरीतीरे महर्षेरगस्त्यस्याऽऽश्रमोऽवर्तत[५३]। अत्राऽगस्त्येन सह ब्रह्मवेत्तारो ऋषयोऽनेके न्यवसन्। अगस्त्यान्मुनेर्ब्रह्मविद्यामध्येतुं बहवश्छात्राः समागच्छन्ति स्म[५४]। महर्षेरगस्त्येन निर्दिष्टो रामस्तस्याऽऽश्रमं निकषा स्वनिवासकुटीरमकल्पयत्[५५]।

अगस्त्याश्रमस्याऽभिज्ञानं नासिक (पञ्चवटी) क्षेत्रात् पञ्चदशमीलविप्रकृष्टान्तरालेन पूर्वदिशि अकोलाग्रामेण विधीयते[५६]।

अत्र वर्तमानकाले विशालाकारं कुण्डमेकमगस्त्यकुण्डाभिधानेन प्रसिद्धम्। नन्दलाल डे महोदयेन नासिकक्षेत्राच्चतुर्विंशतिमीलविप्रकृष्टान्तरालेन पूर्वोत्तरदिशि अगस्त्यपुरी प्राचीनागस्त्याश्रमो मतः[५७]।

प्राचीनग्रन्थेषु महाभारतादिष्वगस्त्याश्रमस्य स्थितिः दक्षिणसमुद्रतटेऽपि वर्णिता समुपलभ्यते[५८]। महाभारते दक्षिणसमुद्रतटे स्थितानां पञ्चतीर्थानां गणना कविना विहिता। तत्राऽगस्त्यतीर्थमपि विद्यते[५९]। द्वादशवर्षवनवासावधावर्जुनोऽत्र तीर्थयात्राञ्चकार भगवन्तं शिवञ्चाऽऽनर्च। तेनाऽगस्त्याश्रमोऽप्यवलोकितः।

अगस्त्यो मुनिर्विभिन्नविधानि विस्तृतानि भ्रमणानि विधायाऽऽर्यसंस्कृतिं प्राचारयत् प्रासारयच्च। अतो विभिन्नेषु प्रदेशेषु तस्याऽऽश्रमाणां प्रसिद्धिरवस्थितिश्च स्वाभाविकी। प्राचीनसंस्कृतग्रन्थेष्वगस्त्योऽसौ महान् मुनिर्महर्षिस्तपस्वी विद्वानाचार्यो धर्मप्रचारकः पर्यटकश्च विद्वद्भिः कीर्तितः। तस्याऽऽश्रमाणां वर्णनानि यत्र तत्र बहुशः समुपलभ्यन्ते।

## (२) अत्र्याश्रमः -

प्राचीनग्रन्थेषु महर्षिरत्रिः सप्तसु वैदिकेषु मन्त्रर्षिषु परिगण्यते। तस्य भार्या अनसूया सतीषु शिरोरत्नं कीर्तिता। पातिव्रत्यप्रभावेण सा ब्रह्माणं विष्णुं महेशञ्चपि महादेवत्रयं गर्भे दाधार।

वनवासावधौ रामश्चित्रकूटाद् दक्षिणदिशं प्रति गच्छन् महर्षेरत्रेराश्रमं प्राप्नोत्। शक्तिभद्रेणाऽऽश्चर्यचूड़ामणिनाटके वर्णितम् -

जानक्याः पातिव्रत्यविनयादिगुणैरभिभूता महर्षेरत्रेर्भार्याऽनसूया तामाशीर्वचोभिरभ्यषिञ्चद् यद् रामस्तां सदा विभूषणैर्विभूषितां द्रक्ष्यति[६०]।

कालिदासेन वर्णितम् - अनसूया सीताया अङ्गानि सुगन्धितैरङ्गरागैः प्रासाधयत्[६१]।

चित्रकूटस्य मन्दाकिन्याश्च सौन्दर्यं चित्रयन्[६२] कालिदासो लिलेख-महर्षेरत्रेर्भायाऽनसूया स्नानाय त्रिपथगां (मन्दाकिनीं) स्वाश्रमसन्निकटं प्रावाहयत्[६३]।

अत्रेराश्रमस्याऽभिज्ञानं चित्रकूटं निकषा मन्दाकिनीतीरे विधीयते। वर्तमानसमये सरिदियं पयस्विनीनाम्ना प्रसिद्धा। स्थानमिदं चित्रकूटवसतेरष्टमीलविप्रकृष्टान्तरालेन दक्षिणदिश्येकस्मिन् पर्वतीयस्थलेऽवतिष्ठते। अनसूयानाम्नाऽपीदं स्थानं प्रसिद्धम्। महर्षेरत्रेरनसूयायाश्च प्रतिमे तत्र प्रतिष्ठिते स्तः।

गढ़वालमण्डलेऽपि ह्यनसूयानामकं स्थानमेकं प्रसिद्धम्।

चमोलीजनपदस्य गोपेश्वरनगराच्चतुर्मीलविप्रकृष्टान्तरालेनाऽनसूयामन्दिरस्य स्थितिरस्ति। तदनन्तरञ्च किञ्चिद् दूर एव तुङ्गनाथशिखरं दृष्टिगोचरं भवति। लोकप्रसिद्धिरीदृशी यदत्रैव ब्रह्मविष्णुमहेशाः महादेवा अनसूयायाः गर्भाद् धरामवतीर्णाः।

**(३) कण्वाश्रमः -**

कण्वो मुनिर्वैदिकेषु सप्तर्षिषु गण्यते। ऋग्वेदस्याष्टममण्डलस्य कण्वो ऋषिः कण्ववंशजाश्च। प्राचीनभारतीयसाहित्ये महर्षेः कण्वस्याऽऽश्रमस्तीर्थरूपेण धर्मारण्यरूपेण तपोभूमिरूपेण विद्याकेन्द्ररूपेण च प्रसिद्धोऽवर्तत[६४]। कण्वः कुलपतिः कीर्तितः। अनेन हेतुना तस्याऽऽश्रमे शिक्षाया प्रमुखं तीर्थं प्रमाणीभवति।

कालिदासोऽभिज्ञानशाकुन्तलं नाटकं प्रणीय कण्वाश्रमस्य कीर्तिं सकलभुवने प्रासारयत्। महर्षिणा कण्वेनाऽत्र शकुन्तला धर्मसुतारूपेण पालिता। तस्याऽऽश्रमोऽयं हिमवदुपत्यकासु[६५] मालिनीसरितस्तटवर्त्यासीत्[६६]। मालिनीप्रभवा भूमिः हिमवदुपत्यकाभिः परिवृताऽवर्तत[६७]।

अनेकैर्विद्वद्भिः समीक्षकैः कण्वाश्रमस्याऽभिज्ञानं मंडावरनामनि स्थाने सुनिश्चितीकृतम्। सम्भवतः पाणिनिना स्थानमिदं मार्देयपुरनाम्नाऽभिहितम्[६८]। मंडावरस्य स्थितिर्बिजनौरनगराद् दशमीलमात्रविप्रकृष्टान्तरालेन पूर्वोत्तरदिशि मालिनीनद्यास्तटे वर्तते। अस्मात् स्थानात् सहारनपुरमुरादाबादरेलवेमार्गस्थितस्य चन्दोकस्टेशनस्याऽवस्थितिः चतुर्मीलविप्रकृष्टान्तरालवर्तिनी वर्तते। इम्पीरियल गजेटियर आफ इण्डिया ग्रन्थे कण्वाश्रमस्याऽवस्थितिर्मंडावरे लिखिता[६९]। बिजनौरजनपदस्य प्रारम्भिकभूगोलपुस्तकेऽपि मंडावरग्रामे कण्वाश्रमस्योल्लेखो विद्यते। मैक्समूलरमहोदयोऽपि मतमिदं समर्थयति[७०]। मंडावरग्रामाद् गङ्गामुत्तीर्य शुक्करतालमागत्य हस्तिनापुरगामी मार्गो विद्यते। मंडावरदुत्तरपश्चिमदिशि कजलीवनमस्ति। सम्भवतोऽत्रैव दुष्यन्तो मृगयाहेतोराजगाम।

परन्त्वन्येऽन्वेषकाः समीक्षकाश्च मनीषिणो नाऽनेन मन्तव्येन सहमताः। निधिविद्यालङ्करमहोदयेन लिखितम्

कण्वाश्रमस्य स्थितिर्वर्तमानचौकीघाटनामनि स्थानेऽवर्तत[७१]।

चौकीघाटस्थानं नजीबाबादनगराच्चतुर्दशमीलमात्र विप्रकृष्टा-न्तरालेन मालिन्यास्तटे कोटद्वार-हरिद्वार मार्गे च कोटद्वार नगरात् षण्मीलमात्रविप्रकृष्टान्तरालेन वर्तते। समीपमेव वर्तते नडानां (वेतसां) गहनं वनम्। वनमिदं महाभारते युगे नडपिन्नाम्ना प्रख्यातमासीत्। वनेऽस्मिन् तपश्चरतो विश्वामित्रस्य महामुनेः सम्बन्धो मेनकया सह सञ्जातः। फलञ्चाऽऽसीत् - शकुन्तलायाः मेनकागर्भादुद्भवः। मेनकया विश्वामित्राय समार्पिता, नडपिद्वने च जनकेन विश्वामित्रेण परित्यक्ता सा बालिका नाडपितीनाम्नाऽपि प्रथिता बभूव। (नडपिति वने परित्यक्ता नाडपिती)। अस्मादेव वनो द्देशाद् हिमालस्योपत्यकाः गिरिश्रेणयश्च प्रारभन्ते।

मतस्यैतस्याऽवलम्बनेनैव कालिदासवचनानि सफलीभवन्ति - कण्वाश्रमो हिमालस्योपत्यकायामस्ति, मालिनीमभितश्च हिमवतो ह्युपत्यकाः वर्तन्ते।

## (४) गौतमाश्रमः -

रामकथासु वर्णनान्युपलभ्यन्ते -

ताटकां निहत्य मारीचादिराक्षसांश्च विद्राव्य विश्वामित्रयज्ञं सम्पूर्णतां नीत्वा मिथिलायै प्रस्थितो रामो मार्गे गौतममुनेराश्रमं प्राप्नोत्। अत्र महर्षिशापेन पाषाणशिलाभूता महिल्यामसौ शापमुक्तां विधाय पुनः पूर्ववद् रूपशालिनीं समापादयत्[७२]।

रामायणे[७३] रघुवंशे[७४] च गौतमाश्रमो मिथिलां निकषा वर्णितः। आश्रमस्याऽस्याऽभिज्ञानं समीक्षकैर्विद्वद्भिरितिहासविद्भिश्च उत्तरपूर्व-रेलवेमार्गस्य कमलतोलस्टेशनं निकषा अहियारीग्रामेण कृतम्। ग्रामोऽयं सिंहेश्वरनाम्नाऽपि लोके प्रसिद्धमस्ति[७५]।

विश्वामित्रेण सह रामलक्ष्मणौ वैशालीमार्गेण मिथिलां गतौ। मध्य एव ताभ्यां गौतमाश्रमोऽवलोकितो, यत्र रामेणाऽहिल्या गौतममुनेः शापादुद्धृता।

अहियारीग्रामं परितः समीपस्थो प्रदेशः पावनतीर्थरूपेण लोके प्रथितः। अत्र अहिल्यायाः गौतमस्य च नाम्ना कुण्डसरश्चत्वर-मन्दिराणामवशेषाः वर्तमानकालेऽपि विद्यमानाः सन्ति[७६]। कमतोलास्टेशनतो द्वामीलविप्रकृष्टान्तरालेन पश्चिमोत्तरदिशि पुनौराग्रामे अहिल्यामन्दिरं विराजते।

मुनेर्गौतमस्याऽऽश्रमस्य स्थितिवर्णनमन्यत्राऽपि समुपलभ्यते। नन्दलाल डे महोदयोऽहिरौली (बक्सर) सन्निकटमथवाऽर्बुदगिरि-(आबूपर्वत) क्षेत्रे गौतमाश्रमस्य स्थितिमवर्णयत्[७७]। देहरादूनं निकषा ढकरानीनामनि स्थाने स्फटिकपाषाणनिर्मिता निर्मलसलिलपूर्णा वापिका वर्तते। स्थानीयाः जनश्रुतयः प्रसिद्धाः, यदत्रैव न्यायदर्शनप्रणेतुर्गौतमस्य निवासाश्रमो बभूव[७८]।

गौतमपुत्रः शतानन्दो जनकस्य पुरोहितोऽवर्तत। अतस्तस्या-ऽऽश्रमस्य स्थितिस्तत्रैव सम्भावनीया, यत्र तस्य मातापितरौ न्यवसताम्। जनकानां पुरोहितभावात्तस्य निवासो मिथिलानिकटमेव कल्पनीयः।

## (५) च्यवनाश्रमः -

विक्रमोर्वशीयनाटके कालिदासेन च्यवनाश्रमस्य सङ्केतो निर्दिष्टः। उर्वशी निजपुत्रमायुषं प्रसवानन्तरमेव च्यवनमुनेराश्रमं निनाय। अप्सरसा स्वपुत्रः संस्कारशिक्षादिप्रबन्धाय मुनये समर्पितः। तत्रैवाऽऽश्रमे तस्याऽऽयुषो जातकर्मादिसंस्काराणामनुष्ठानं बभूव। तत्रैव च तेन धनुर्वेदस्य शिक्षाऽपि समधिगता[७९]।

च्यवनाश्रमे धनुर्वेदशिक्षाया आयुधानामभ्यासस्य च सभ्यग्रूपेण प्रबन्धे सत्यपि तत्र जन्तूनां हिंसायाः निषेध एवाऽवर्तत। पादपस्थिते गृध्रे आयुषो बाणेन हते सति च्यवनस्तं बालकं मातापितरौ निकषा

प्रतिष्ठानपुरे प्राहिणोत्[८०]।

प्रतिष्ठानपुराधीश्वरस्य राजप्रासात् सङ्गमनीयमणिमामिषखण्डं मत्वा गृध्रस्तं जग्राह। तदनन्तरमुपरि व्योम्नि चक्राकारमुड्डीया[८१]ऽसौ दक्षिणदिशमुत्पपात[८२]।

च्यवनाश्रमस्य स्थितिः सामान्यतो मगधराज्ये गयाजनपदे समीक्षकैरितिहासविद्भिश्च कल्पिता। पटना-गयारेलवेमार्गे गयातः सप्तविंशतिमीलविप्रकृष्टान्तरालेन जहानाबादस्टेशनो विद्यते। तत्र षट्त्रिंशन्मीलविप्रकृष्टान्तरालेन वर्तते देवकुण्डाभिधानं क्षेत्रम्। तदेव क्षेत्रं च्यवनाश्रमरूपेण लोके प्रसिद्धम्। अस्मिन्नेव क्षेत्रे तपसि स्थितस्य च्यवनस्य चक्षुषी शर्यातिकन्या सुकन्या प्रास्फोटयत्। तदनन्तरञ्चाऽसौ

च्यवनमुनिं परिणेतुं बाध्या बभूव। सुकन्याया वन्दनाभिः प्रसन्नाभ्यामश्विनीदेवाभ्यां चिकित्सितो निर्दिष्टश्च च्यवनोऽस्मिन्नेव देवकुण्डे स्नात्वा दृष्टिशक्तिमधिजगाम, अथ च नवयौवनेनापि विभूषितो बभूव।

परन्तु कालिदासकृतविक्रमोर्वशीयनाटकवर्णनमनुसृत्य च्यवनाश्रमस्य स्थितिः प्रतिष्ठानपुरं (गङ्गायाः वामे तटे वर्तमानः झूसीग्रामः) निकषा दक्षिणदिश्यनुमीयते। महाभारतोक्तायां सुकन्याकथायां च्यवनाश्रमो नर्मदातटवर्ती निर्दिष्टः[८३]। अस्य स्थितिर्वैदूर्यपर्वतानन्तरं विद्यते[८४]। वैदूर्यपर्वतः सम्भवतः नर्मदातटवर्ती स्फटिक (सङ्गमरमर) गिरिरत्र प्रोक्तः। तन्निकटमेव भेड़ाघाटनामनि स्थाने वैदूर्यगिरेः कल्पना मनीषिभिः कृता। स्थानमिदं जबलपुरनगरात् त्रयोदशमीलविप्रकृष्टान्तरालेन स्थितम्।

अथ च लोककिम्वदन्त्यत्र प्रसिद्धा - अत्र भृगुमुनेराश्रमोऽवर्तत। च्यवनश्च भृगुसुतोऽभवत्[८५]।

भेडाघाटनामकं स्थानमिदं प्रतिष्ठानपुरतो दक्षिणदिग्वर्त्येवाऽस्ति। अतो विक्रमोर्वशीयनाटके वर्णितस्य च्यवनाश्रमस्य स्थितिरत्रैवा-

ऽनुमेया[८६]।

## (६) परशुरामाश्रमः -

प्राचीनसाहित्ये परशुरामेण महर्षिणा महती प्रसिद्धिः कीर्तिश्चाऽधिगता। विष्णोर्दशावतारेषु परशुरामोऽपि गण्यते। रेणुकायाः जमदग्नेश्च सुतोऽसौ लोके जामदग्न्यनाम्ना प्रथितो बभूव। कार्तवीर्याजुनो जमदग्निं जघान। अतः पितृवधसंक्रुद्धोऽसावेकविंशतिवारं समग्रां क्षत्रियजातिं संहत्य सकलां भूमिं ब्राह्मणाय कश्यपाय ददौ। तदनन्तरं महेन्द्रगिरिस्तेन स्वनिवासो विहितः।

प्राचीनकालीनाभिर्महर्षिपरशुरामसम्बन्धिनीभिः कथाभिर्वेद्यते, यदयं परशुरामो मुनिः पूर्वं तावज्जनकेन जमदग्निना सह तस्यैवाऽऽश्रमे न्यवसत्। आश्रमस्याऽस्य स्थितिरुत्तरप्रदेशस्य गाजीपुरजनपदे प्रसिद्धा। केषाञ्चिद् विदुषामत्र मतं - यदाश्रमोऽयं बलियानगरात् षट्त्रिंशन्मीलविप्रकृष्टान्तरालेन पश्चिमोत्तरदिशि खैरादिक्षेत्रेऽवर्तत[८७]।

पौराणिककथा अत्र प्रतिपादयन्ति, यज्जमदग्नेर्महर्षेराश्रमो गढ़वालप्रदेशस्योत्तरकाशीनगरेऽपि सिद्ध्यति[८८]। अत्र कार्तवीर्यार्जुनो जमदग्नेः सम्बन्धी श्यालीपतिः सेनया सह समायातः। कामधेनोः प्रभावेण जमदग्निस्तं राजोचितातिथ्येन सभाजयामास। परन्तु कार्तवीर्यार्जुनो जमदग्निं निहत्य कामधेनोरपहरणस्य प्रयासमकरोत्। पितुरिमां दुरवस्थामवलोक्य परशुरामः कार्तवीर्यार्जुनस्य वधाय प्रतिजज्ञौ।

क्षत्रियाणां वधं विधाय परशुरामो सकलां भूमिं ब्राह्मणेभ्य उपहृत्य दक्षिणं गत्वा महेन्द्रं पर्वतं स्वनिवासमकल्पयत्।

राजशेखरेण वर्णितम् -

महेन्द्रपर्वतभूमिरियं कोंकणप्रदेश एव वर्तते[८९]।

महाभारतकारो लिलेख -

परशुरामः सकलां भूमिं ब्राह्मणेभ्यो दत्त्वा स्वनिवासाय पयोनिधिं भूमिं ययाचे। ततः सागरेण प्रदत्तायां भूमावाश्रमं प्रकल्प्याऽसौ तत्र

न्यवसत्। अपरान्तक्षेत्रान्तर्गता[९०] सा भूमिः शूर्पारकाभिधानेन प्रथिता लोके बभूव।

वर्तमानमुम्बईसन्निकटं नालसोपाराक्षेत्रमेव प्राचीनकालीनं शूर्पारकं वर्तते। अत्र परशुरामस्याऽऽश्रमं ववृते।

**(७) बाल्मीक्याश्रमः -**

रामायणकर्ता महर्षिर्महाकविः बाल्मीकिः संस्कृतभाषाया आदिकविर्जगति प्रसिद्धः। अतो सकलभुवि महद् गौरवं सम्मानञ्चाऽसौ संस्कृतज्ञेषु दधाति। प्राचीनसाहित्यमनुसृत्य महाकवेरस्य बाल्मीकेः सम्बन्धस्तमसागङ्गाभ्यां सरिद्भ्यां विशेषरूपेण प्रतिभाति। अतस्तस्य महर्षेराश्रमस्य स्थितिः सरितोरेतयोः सन्निकटवर्तिनी सम्भावनीया। अनयोरपि नद्योस्तमसायाः महत्त्वमधिकं कल्पनीयम्। लोके कथा प्रसिद्धा -

एकस्मिन् दिवसे माध्यदिनसवनाय बाल्मीकिस्तमसातीरमाजगाम। तत्राऽसौ व्याधेन बाणेन विद्धं मृत्युना परिगृहीतं भूमौ विचेष्टन्तं क्रौञ्चपक्षिणमेकं ददर्श । प्रिया तस्य विलपन्ती क्रन्दमाना व्योम्न्युपरि चक्राकारमुत्पतति स्म। करुणभावसम्भृतं दृश्यमेतदवलोक्य महाकवेर्मुखान्निम्नलिखितं छन्दः प्रादुर्बभूव -

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।

तदनन्तरं ब्रह्मणो निदेशेन बाल्मीकिः छन्दोबद्धं रामचरिताभिव्यञ्जकं रामायणकाव्यं न्यबध्नात्[९१]।

रामायणे वर्णनमुपलभ्यते -

वनवासस्य प्रारम्भिककाले चित्रकूटं निकषा बाल्मीकेराश्रमं गत्वा रामो महर्षेर्दर्शनेनाऽऽत्मानं कृतार्थमकरोत्[९२]। तदनन्तरं तस्यैवाऽऽदेशेनाऽसौ निवासाय चित्रकूटे पर्णकुटीरमकारयत्। रामस्याऽऽदेशेन सीतया सह लक्ष्मणो गङ्गामुत्तीर्य तां वनेषु विससर्ज।

तत्र बाल्मीकिः सीतामपश्यत्। ताञ्च स्वाश्रममानिनाय। अत्र सीतया द्वौ सुतौ लवकुशौ प्रसूतौ।

विवरणेनाऽनेन सुस्पष्टमेव यन्महर्षेर्बाल्मीकेराश्रमस्तस्मिन्नेव स्थानेऽवर्तत यत्र तमसासरितः (रीवाप्रदेशात् प्रवहन्ती टौंस नदी) गङ्गया सङ्गमो भवति। रामायणकाव्ये सुस्पष्टमेव लिखितमस्ति -

गङ्गायाः पारे तमसातटे बाल्मीकेराश्रमः सुशोभते[१३]। अत्र तथ्यमन्यदपि विचारणीयम् -

कानपुरनगराद् द्वादशमीलप्रकृष्टान्तरालेन पूर्वोत्तरदिशि विठूरनामकं स्थानमस्ति (प्राचीनं नाम ब्रह्मावर्तम्)। किम्वदन्त्यत्र लोके प्रसिद्धा -

अत्र ब्रह्मावर्ते ब्रह्मा अश्वमेघं यज्ञं याजयामास।

बाल्मीकिः प्राचेतसः (ब्रह्मणः सुतः) प्राचीनसाहित्ये प्रसिद्धः। प्राचेतसाभिधानेनाऽप्यसौ लोके प्रख्यातो बभूव[१४]। अतो विठूरस्थाने बाल्मीकेराश्रमस्य स्थितिर्निसर्गसिद्धा सम्भावनीया।

बिठूरे बाल्मीकेराश्रमः प्रसिद्धः। तत्र समीपमेव बाल्मीकि-कूपस्याऽवस्थितिर्वर्तति। बाल्मीकीश्वरमहादेवमन्दिरञ्च सन्निहितमस्ति। तत्र वर्तति सीताकुण्डमथ च लवकुशनिवासोऽथ च स्वर्गसोपानम्। आश्रमं निकषा क्षुद्रैका जलधारा प्रवहन्ती गङ्गायां विलीयते। जलधारेयमत्र लोननाम्ना नोननाम्ना वाऽभिधीयते। सम्भवतो धारेयमेव प्राचीनसाहित्ये निर्दिष्टा तमसाऽस्ति[१५]।

अत्र स्थितिरियमपि चिन्तनीया, यत्तमसा-गङ्गासङ्गमो बिठूरस्थानञ्च विप्रकृष्टान्तरालवर्तिनौ वर्तेते। तत्कथमत्र द्वयोरेव स्थानयोर्बाल्मीकेराश्रमस्य स्थितिः सम्भवा ? अथ कल्पनेयमपि सम्भाव्यते, यद् बाल्मीकेराश्रमौ द्वौ द्वयोः स्थानयोरवर्तेताम् - ब्रह्मावर्तेऽयोध्यासमीपे च। ब्रह्मावर्तस्थानं तस्य महर्षेर्जन्मभूरासीत्। बाल्मीकिर्दशरथश्च द्वावेव परमसुहृदावास्ताम्। अतो बाल्मीकिना स्वकीयो द्वितीय आश्रमोऽपि

अयोध्यासन्निकटं तमसागङ्गासङ्गमं निकषा स्थापितः ।

रामायणमहाकाव्यस्योत्तरकाण्डे वर्णनानि सन्ति, यद्रामेणाऽश्वमेघयज्ञस्याऽऽयोजनं नैमिषारण्ये विहितम्[९६] । दिङ्नागेन कुन्दमालानाटके वर्णनस्याऽस्य सुसंस्थापनं विहितम्[९७] । लवकुशाभ्यां सीतया च सह बाल्मीकिर्यज्ञेऽस्मिन् सम्मिलितुं नैमिषारण्यमाजगाम । तत्र तेषां रामेण सह परस्परमवलोकनं सम्मिलनमपि सम्पन्नं बभूव । विठूरान्नैमिषारण्यमार्गः सरलतरो लघुतरश्च वर्तते ।

प्राचीनसाहित्ये बाल्मीकेराश्रमो विद्याकेन्द्ररूपेण प्रसिद्धो बभूव । बाल्मीकिः स्वयमपि महाकविर्मनीषी विद्वान् वेदज्ञश्च ववृते । लवकुशौ बाल्मीकिविद्याकेन्द्रे चैवाऽध्ययनञ्चक्रतुः । तत्रैव तौ विविधशास्त्राणि धनुर्वेदशिक्षया सहाऽध्यगच्छताम् । आत्रेयी नाम्नी छात्रा तयोः सहपाठिन्यवर्तत । परन्त्वसावध्ययने विघ्नमनुभूय विद्याकेन्द्रं तत्परित्यज्य महर्षेरगस्त्यस्य विद्याकेन्द्रं सम्प्राप्ता[९८] ।

## (८) मतङ्गाश्रमः –

रामायणमहाकाव्ये मतङ्गमुनेर्वर्णनानि समुपलभ्यन्ते । तस्याऽऽश्रमः पम्पासरः निकषा ऋष्यमूकगिरेरुपत्यकायां स्थितोऽवर्तत । मतङ्गस्य शापाद् भीतो बालिरत्र ऋष्यमूकपर्वतमागन्तुमसमर्थो बभूव[९९] । अतस्तस्याऽनुजेन सुग्रीवेण ऋष्यमूकगिरिरेव स्वनिवासः कल्पितः । श्रमणाभिधाना शबरी मतङ्गमुनेः शिष्या बभूव । मतङ्गाश्रमं निकषैव सा निवासाय स्वकुटीरमकल्पयत्[१००] ।

वर्तमानकाले ऋष्यमूकं निकषा पम्पासरसश्च सन्निकटमनेकानि स्थानानि मतङ्गाश्रमनाम्ना प्रसिद्धानि सन्ति । शबरी स्वाश्रमसमीपं रामलक्ष्मणौ मनोरमं मतङ्गवनमदर्शयत्[१०१] । पम्पासरःसन्निकटमेकोऽन्यो जलाशयो मतङ्गसरोऽभिधीयते । ऋष्यमूकगिरिसमीपवर्तिनी भूमिरपि मतङ्गगिरिनाम्ना प्रसिद्धा[१०२]वर्तते । अतो मतङ्गाश्रमस्य स्थितिस्तत्रैव कल्पनीया ।

## (९) मारीचाश्रमः -

कालिदासेन हेमकूटनाम्नि किम्पुरुषपर्वते मारीचस्य महर्षेराश्रमो वर्णितः। मारीचोऽयं ब्रह्मणः पौत्रो मरीचिप्रजापतेश्च सुतो जातः। स्वयमप्यसौ प्रजापतिर्बभूव। असौ सुराणामसुराणाञ्च गुरुरपि प्रोक्तः[१०३]।

कालिदासस्य हेमकूटगिरियमनेकाभिः कल्पनाभिराच्छन्नोऽस्ति। वर्णनेऽस्मिन्नतिशयोक्तयोऽपि बह्व्यः संलक्ष्यन्ते। पूर्वदिशः पश्चिमदिक्पर्यन्तमयं कनकरसनिष्यन्दी प्रोक्तः। अत्राऽप्सरसो निवसन्ति। तपस्विनश्च तपश्चरन्ति। अत्र रत्नशिलाः मन्दाराशोक-तरवश्च स्वर्णकमलानि च अपराजितादिवनस्पतयश्च सिंहसर्पादिजन्तवश्च प्राचुर्येण भवन्ति।

हेमकूटपर्वतस्य स्थितिरस्मिन्नेव पुस्तके पर्वतप्रकरणेषु वर्णिता। वराहपुराणानुसारं भागीरथ्यलकनन्दायमुनानदीनामुद्भवक्षेत्राणि हेमकूटगिरिस्थितान्येव वर्तन्ते। अतो मारीचाश्रमस्थितिः गढ़वालमण्डले सुदूरोत्तरीयेषूत्तुङ्गपर्वतीयक्षेत्रेषु सम्भाव्यते।

## (१०) वसिष्ठाश्रमः -

वसिष्ठः प्रसिद्धेषु वैदिकेषु सप्तर्षिषु गण्यते। रघुवंशीयानां पार्थिवानां गुरुरूपेणाऽसौ प्राचीनसाहित्येऽतिशयेन प्रसिद्धः[१०४]। रघुकुलराजपुत्राणां शिक्षादीक्षादिकार्यभारवहनं वसिष्ठस्यैवोत्तरदायित्वमवर्तत[१०५]।

वसिष्ठस्य राजगुरुपदभावात्तस्याऽऽश्रमस्य स्थितिरयोध्यातो नाऽतिदूरवर्तिनी सम्भावनीया। कालिदासो लिलेख -

पुत्रलाभार्थमयोध्यापतिर्दिलीपो वसिष्ठाश्रमं जगाम। आश्रमोऽयमयोध्यातो नातिदूरवर्ती बभूव। हिमालयस्योपत्यकास्वस्य स्थितिरासीत्। रथमारूढ़ो दिलीपः सम्पूर्णैकदिवसीयां यात्रां विधाय मार्गमतिक्रम्य सायंसमये यदाऽऽश्रममाप्नोत्, तस्मिन् काले रथाश्वाः परमश्रान्ताः बभूवुः[१०६]। अत्रैवाऽऽश्रमे निवसन्नसौ चारणाय नन्दिनीं प्रतिदिनं वनं निनाय। वनमिदं हिमालयस्योपत्यकायां सुदूरं यावद् विस्तीर्णमासीत्। एकस्मिन्

दिवसे सा धेनुर्नन्दिनी गङ्गाप्रपातान्तविरूढानि शष्पाणि चरन्ती गुहामेकां प्रविष्टा[१०७]।

कालिदासस्याऽनेन वर्णनेन स्पष्टमेव, यद् वसिष्ठाश्रमो-ऽयोध्यात उत्तरदिशि हिमालयस्योपत्यकासु रथेनैकदिवसगामिनि मार्गे भवितव्यः।

अस्मिन् प्रसङ्गे कविः गङ्गाप्रपातान्तपदस्य प्रयोगञ्चकार, न तु गङ्गापदस्य। गङ्गाप्रपातोऽयमाश्रमसन्निकटवर्तिनि वनेऽवर्तत। कविरत्र गङ्गापदप्रयोगं परित्यज्य गङ्गाप्रपातपदप्रयोगमकरोत्। अनेन कस्याऽपि पर्वतीयप्रपातस्याऽवबोधो जायते, यः कस्यामपि सरिति विलीयते। अतोऽयोध्यात उदीच्यां वर्तमाने नेपालदेशे यत्र गिरिशृङ्खलाः प्रारभन्ते, तत्रैव वसिष्ठाश्रमोऽपि सम्भाव्यते।

समीक्षकैरितिहासविद्भिश्च वसिष्ठाश्रमस्थितिसम्बन्धे विविधाः कल्पनाः प्रस्तुताः। केचन विद्वांसोऽत्र मतं प्रस्तुवन्ति, यदर्बुद (आबू) पर्वते वसिष्ठाश्रमोऽवर्तत[१०८]। परन्तु स्थानमिदमयोध्यातोऽतिदूरं तथा वर्तते, यथा रघुवंशीयानां पार्थिवानां कुलगुरोस्तत्र स्थायिनिवासो न सम्भवः प्रतीयते। मधुसूदनओझा महोदयेन सरस्वती (सरयूः घाघरा वा) तीरे वसिष्ठाश्रमस्थितिः प्रतिपादिता[१०९]।

रंगनाथ रामचन्द्रदिवाकर महोदयो गढ़वालमण्डले बदरी-केदारक्षेत्रमध्ये कस्मिंश्चित्स्थाने वसिष्ठाश्रमं प्रतिपादयति[११०]। परन्तु स्थानस्यैतस्यापि रघुवंशीयराजधानीतोऽतिदूरत्त्वात् स्वीकृतिर्न सम्भवति।

प्रो० हटवालमहोदयस्य मतं विद्यते, यद् भागीरथीसहायिकायाः भिलङ्गनाया उद्गमनस्थले वसिष्ठाश्रमोऽवर्तत। अद्याऽप्यत्र वसिष्ठगुहावसिष्ठकुण्डादीनामवशेषाः समवलोक्यन्ते[१११]। परन्तु स्थानमिदमपि सुदूरमेव वर्ततेऽयोध्यातः। सम्भवतो वसिष्ठः कस्मिंश्चित् समये तीर्थयात्रानिमित्तेनात्र समागत्य तपस्तेपे।

महाभारतकारेण वर्णितम् –

पाण्डवानां वनवासावधावर्जुनः कदाचित् तीर्थयात्रानिमित्तं वसिष्ठपर्वतमाजगाम। असावगस्त्यवटमपि प्राप्नोत्। स्थानमिदं गङ्गाद्वारसमीपमेवाऽवर्तत। ऋषिकेशनगराद्दशमीलविप्रकृष्टान्तरालेन ह्युत्तरस्यां गङ्गाहिंवलसङ्गमे गङ्गायाः वामे तटे वसिष्ठगुहा वर्तते। महाभारतकारः सम्भवतः स्थानमिदमेव वसिष्ठपर्वतमाचख्यौ। परन्तु स्थानस्याऽस्याऽपि संस्थितिरयोध्यातोऽतिदूरवर्तिनी वर्तते। अतः स्थानमिदमिक्ष्वाकुकुलपार्थिवानां कुलगुरोः वसिष्ठस्याऽऽश्रमरूपेण न माननीयमस्ति।

अत्राऽऽगमनायाऽयोध्यातो नैकदिवसीया यात्रा पर्याप्ता।

उपरिकृतं सम्पूर्णमपि विवेचनं वसिष्ठाश्रमस्य यथार्थसंस्थितिं न बोधयति। तथापि कालिदासस्कृतवर्णनानि सम्मान्य स्थितिरेषा स्वीकरणीया -

वसिष्ठाश्रमोऽयोध्यात उत्तरदिशि नेपालराज्ये हिमालयस्योपत्यकासु तत्र सम्भाव्यते, यत्र सरयूसरितः काचिद्धारा पर्वतेषु प्रपातरूपेण संदृश्यते। स्थानमिदं वर्तमाननेपालगंजनगरं निकषा सम्भवति। अन्येषु स्थानेषु वसिष्ठाश्रमवर्णनानि यानि समुपलभ्यन्ते, तेभ्योऽनुमीयते, यत् कदाचित्तेषु स्थानेषु वसिष्ठो मुनिस्तीर्थयात्राहेतोराजगाम तपश्च चचार।

**(११) विश्वामित्राश्रमः -**

विश्वामित्रोऽपि महर्षिः सप्तसु वैदिकेषु ऋषिषु गण्यते। प्राचीनभारतीयसाहित्येऽसौ ब्रह्मर्षिरतिकर्मनिष्ठस्तेजस्वितमः सामर्थ्यशाली च सम्मतः। ऋग्वेदस्य तृतीयमण्डलस्य ऋषिर्विश्वामित्र एव वर्तते।

आयुषः प्रारम्भिककाले विश्वामित्रस्य क्षत्रियवर्णस्य कान्यकुब्जाधिपतेस्तस्य राजर्षेः राजधानी गाधिपुराभिधानं नगरमासीत्। परन्तु क्षत्रियं भावं प्रति विरक्तोऽसौ सुकठोरं तपस्तप्त्वा तत्प्रभावेण ब्राह्मणत्वमधिगम्य ब्रह्मर्षिपदमलभत[११२]।

मुरारिरवर्णयत् -

विश्वामित्राश्रमः कौशिकीसरितस्तटेऽवर्तत। महनीयस्याऽऽचार्यस्य कुलपतेराश्रमे स्वाध्यायनिरतानामन्तेवासिनामध्ययनध्वनिः सुदूरेष्वपि स्थानेषु श्रुतिगोचरीभवति स्म[११३]।

कौशिकीसरिद् वर्तमानकालेऽपि कोसीति नाम्ना लोके ज्ञायते। पूर्वनेपालप्रदेशात् प्रभवमासाद्य सा नदी बिहारप्रान्ते प्रवहन्ती बंगजनपदे गङ्गायां विलीयते।

रामायणमहाकाव्ये कथा प्रसिद्धा -

यज्ञेषु राक्षसैः पुनः पुनः कृतैर्विघ्नैराहतो विश्वामित्रो महर्षिर्नरपतिं दशरथमाससाद। तत्राऽसौ सहायतायै दशरथं रामं ययाचे। रामलक्ष्मणाभ्यां सहाऽसौ वामनाश्रमतिक्रम्य सिद्धाश्रमं प्राप्नोत्। विश्वामित्रस्याऽऽश्रमः सिद्धाश्रमनाम्ना प्रसिद्धिमवाप। स्थितिरस्य गङ्गासरय्वोः सङ्गमस्थलेऽवर्तत[११४]। निर्विघ्नरूपेण यज्ञे निष्पन्ने विश्वामित्रेण सह रामलक्ष्मणौ मिथिलां जग्मतुः।

वर्तमानसमये गङ्गासरय्वोः सङ्गमो बिहारजनपदे छपरानगरसन्निकटं वर्तते। परन्तु रामायणकथायुगे सङ्गमस्थलमिदं सुदूरपश्चिमदिग्वर्त्यासीत्। सङ्गमस्थितिस्तस्मिन् युगे सम्भवतो वर्तमान बस्तरनगरं निकषा बभूव। अतोऽनेके विद्वांसः समीक्षकाश्च विश्वामित्राश्रमस्थितिं बक्सरनगरसमीपं प्रतिपादयन्ति[११५]। अत्र गङ्गायाः परे पारे भयावहमरण्यमासीत्। अत्र ताटकामारीचादयो राक्षसाः निवसन्ति स्म।

बक्सरनगरं निकषा यत्र विश्वामित्राश्रमोऽयं प्रोक्तः, तत्राऽन्वेषकैरितिहासविद्भिः प्राचीनकालीना यज्ञकुण्डादिसामग्री सम्प्राप्ता। बक्सरनगरे रामरेखाघट्टरामेश्वरमन्दिरादीनि प्रसिद्धानि तीर्थस्थानानि वर्तन्ते।

बक्सरनगरस्य संस्थितिः मुगलसराय-पटनारेलमार्गे पटनानगरात् पश्चिमदिग्वर्तिनी वर्तते। अथ बलियानगरादपीदं स्थानं

नाऽतिदूरमवतिष्ठते।

श्रमणव्यसनिनो विश्वामित्रस्याऽऽश्रमाणां संस्थितिरनेकेषु स्थानेषु सम्भवति। तस्यैक आश्रमो यदि गङ्गासरयूसङ्गमे सम्भाव्यते, द्वितीयोऽप्याश्रमः कौशिकीसरितस्तटेऽपि सम्भवति। तस्य महर्षेरेकोऽन्यो-ऽप्याश्रमः कण्वाश्रमं निकषा नडपिति वने बभूव। अत्र तपश्चरतस्तस्य मेनकया सह सङ्गमो बभूव[११६]। परिणामतः शकुन्तला पृथिव्यामवतीर्णा।

**(१२) व्यासाश्रमः –**

वेदानां सम्पादको महाभारतमहाकाव्यस्य च रचयिता अष्टादशपुराणानाञ्च सङ्ग्रहकर्ता[११७] महर्षिर्व्यासः प्राचीनभारतीयसाहित्ये प्रथितकीर्तिरतितरां प्रसिद्धो बभूव। भारतवर्षस्य विभिन्नेषु प्रदेशेषु व्यासाश्रमाणां परम्परा समुल्लिखिता समुपलभ्यते।

सत्यवतीपराशरयोः सुतोऽवर्तताऽयं व्यासो महर्षिः। निषादराजस्य सुतेयं सत्यवती हस्तिनापुरं निकषा गङ्गायां नौकां सञ्चालयन्ती यात्रिणां पारोत्तारणकार्यं सम्पादयति स्म। स्वाश्रमं गच्छन् नौकारूढः पराशरो मुनिः सत्यवत्यामासक्तचित्तो बभूव। तयोः संयोगो व्यासोद्भवहेतुरभवत्। अतो व्यासाश्रमो हस्तिनापुरं निकषा पारेगङ्गं सम्भावनीयः।

महर्षेर्व्यासस्याऽऽश्रमाणां स्थितयो भारतवर्षस्य विभिन्नेषु प्रदेशेषु स्थानेषु च प्रसिद्धाः वर्तन्ते। यमुनातटवर्तिनीं कालपीनगरीं निकषा व्यासाश्रमस्य स्थितिरभिधीयते। तत्रैकोन्नतभूमिभागो व्यासटीलानाम्ना प्रसिद्धः। क्षेत्रमिदञ्च व्यासक्षेत्रं लोकेऽभिहितम्।

महाभारतस्य वनपर्वणि व्यासस्थली वर्णिता। पुत्रशोकसन्तप्तो व्यासो महर्षिरत्र शरीरविसर्जननिश्चयञ्चकार[११८]। प्रसङ्गतः स्थानमिदं वर्तमानकुरुक्षेत्रं निकषा प्रतीयते[११९]।

गढ़वालमण्डले द्वे स्थाने व्यासाश्रमनाम्ना प्रसिद्धे स्तः। प्रथमं तावद् व्यासघाटाभिधानं स्थानं विद्यते। स्थानमिदं गङ्गायाः वामे तटे गङ्गा-नबालिका (नयार) सङ्गमस्थले प्रसिद्धम्। व्यासघाटस्य

स्थितिर्देवप्रयागाद् दक्षिणदिशि नवमीलविप्रकृष्टान्तरालेन ऋषिकेशाच्चोत्तरस्यां त्रिंशन्मीलविप्रकृष्टान्तरालेन वर्तते। अत्र व्यासमन्दिरे महर्षेर्व्यासस्य प्रतिमा प्रतिष्ठिताऽस्ति। क्षेत्रमिदं महर्षेर्व्यासस्य तपःसंसिद्धिक्षेत्रमभिधीयते।

द्वितीयं स्थानं विद्यते - व्यासगुहा। गढवालमण्डले प्रसिद्धं तीर्थं विद्यते - बदरीनाथः। बदरीनाथ-वसुधारामार्गे बदरीनाथतीर्थ-स्थलान्मीलद्वयविप्रकृष्टान्तरालेन मणिभद्रपुरग्रामे (माणाग्रामे) गुहैका व्यासगुहेत्यभिधीयते। लोकप्रसिद्धिरियमीदृशी वर्तते -

महर्षिणा व्यासेनाऽत्र महाभारतमहाकाव्यं विरचितमष्टादश-पुराणानाञ्च सङ्कलनं सम्पादनञ्चाऽपि विहितम्। व्यासगुहासन्निकटमेव गणेशगुहा वर्तते। पुराणेषु कथा प्रसिद्धा, यदत्र शिवसुतो गणेशो महर्षेर्व्यासस्य लिपिककार्यभारमुवाह, तेषु च दिवसेष्वसावस्मिन्नेव गणेशगुहागृहे न्यवसत्।

## (१३) शरभङ्गाश्रमः -

भवभूतिर्दण्डकारण्ये शरभङ्गमुनेराश्रमपदमवर्णयत्। असौ मुनिः भगवन्तं श्रीरामं साक्षाद् विष्णोरवताररूपं समलक्षयत्। रामस्य दर्शनं विधाय स्वात्मानञ्च कृतकृत्यं मत्वाऽसौ स्ववपुषं यज्ञाग्नौ जुहाव[१२०]।

शरभङ्गाश्रमस्योल्लेखो बाल्मीकिना कालिदासेनाऽपि च विहितः। रामायणमहाकाव्ये बाल्मीकिः शरभङ्गाश्रमं दण्डकारण्यस्थित-मवर्णयत्[१२१]। अथ च कालिदासेन वर्णितम् -

पुष्पकविमानमारुह्य आकाशमार्गेणाऽयोध्यां निवर्तमानो रामः सीतां शरभङ्गाश्रममदर्शयत्।

तुलसीदासेनाऽपि रामचरितमानसमहाकाव्ये शरभङ्गाश्रमस्य सङ्केतो विहितः[१२२]।

शरभङ्गाश्रमस्य स्थितिरुत्तरप्रदेशस्य बांदाजनपदेऽभिधीयते।

इलाहाबाद-जबलपुररेलमार्गे लोकप्रथितं मानिकपुररेलवेस्टेशनं विद्यते। तस्मात् स्थानात् पञ्चदशमीलविप्रकृष्टान्तरालेन टिकरियास्टेशनं

वर्तते। ततश्च पदातिमार्गेण दशमीलविप्रकृष्टान्तरालेन शरभङ्गाश्रमस्य स्थितिरस्ति। पदातिमार्गोऽयं भवावहवनमध्यवर्ती वर्तते। अथ द्वितीयोऽपि पदातिमार्गो जैतवारारेलवेस्टेशनात् प्रसरति। जैतवारातः शरभङ्गाश्रमः पञ्चदशमीलविप्रकृष्टान्तरालेन तिष्ठति।

वर्तमानसमये आश्रमेऽस्मिन्नेकः कुण्डोऽवलोक्यते। लोके विराधकुण्डाभिधानेनाऽयं प्रसिद्धः। समीपस्थं वनं विद्यते विराधवनम्। तत्रैकं राममन्दिरमस्ति। लोके प्रसिद्धिरत्रेदृशी वर्तते -

अस्मिन्नेव स्थाने शरभङ्गो मुनिः दर्शनं रामस्य संप्राप्य कृतार्थमात्मानं मन्यमानो **निजवपुषं** यज्ञाग्नौ जुहाव।

**(१४) सुतीक्ष्णाश्रमः -**

शरभङ्गमुनिमवलोक्य रामः सुतीक्ष्णमुनिं जगाम। सुतीक्ष्णाश्रमोऽपि दण्डकारण्येऽवर्तत[१२३]।

सुतीक्ष्णाश्रमस्य स्थितिः शरभङ्गाश्रमं निकषैव कल्पनीया। शरभङ्गाश्रमात् प्रस्थितो रामः सुस्वल्पकालेनैव सुतीक्ष्णाश्रमं प्रपन्नः। रामायणे रघुवंशे चाऽपि सुतीक्ष्णाश्रमस्य वर्णनानि सन्ति।

रामायणे बाल्मीकिना वर्णितम् -

चित्रकूटाद् दक्षिणदिशं प्रति प्रस्थितो रामः प्रथमं तावत् सुतीक्ष्णमुनेराश्रमगच्छत्। अगस्त्यो मुनिः सुतीक्ष्णस्य गुरुरवर्तत। सुतीक्ष्णस्य प्रार्थनामङ्गीकृत्य रामोऽगस्त्याश्रमं जगाम[१२४]। सुतीक्ष्णो राममसूचयत् -

अगस्त्याश्रमोऽस्मात् स्थानाद् योजनचतुष्टयविप्रकृष्टान्तरालेन वर्तते।

कालिदासोऽवर्णयत् -

पुष्पकविमानेनाऽऽकाशमार्गेण ह्ययोध्यां निवर्तमानो रामः पञ्चाग्नितपः तपस्यन्तं सुतीक्ष्णं लुलोके। प्रचण्डे सूर्यातपेऽसौ परितोऽग्निं प्रज्ज्वाल्य तपसि लीनोऽभवत्[१२५]।

सुतीक्ष्णाश्रमस्य स्थितिरपि शरभङ्गाश्रमं निकषा सम्भावनीया। इलाहाबाद-जबलपुररेलवेमार्गे जैतवारारेलवेस्टेशनात् स्थानमिदं विंशतिमीलविप्रकृष्टान्तरालेन तिष्ठति। यदि च शरभङ्गाश्रमादत्र गम्यते, अन्तरालमिदं पञ्चदशमीलपरिमितमस्ति। वर्तमानसमयेऽत्रैकं राममन्दिरमस्ति।

---

## सन्दर्भ ग्रंथ -


१. अभिज्ञानशाकुन्तल ५.३०।।
२. वही पृ० ३८९।।
३. वही पृ० ५०४।।
४. सुभद्राधनञ्जय पृ० १६८
५. महाभारत-वनपर्व- ८५.२३।।
६. पद्मपुराण ३८.२३।।
७. काव्यमीमांसा पृ० ९२।।
८. नागानन्द पृ० १६८।।
९. गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः।।
श्रीमद्भागवतपुराण।।
१०. महाभारत - आदिपर्व २१६.३४-३५.,
वनपर्व ८५.२४-२९, ८८. १४-१५।।
११. अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतनमीश्वरम्।
रघुवंश ८.३३।।
१२. सुभद्राधनञ्जय पृ० १६८।।
१३. ज्योग्राफिकल डिक्शनरी ऑफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० ७०।।
१४. कल्चुरल हिस्ट्री फ्रॉम वायुपुराण पृ० २५७।।
१५. चण्डिकायतनं गत्वा कानिचिदहान्याराधयितुं भगवतीं विन्ध्यवासिनीम्। कौमुदीमहोत्सव पृ०८ ।।

१६. देवीभागवतपुराण ७.३०।।
१७. शिवपुराण ४१.११।।
१८. कथासरित्सागर - लम्बक १, अध्याय १।।
१९. इम्पीरियल गजेटियर आफ इन्डिया वो० १८ पृ० ३७७।।
२०. सुभद्राधनञ्जय पृ० ९।।
२१. हिस्टोरिकल ज्योग्राफी ऑफ एन्शिएन्ट इन्डिया पृ० २२५।।
२२. महाभारत - सभापर्व ११८.१५।।
२३. विष्णुपुराण ५.३७-४०।।
२४. बालुकातीर्थे नर्मदां तीर्त्वा वेणुवने कलत्रमावास्य नागवनं प्रयातो भर्ता। प्रतिज्ञायौगन्धरायण पृ० १५।।
२५. सूर्यपुराण ३०.६३।।
२६. अष्टाध्यायी ५.३.५५ सूत्रे महाभाष्यम्।
२७. बालरामायण पृ० ६९५।।
२८. वही १०.१२।।
२९. चण्डकौशिक ३.४।।
३० वही २.५०
३१. काशिराजदुहितरम्। विक्रमोर्वशीय २.१ श्लोकानन्तरम्
३२. अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैता: मोक्षदायिका:। गरुड़पुराण २.३८.५
३३. चण्डकौशिक ३.६-७।।
३४. एतस्मिन् वृन्दावने प्रकामं पानीयं पीत्वा रम्भारवं कुर्वदायातु गोधनम्। बालचरितम् पृ० २१
३५. रघुवंश ६.५०।।
३६. बालरामायण पृ० १४३
३७. शक्रावताराभ्यन्तरे शाचीतीर्थं वन्दमानाया: सख्यास्ते हस्ताद् गङ्गास्रोतसि परिभ्रष्ट:।। अभिज्ञानशाकुन्तलम् पृ० ३६३।।
३८. शक्रावताराभ्यन्तरालवासी धीवर:। वही पृ० ३८०।।
३९. मलिनी के वनो में । पृ० १९१।।
४०. ऐतिहासिक नामावली पृ० ८८७
४१. उत्तररामचरित पृ० २१३।।

४२. दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः।
अभिज्ञानशाकुन्तलम् पृ० १४२

४३. ज्योग्राफिकल डिक्शनरी ऑफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० ८५।।

४४. भूगोलपत्रिका- भुवनकोषाङ्क(१९३२) मई-जून पृ० ५०६

४५. महाभारत - शल्यपर्व ४४.५२

४६. रामायण - अरण्यकाण्ड ११.८५-८६,
महाभारत - वनपर्व - अध्याय १०४

४७. रामायण - अरण्यकाण्ड ११.३७-४२

४८. ग्रामर ऑफ दी द्राविडियन लैंग्वेजेज - पृ० १०१-१०९

४९. महावीरचरित ७.३६

५०. प्रियदर्शिका पृ० ३

५१. ततः सम्प्रस्थितो राजा कौन्तेयो भूरिदक्षिणः।
अगस्त्याश्रममासाद्य दुर्जयायामुवास ह।।
महाभारत - वनपर्व ९६.१

५२. प्राचीन भारत का ऐतिहासिक भूगोल पृ० ६१०।।

५३. उत्तररामचरित पृ० १६५

५४. अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
बाल्मीकिपार्श्वादिह पर्यटामि।। उत्तररामचरित २.३

५५. महावीरचरित पृ० १६९

५६. भारत-भ्रमण चतुर्थ खण्ड पृ० ११८९

५७. ज्योग्राफिकल डिक्शनरी ऑफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० २

५८. महाभारत - आदिपर्व २१५.१-३

५९. वही २१६.१७

६०. आश्चर्यचूड़ामणि ७.२८

६१. रघुवंश १२.२७

६२. वही १३.४७-४८

६३. वही १३.५०-५१

६४. महाभारत - आदि पर्व २१५.१-३ , स्कन्दपुराण-केदारखण्ड-५७.१०-११, अग्निपुराण ११५.१०

६५. एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते।
अभिज्ञानशाकुन्तलम् पृ० १४२

६६. हिमगिरेरुपत्यकारण्यवासिन: कण्वसन्देशमादाय। वही पृ० ३३५

६७. पादास्तामभितो निषण्णहरिणा: गौरीगुरो: पावना:। वही ६.१७

६८. अष्टाध्यायी ४.२.१०

६९. इम्पीरियल गजेटियर आफ इण्डिया - भाग २, पृ० ३३२

७०. सेक्रेड बुक्स आफ दी ईस्ट

७१. मालिनी के वनो में- पृ० २०१

७२. अनर्घराघव पृ० २०

७३. मिथिलोपवने तत्र आश्रमं दृश्य राघव।
पुराणं निर्जनं रम्यं पप्रच्छ मुनिपुङ्गवम्।
रामायण - बालकाण्ड-४८.११

७४. रघुवंश ११.३३-३४

७५. ऐतिहासिक नामावली पृ० ५६

७६ कल्याण तीर्थाङ्क वर्ष ३१ पृ० १५३

७७. ज्योग्राफी ऑफ एन्शिएण्ट एण्ड मिडीवल इण्डिया पृ० ३१

७८. ऐतिहासिक नामावली पृ० ३०९

७९. कञ्चुकी - देव ! च्यवनाश्रमात् कुमारं गृहीत्वा सम्प्राप्ता तापसी।
तापसी - जातकमादिविधानं तदस्य भगवता च्यवनेनाऽशेष-मनुष्ठितम्। गृहीतविद्यो धनुर्वेदेऽभिविनीत:। उर्वशी जातमात्रमेव विद्यागमनिमित्तं भगवतश्च्यवनाश्रमे
विकुमोर्वशीयम् अंक -५

८०. तापसी - गृहीतामिष: किल पादपशिखरे लक्ष्यीकृतो बाणस्य। तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाऽहं समादिष्टा निर्यातयैनमुर्वशीहस्ते। वही अंक - ५

८१. विक्रमोर्वशीयम् - अङ्क - ५

८२. भो ! इतो दक्षिणान्तेनापगतः सः। वही अंक - ५
८३. महाभारत - वनपर्व - अध्याय १२१-१२२
८४. वही १२१.१९
८५. भृगोर्महर्षेः पुत्रोऽभूच्च्यवनो नाम भारत। वही-वनपर्व १२१-१२२
८६. ऐतिहासिक नामावली पृ० ३४६-३४७
८७. प्राचीन भारत का ऐतिहासिक भूगोल पृ० २३२
८८. केदारखण्ड पुराण अध्याय ९३-९४
८९. बालरामायण २.१५
९०. महाभारत- शान्ति पर्व ४९.६६-६७
९१. उत्तररामचरित पृ० १८-२१
९२. रामायण - अयोध्याकाण्ड ५६.१६
९३. गङ्गायास्तु परे पारे बाल्मीकेस्तु महात्मनः।
आश्रमो दिव्यसङ्काशस्तमसातीरमश्रितः।।
रामायण - उत्तरकाण्ड ४५.१७-१८
९४. अनर्घराघव पृ० ३
९५. कालिदास की कृतियों में भौगोलिक स्थानों का प्रत्यभिज्ञान पृ० ३२
९६. रामायण - उत्तरकाण्ड - अध्याय ९१-९३
९७. कुन्दमाला पृ० ६१
९८. उत्तररामचरित २.३
९९. उत्तररामचरित पृ० २०५
१००. महावीरचरित ५.२७
१०१. रामायण- उत्तरकाण्ड ४.२०-२१
१०२. ऐतिहासिक नामावली पृ० ५१९
१०३. हेमकूटो नाम किम्पुरुषपर्वतस्तपःसंसिद्धिक्षेत्रम्। यत्र -
स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः।
सुरासुगुरुः सोऽत्र सपत्नीकस्तपस्यति।।
अभिज्ञानशाकुन्तलम् ७.९
१०४. अनर्घराघव पृ० ३२
१०५. वही ७.१३-१४
१०६. रघुवंश द्वितीय सर्ग

१०७. वही २.२६

१०८. ज्योग्राफी ऑफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० १००. प्राचीन भारत का ऐतिहासिक भूगोल पृ० ५५८-५५९

१०९. महर्षिकुलवैभवम् पृ० १३

११०. हिमालयदर्शन - भूमिका पृ० ४

१११. स्कन्दपुराण के अन्तर्गत केदारखण्ड का भौगोलिक एवं सांस्कृतिक अध्ययन पृ० २२

११२. अनर्घराघव २.३४

११३. वही २.४८

११४. रामायण - बालकाण्ड २३.५-७

११५. ज्योग्राफिकल डिक्शनरी ऑफ एन्शिएन्ट एण्ड मिडीवल इन्डिया पृ० १०७, ऐतिहासिक नामावली पृ० ८६४, प्राङ्मार्यविहार पृ० ५९

११६. बालभारत पृ० ६

११७. वही पृ० १०

११८. ततो व्यासस्थली नाम यत्र व्यासेन धीमता।
पुत्रशोकाभितप्तेन देहत्यागे कृता मतिः।।
महाभारत - वनपर्व ८३.९६

११९. ऐतिहासिक नामावली पृ० ८८४

१२०. महावीरचरितम् ३.९

१२१. रामायण - अरण्यकाण्ड ५.३

१२२. अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः।
रघुवंश १३.४५

१२३. महावीर चरितम् - ५.९

१२४. रामायण - अरण्यकाण्ड ११.२७-२९

१२५. हविर्भुजामेधवतां चतुर्णां मध्ये ललाटन्तपसप्तसप्तिः।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः।।
रघुवंश १३.४१

# परिशिष्टः

प्रथमः परिशिष्टः - आलोच्यसंस्कृतरूपकाणि

द्वितीयः परिशिष्टः - सन्दर्भपुस्तकानि

तृतीयः परिशिष्टः - स्थाननामानुक्रमणिका

चतुर्थः परिशिष्टः - मानचित्रम्

पञ्चमः परिशिष्टः - ग्रन्थकर्तुः परिचयः

# प्रथमः परिशिष्टः

## आलोच्यविशिष्टरूपकाणि

१. दूतवाक्यम् - भासविरचितम् - आचार्यबलदेवोपाध्यायेन सम्पादितस्य भासनाटकचक्रस्य प्रथमभागात् (चौखम्बासंस्कृतसीरीज वाराणसी) प्रथमं संस्करणम्।

२. कर्णभारम् वही

३. दूतघटोत्कचम् वही

४. मध्यमव्यायोगः वही

५. पञ्चरात्रम् वही

६. उरुभङ्गम् वही

७. अभिषेकनाटकम् वही

८. बालचरितम् वही

९. प्रतिभानाटकम् - आचार्यबलदेवोपाध्यायेन सम्पादितस्य भासनाटकचक्रस्य द्वितीयभागात् (चौखम्बासंस्कृतसीरिज वाराणसी) प्रथमं संस्करणम्

१०. प्रतिमानाटकम् वही

११. प्रतिज्ञायौगन्धरायणम् वही

१२. स्वप्नवासवदत्तम् वही

१३. चारुदत्तम् वही

१४. मृच्छकटिकम् - शूद्रकविरचितम्। डा० श्रीनिवासमहोदयेन सम्पादितं व्याख्यातञ्च (साहित्य भण्डार) मेरठ १९७६ ई०

१५. अभिज्ञानशाकुन्लम् - कालिदासविरचितम्। डा० कृष्णकुमारमहोदयेन सम्पादितं व्याख्यातञ्च (प्रकाश बुक डिपो बरेली) १९६५ ई०

१६. विक्रमोर्वशीयम् - कालिदासविरचितम्। सीतारामचतुर्वेदीमहोदयेन सम्पादितायाः कालिदासग्रन्थावल्याः। (अखिल भारतीय विक्रम परिषद् काशी) २०१९ विक्रमी संवत्। तृतीयं संस्करणम्।

१७. मालविकाग्निमित्रम् - कालिदासविरचितम् । पी० डी० शास्त्री महोदयेन सम्पादितमनूदितञ्च। (आत्माराम एण्ड सन्स दिल्ली) १९६४ई०।

१८. मुद्राराक्षसम्- विशाखदत्तविरचितम्। आर० एस० वलिम्बे महोदयेन सम्पादितम्।

१९ देवीचन्द्रगुप्तम् - विशाखदत्तविरचितम् राघव नमहोदयेन सम्पादिते शृङ्गारप्रकाशे समुद्धृतम्। १९६३ई०।

२०. कौमुदीमहोत्सवम् - बिज्जिकाविरचितम्। रामकृष्णमहोदयेन सम्पादितम्। (त्रिवेन्द्रम) १९१२ ई०।

२१. पद्मप्राभृतकम् - शूद्रकविरचितम्। डा० मोतीचन्द्रेण वासुदेवशरणे-नाग्रवालेन च सम्पादितात् शृङ्गारहाटग्रन्थात्। (हिन्दी ग्रन्थरत्नाकर कार्यालय प्राइवेट लिमिटेड बम्बई ) १९५९ई०।

२२. उभयाभिसारिका- वररुचिविरचिता। वही

२३. धूर्तविटसंवादः - ईश्वरदत्तविरचितः। वही

२४. वादताडितकम् - श्यामिलकविरचितम्। वही

२५. प्रियदर्शिका- हर्षविरचिता। पं० रामचन्द्रमिश्रमहोदयेन सम्पादिता व्याख्याता च। (चौखम्बा संस्कृत सीरिज वाराणसी) १९५५ ई०

२६. रत्नावली - हर्षविरचिता। डा० शिवराजशास्त्रिणा सम्पादिता व्याख्याता च। (साहित्य भण्डार मेरठ) १९६८ ई०।

२७. नागानन्दम् - हर्षविरचितम्। पं० बलदेवोपाध्यायेन सम्पादितं टीकितञ्च। (चौखम्बा विद्याभवन वाराणसी ) १९६८ ई०।

२८. वेणीसहारम् - भट्टनारायणविरचितम्। डा०शिवराजराजशास्त्रिणा सम्पादितं व्याख्यातं च। (साहित्य भण्डार मेरठ) १९६६ई०।

२९. मत्तविलासः - महेन्द्र विक्रमवर्मविरचितः। श्रीकपिलदेव गिरिमहोदस्य टीका। (चौखम्बा विद्याभवन वाराणसी ) १९६६ ई०।

३०. महावीरचरितम् - भवभूतिविरचितम्। वीरराघवस्य टीका। (निर्णयसागर प्रेस बम्बई) १९२६ ई०।

३१. मालतीमाधवम्- भवभूतिविरचितम्। चन्द्रकला-हिन्दी-संस्कृतटीका। (चौखम्बासंस्कृत सीरिज वाराणसी) १९५४ ई० ।

३२. उत्तररामचरितम् - भवभूतिविरचितम्। ब्रह्मानन्दशुक्लमहोदयेन सम्पादितं व्याख्यातञ्च। (साहित्य भण्डार मेरठ) १९७५ ई०।

३३. आश्चर्यचूड़ामणि: - शक्तिभद्रेण विरचित:। पं० रमाकान्त झा महोदयस्य टीका। (चौखाम्बा विद्या भवन वाराणसी) १९६६ ई०।

३४. वीणावासवदत्तम् - शक्तिभद्रविरचितम्। जर्नल आफ ओरियन्टल रिसर्च मद्रास केन्द्रेण प्रकाशितम् १९३१ ई०।

३५. रामाभ्युदयम् - यशोवर्मकृतम्। श्री राघवनकृत सम ऑल्ड प्लेज ग्रन्थे समुद्धृतम्। (अन्नामलाई विश्वविद्यालय प्रकाशनम्) १९६१ ई०।

३६. अनर्घराघवम् - मुरारिविरचितम्। (काव्यमाला सीरिज संख्या ५ प्रकाशनम्) १९६१ ई०।

३७. तापसवत्सराजम् - अनङ्गहर्षकृतम्। डा० देवीदत्तशर्मणा सम्पादितं व्याख्यातञ्च। (साहित्य भण्डार मेरठ ) १९६९ ई०।

३८. सुभद्राधनञ्जयम्- कुलशेखरवर्मविरचितम्। गणपति शास्त्रिणा सम्पादितम्। (त्रिवेन्द्रम) १९१२ ई०।

३९. तपतीसंवरणम् - कुलशेखरवर्मविरचितम्। गणपतिशास्त्रिाणा-सम्पादितम्। (त्रिवेन्द्रम) १९११ ई०।

४०. हनूमन्नाटकम्- दामोदरमिश्रविरचितम्। श्रीमोहनदासकृत टीका। (क्षेमराज श्रीकृष्णदास वेंकटेश्वर स्टीम प्रेस बम्बई) १९६६ई०।

४१. चण्डकौशिकम्- क्षेमीश्वरविरचितम्। श्री जगदीशमिश्रमहोदयस्य टीका। (चौखम्बा विद्याभवन वाराणसी) १९६५ ई०।

४२. बालरामायणम् - राजशेखरविरचितम्। जीवानन्दविद्यासागरेण सम्पादितम्। (निर्णय सागर प्रेस बम्बई) १९१० ई० ।

४३. बालभारतम् - राजशेखरविरचितम्। श्री हरिदत्तशर्ममहोदयस्य टीका। (चौखम्बा संस्कृत सीरीज वाराणसी) १९६९ ई० ।

४४. कर्पूरमञ्जरी - राजशेखरविरचिता। चुन्नीलाल शुक्लमहोदयेन व्याख्याता सम्पादिता च। (साहित्य भण्डार मेरठ १९७२ ई०।

४५. विद्धसालभञ्जिका- राजशेखरविरचिता। श्रीरमाकान्तत्रिपाठिमहोदयस्य टीका। ( चौखम्बाविद्याभवन वाराणसी ) १९६५ ई०।

४६. कुन्दमाला - दिङ्नागविरचिता। श्री चुन्नीलालमहोदयेन सम्पादिता। (साहित्य भण्डार मेरठ) १९७२ ई०।

# द्वितीयं परिशिष्टम्

## स्थाननामानुक्रमणिका

# द्वितीय: परिशिष्ट:

## सन्दर्भ पुस्तकानि

**वैदिकसाहित्यम्**

ऋग्वेद
यजुर्वेद
तैत्तिरीय संहिता
वाजसनेयिसंहिता
सामवेद
अथर्ववेद
ऐतरेय ब्राह्मण
शतपथ ब्राह्मण
गोपथ ब्राह्मण
तैत्तिरीय आरण्यक
कौशीतकि-उपनिषत्

**शास्त्रीय ग्रन्था:**

अमरकोष - अमरसिंह
अष्टाध्यायी - पाणिनि महाभाष्य सहित
कामसूत्र - वात्स्यायन - जयमङ्गला टीका सहित
काव्यमीमांसा - राजशेखर
क्लासिकल डिक्शनरी
त्रिकाण्डशेष
नाट्यशास्त्र - भरत
वृहत्संहिता

मनुस्मृति
महाभाष्य - पतञ्जलि
वराहसंहिता - वराहमिहिर
शक्तिसङ्गमतन्त्र
शृङ्गारप्रकाश - भोज
संस्कृत-इंग्लिश डिक्शनरी - आप्टे
सिद्धान्तशिरोमणि
सुमङ्गलविलासिनी

**बौद्धजैन ग्रन्थाः -**

अंगुत्तरनिकाय
दिग्धनिकाय
दिव्यावदान
महावंशपुराण
महावस्तु
संयुत्तनिकाय

**पुराणानि -**

अग्निपुराण
कूर्मपुराण
गरुडपुराण
देवीभागवतपुराण
पद्मपुराण
ब्रह्मपुराण
ब्रह्माण्डपुराण
भविष्यपुराण
भागवतपुराण
मत्स्यपुराण
मार्कण्डेयपुराण
वराहपुराण
वामनपुराण

विष्णुपुराण
विष्णुधर्मोत्तरपुराण
शिवपुराण
स्कन्दपुराण

**काव्यसाहित्यम् -**

कथासरित्सागर - सोमदेव
कादम्बरी - बाणभट्ट
कालिदासग्रन्थावली - पं० सीतारामचतुर्वेदिमहोदयेन सम्पादिता
कुमारसम्भवम् - कालिदास
नैषधीयचरितम् - श्रीहर्ष
प्रसन्नराघव - जयदेव
बुद्धचरित - अश्वघोष
बृहत्कथाश्लोकसंग्रह
मङ्गलस्तोत्र
महर्षिकुलवैभवम् - मधुसूदन ओझा
महाभारत- व्यास
मेघदूत - कालिदास
रघुवंश - कालिदास
राजतरङ्गिणी - कह्लण
रामचरितमानस- तुलसीदास
रामायण- बाल्मीकि
विक्रमाङ्कदेवचरित - बिह्लण
शिशुपालवध - माघ
शृङ्गारहाट - डा० मोतीचन्द्र- वासुदेवशरण अग्रवाल सम्पादित
हर्षचरित - बाणभट्ट

**आधुनिकसमालोचनात्मक ग्रन्थाः -**

अर्ली हिस्ट्री आफ इण्डिया -स्मिथ - आक्सफोर्ड प्रथम संस्करण
अशोक के शिलालेख
आंन हेन्त्सांग्स ट्रेवल्स इन इण्डिया (६२९-६४४ई०)

वाटर्स थोमास, रायल एशियाटिक सोसाइटी, (१९०४-१९०५)

आयने अकबरी

आर्केओलोजिकल सर्वे आफ इन्डिया रिपोर्ट (१९११-१९१२ई०)

इन्डिया इन कालिदास - बी० एस० उपाध्याय इलाहाबाद १९५४ ई०

इम्पीरियल गजेटियर आफ इन्डिया

एन्शिएन्ट इन्डियन हिस्टोरिकल ट्रेडीशन्स - पर्जीटर

एन्शिएन्ट इन्डिया एज डिस्क्राइब्ड बाई मेगास्थनीज एण्ड एरियन (जे० मेक्रोन्डिल, लन्डन) १९२६ ई०

एपिक इन्डिया- सी० बी० वैद्य(बम्बई) १९२३ ई०

एपिग्राफिका इन्डिका

ऐतिहासिक नामावली - विजयेन्द्रकुमार माथुर वैज्ञानिक तथा तकनीकी शब्दावली आयोग रामकृष्णपुरम्, नई दिल्ली- १९६९ई०

कल्चुरल हिस्ट्री फ्राम वायुपुराण - देवेन्द्रकुमार राजाराम पाटिल, पूना, १९४६ ई०

कार्पस इन्स्क्रिप्शनम इन्डिकेरम

कालिदास का भारत - भगवतशरण उपाध्याय - भारतीय ज्ञानपीठ काशी - १९६५ ई०

कालिदास की कृतियों में भौगोलिक स्थानों का प्रत्यभिज्ञान -

कैलासनाथ द्विवेदी - साहत्य निकेतन कानपुर - १९७० ई०

किन्नर देश में- राहुल सांकत्यायन - प्रयाग १९६२ ई०

कैम्ब्रिज हिन्ट्री आफ इन्डिया भाग - १ - १९२२ ई० गिरिनार का शिलालेख

ग्रामर आफ दी द्रविडियनलैग्वेजेज - काफवेल

ज्योग्राफी आफ अर्ली बुद्धिज्म - बी० सी० ला

ज्योग्राफीकल कान्सेप्ट्स इन एन्शिएन्ट इन्डिया - बेचन दूबे-

राष्ट्रीय भूगोल परिषद् वाराणसी १९६७

ज्योग्राफी आफ दी पुराणाज - एस० एम० अली, नई दिल्ली १९६६ ई०

डेवलपमेन्ट आफ ज्योग्राफीकल नालेज इन एन्शिएन्ट इन्डिया -

मायाप्रासाद त्रिपाटी - १९७० ई०
दी एज आफ इम्पीरियल गुप्ताज - आर० डी० बनर्जी १९३३ ई०
दी एन्शिएन्ट ज्योग्राफी आफ इन्डिया - अजेक्जेन्डर कनिंघम - १९६३ ई०
दी एशियाटिक रिसर्चेज - खण्ड १२, दि रिसर्चेज टु मानसरोवर
दी ज्योग्राफिकल डिक्शनरी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया- नन्दलाल डे - कोलकाता १९२४ ई०
दी डायनेस्टीज आफ दी कैनरिज डिस्ट्रक्ट्स
पतञ्जलिकालीन भारतवर्ष - प्रभुदयाल अग्निहोत्री - बिहार राष्ट्रभाषा परिषद् पटना - १९६३ ई०
पाणिनिकालीन भारतवर्ष - वासुदेवशरण अग्रवाल सम्वत् २०१२
पुराणविमर्श - बलदेव उपाध्याय - वाराणसी १९६५ ई०
पोलीटिकल हिस्ट्री आफ एन्शिएन्ट इन्डिया - एच० सी० चौधरी - १९५३ ई०
प्राड्मौर्य बिहार- डा० देवसहाय त्रिवेदी - पटना १९५४ ई०
प्राचीन भारत - डा० राधाकुमुद मुकर्जी
प्राचीन भारत का ऐतिहासिक भूगोल - विमलचरण लाहा - उत्तरप्रदेश हिन्दी अकादमी लखनऊ १९७२ ई०
प्राचीन भारत का भौगोलिक स्वरूप - अवध बिहारी लाल अवस्थी - १९६४ ई०
प्राचीन भारतीय परम्परा और इतिहास - रांगेय राघव - दिल्ली प्रथम संस्करण
प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका - डा० रामजी उपाध्याय
बुद्धिस्ट इण्डिया - रीज डेविड्ज (१९५०ई०)
बोम्बे गजेटियर
भरहुत इन्स्क्रिप्शन्स - बरुआ एवं सिन्हा
भारत की जन-जातियां और संस्थायें - सत्यव्रत सिद्धान्तालंकार- देहरादून - १९६० ई०

भारत की भौगोलिक एकता - वासुदेवशरण अग्रवाल प्रयाग - प्रथम संस्करण

भारत-भूमि - चन्द्रगुप्त विद्यालंकार

भारत-भ्रमण - साधुचरणप्रसाद - बम्बई (१९६९ ई० )

भारतीय इतिहास की रूप रेखा - जयचन्द्र विद्यालंकार

मार्कण्डेय पुराण - पर्जीटर

मालिनी के वनों में - निधि विद्यालंकार दिल्ली १९६० ई०

रुद्रदामन् का शिलालेख

वैदिक इन्डेक्स - नेम्स एण्ड सब्जेक्ट्स - मैक्डानल एवं कीथ - १९१२ ई०

सैक्रेड बुक्स आफ दी ईस्ट - मैक्समूलर

स्कन्दपुराण के अन्तर्गत केदारखण्ड का भौगोलिक एवं सांस्कृतिक अध्ययन - गोविन्दप्रसाद हटवाल - आगरा विश्वविद्यालय द्वारा प्रदत्त पी एच० डी० (१९६२ ई०) का शोधप्रबन्ध

स्टडीज इन इन्डियन एन्टीकिटीज - एच० सी० राय चौधरी

स्टडीज इन दी ज्योग्राफी आफ एन्शिएन्ट एण्ड मिडीवल इन्डिया - डी० सी स रकार - दिल्ली १९६० ई०

हिन्दू सभ्यता- राधाकुमुद मुकर्जी - कलकत्ता - प्रथम संस्करण

हिमालय दर्शन - कृष्णनारायण गोस्वामी दिल्ली १९६३ ई०

हिस्टोरिकल ज्योग्राफी आफ एन्शिएन्ट इन्डिया बी० सी० ला

पत्रिकायें :-

इन्डियन एन्टीकिटीज बो० २

इडियन हिस्टोरिकल क्वार्टर्ली भाग २

एनल्स आफ भण्डारकर ओरिएन्टल रिसर्च इन्टीस्यूट - पूना भाग- २

एन्शिएन्ट रिसर्चेज वो० १२

कल्याण तीर्थाङ्का - गीताप्रेस - गोरखपुर वर्ष ३१

कादम्बिनी अक्टूबर १९६२

जर्नल आफ एशियाटिक सोसाइटी आफ बंगाल - १९२५ ई०

जर्नल आफ रायल एशियाटिक सोसायटी १८९४ तथा १९७४
जर्नल आफ रायल एशियाटिक सोसाइटी बोम्बे ब्रांच भाग - १४
भारती - ए बुलेटिन आफ कालेज आफ इन्डोलाजी काशी हिन्दू विश्वविद्यालय - वासुदेवशरण अग्रवाल वोल्यूम - १९६९ - ७१
भुगोल पत्रिका प्रयाग - भुवन कोषाङ्क मई-जून-जुलाई १९३१ अंक

## काव्यकर्तुः परिचयः

**जन्मतिथिः-** १० फरवरी १९२५

**जन्मस्थानम्-** पश्चिमोत्तरप्रदेशस्य मुरादाबादनगरम्

### पारिवारिक पृष्ठभूमिः-

काव्यकर्तुः पितृचरणानां श्रीभूषणशरणमहोदयानां मुरादाबादनगरवास्तव्यानां गणना नगरस्याऽतिसमृद्धसफलव्यापारिवर्गेऽवर्तत। भारतीयस्वातंत्र्यान्दोलनेतिहासेऽसौ प्रसिद्धो महनीयरूपेणाऽगण्यत। आङ्ग्लशासनजनितपराधीनतापीडामसहमानोऽसौ कृष्णमन्दिरं कारागृहमपि स्वप्रवेशेनाऽलञ्चकार। काव्यकर्तुः जननी श्रीमती रामप्यारी धार्मिक-वृत्तिधारिणी कुशलगृहिणी समवर्तत। पञ्च पुत्रान् कृष्णकुमारब्रजकुमाररामकुमार-विनोदकुमाररमेशकुमारान् द्वे च सुते कृष्णाकुमारीं राजकुमारी च प्रसूय सा धन्यतमा जननी पतिव्रता गृहस्थधर्मपालनरता बभूव। श्री भूषणशरणमहोदयाः स्वजीवनकाल एव स्वतन्त्रतासूर्यालोकप्रकाशितां भारतभुवमवलोक्य प्रसादातिशयेन विकसितहृदयपुण्डरीकाः १९४८ तमे ख्रीष्टाब्दे भगवता समाहूताः स्वर्गलोकयात्रामङ्गीचक्रिरे।

१९४६ तमे ख्रीष्टाब्दे डा० कृष्णकुमारमहोदयो बीसलपुरनिवासिनी प्रह्लादस्वरूप-तनूजां वैदर्भीमिव दमयन्तीं परिणीय गृहस्थधर्मपालनरतो बभूव। सा पावनी जननी हिमानीनिर्मलसलिलप्रवाहानिव त्रीन् सुतान् सर्वविधगुणसुभूषितान् प्रदीपालोकमयङ्क-कुमारानेकाञ्च गौरवान्वितां सुतां मञ्जुलां प्रसुषुवे।

### शिक्षा-

राष्ट्रीयस्वतन्त्रतान्दोलनासक्तचित्तो राष्ट्रीयविचारधारासमलङ्कृतहृदयो भूषण-शरणमहोदयः स्वपुत्रं आङ्ग्लशिक्षाध्ययनपरिवर्जितमानसमायुपो सप्तमे वर्ष उपगङ्गं गुरुकुलकाङ्गडीविश्वविद्यालयेऽध्ययनाय १९३१ तमे ख्रीष्टाब्दे प्रवेशयामास। चतुर्दश-वर्षावधिसमयं यावद् विद्यामधीत्याऽसौ तरुणाऽवस्था प्रपन्न कृष्णकुमार आयुर्वेदालंकार-प्रमाणपत्रमधिगम्य गुरुकुलकांगड़ीविश्वविद्यालयस्य स्नातकपदमभूषयत्। तदनन्तरमसौ आगराविश्वविद्यालयाद् एम.ए (संस्कृत) इत्युपाधि सम्प्राप्य पी-एच.डी. इत्युपाधि-मप्यधिगतवान्। तदनन्तरं वाराणसीस्थसंस्कृतविश्वविद्यालयाद् आचार्य (साहित्य) पदवीं लब्ध्वाऽसौ प्रखरप्रतिभान्वितोऽध्ययनशीलो विद्यार्थी पुण्यभूमिकेदारखण्डस्थश्रीनगरे प्रतिष्ठापितेन गढ़वालविश्वविद्यालयेन डी.लिट इत्युपाधिनाऽपि सप्रतिष्ठं विभूषितः।

### अध्यापनम्-

स्वकुलजननीसेवासलग्नमानसोऽसौ कृष्णकुमार प्रथमं तावद् गुरुकुलविश्व-

विद्यालयेऽध्यापनकार्यं स्वीचकार। तदनन्तरं मुजफ्फरनगरस्थसनातनधर्मस्नातकोत्तर-महाविद्यालयेऽध्यापनकार्यं निर्वाह्य विभिन्नेषु उत्तरप्रदेशस्थराजकीयस्नातकोत्तरमहाविद्यालयेषु प्रायशः देवतात्महिमालयनगाधिराजक्रोडसमवस्थितेषु संस्कृतविभागाध्यक्षपदमलंकुर्वाणः श्रीनगरे नवस्थापितगढवालविश्वविद्यालये संस्कृतविभागाध्यक्षपदमङ्गीचकार। बहुतिथं यावत् सम्मानं समुपलभ्य विद्यार्थिनां स्नेहादरपात्रतां गतोऽसावेकत्रिंशद्वर्षपर्यन्तमध्यापनकार्यं निर्वाह्य १९८५ तमे ख्रीष्टाब्दे सेवानिवृत्तो बभूव। तदनन्तरं गङ्गातीरमेव बहु मन्यमानः सर्वकलुषप्रक्षालनसमर्थे पुराणेषु प्रसिद्धे कनखलनगरे जीवनयात्रानिर्वहणाभिलाषी निवासमभिललाष।

## शोधकार्याणि-

डा० कृष्णकुमारमहोदयेन बहूनि शोधकार्याणि विश्वविद्यालयानुदानायोगसहायतयाऽन्यासां च संस्थानां सहयोगेन स्वयं चाऽपि महताऽध्यवसायेन प्रपूरितानि। तेषां च कानिचिदधो लक्ष्यन्ते-

केदारखण्डपुराणस्य सम्पादनमनुवादो विवेचनात्मकमध्ययनञ्च
संस्कृतरूपकेषु जन्तूनां वनस्पतीनाञ्च स्थितिः
प्राचीनभारतस्य सांस्कृतिक इतिहासः
गढवालजनपदस्य प्राचीना अभिलेखाः
प्राचीनभारतस्य राजनीतिकप्रशासनिकसंस्थाः
प्राचीनभारतस्य शिक्षा-पद्धतिः

## शोधनिर्देशनम्-

डा० कृष्णकुमारस्य निर्देशने पञ्चाशदधिकछात्रैः शोधकार्याणि सम्पाद्य विभिन्नेभ्यो विश्वविद्यालयेभ्यः शोध-उपाधयः सम्प्राप्ताः।

## ग्रन्थलेखनम्-

डा० कृष्णकुमारेण विरचिता लिखिताश्च पञ्चाशदधिकग्रन्थाः वर्तन्ते। विषयानुसारं तेषां नामान्यधो निर्दिश्यन्ते-

### प्राचीन भारतीय संस्कृतिरितिहासश्च

(१) भारतीय संस्कृति के आधार तत्त्व
(२) वैदिक साहित्य का इतिहास
(३) संस्कृत साहित्य का इतिहास
(४) गढ़वाल के प्रमुख तीर्थ
(५) गढ़वाल के संस्कृत अभिलेख
(६) गढ़वाल के प्राचीन अभिलेख और उनका ऐतिहासिक महत्त्व
(७) प्राचीन भारत का सांस्कृतिक इतिहास
(८) प्राचीन भारत की राजनीतिक एवं प्रशासनिक संस्थायें

समालोचनात्मकग्रन्था:

(९) पं० अम्बिकादत्त व्यास - एक अध्ययन
(१०) संस्कृत-नाटक-सूक्ति-तरङ्गिणी
(११) संस्कृत्त नाटकों का भौगोलिक परिवेश
(१२) संस्कृत नाटकों का जीव-जगत्
(१३) संस्कृत नाटकों का वानस्पतिक पर्यावरण

अलङ्कारशास्त्रीयग्रन्था:

(१४) अलङ्कारशास्त्र का इतिहास
(१५) ध्वन्यालोक व्याख्या
(१६) छन्दोऽलंकारप्रकाश

वैदिकसाहित्यम्

(१७) वैदिकसाहित्य का इतिहास
(१८) ऋक्सूक्तसंग्रह
(१९) ऋक्सूक्तसुधाकर
(२०) चतुर्वेद-सूक्त-सुधाकर
(२१) वैदिकसूक्तसंग्रह

काव्य-व्याख्या ग्रन्था:

(२२) अभिज्ञानशाकुन्तलम्
(२३) प्रियदर्शिका नाटिका
(२४) प्रतिमानाटक
(२५) रघुवंशम्
(२६) किरातार्जुनीयम्
(२७) शिवराजविजय:
(२८) कुसुमलक्ष्मी
(२९) कुन्दमाला
(३०) हर्षचरितम्

काव्यानुवादा:

(३१) मेघदूतानुशीलनम्
(३२) चौरपञ्चाशिका

ग्रन्थविवरणी

(३३) Descriptive Catalogue of Sanskrit Manuscripts Part I
(३४) Descriptive Catalogue of Sanskrit Manuscripts Part II

(३५) Descriptive Catalogue of Sanskrit Manuscripts Part III

पुराणानि

(३६) केदारखण्डपुराणम् - सम्पादनमनुवादो विवेचनात्मकमध्ययनञ्च (चार खण्डों में)

**मौलिकसंस्कृतकाव्यप्रणयनम्**

(३७) उदयनचरितम् (संस्कृतोपन्यास:)

(३८) अस्ति कश्चिद् वागर्थीयम् (संस्कृत नाटकम्)

(३९) तपोवनवासिनी (संस्कृतोपन्यास:)

(४०) विधिपौरुषम् (संस्कृतोपन्यास:)

**कथा साहित्य (हिन्दी)**

(४१) प्राचीन कथायें

(४२) तपोवनवासिनी

(४३) भाग्य और पुरुषार्थ



**चिकित्साग्रन्था:**

(४४) विषविज्ञान

(४५) पोषण के लिये विटामिन और खनिज

(४६) अन्त:स्रावी ग्रन्थियां

**प्रकाशनार्थ पाण्डुलिपय:**

(४७) बाल्मीकिरामायणम् (सम्पादनमनुवादश्च)

(४८) केदारखण्डप्रदेशस्य तीर्थयात्रा तीर्थस्थलानि च

(४९) प्राचीन भारत की न्याय-व्यवस्था

(५०) काव्यशास्त्रविमर्श:

(५१) प्राचीन भारत की शिक्षा-पद्धति

(५३) वत्सराज उदयन

एतदतिरिक्तं काव्यकारस्य वा सम्पादकस्य वा समालोचकस्य वा काव्यव्याख्यातुर्वा डा० कृष्णकुमारस्य बहवो निबन्धा: शोधलेखा: वा विभिन्नासु पत्रिकासु प्रकाशिता: समभूवन्, आंकाशवाणीकेन्द्रेभ्यश्च वार्ता अपि प्रसारं प्राप्ता:।

सेवानिवृत्त्यनन्तरमधुनाऽप्यस्यां वृद्धावस्थायां डा० कृष्णकुमारमहोदय: सततं सरस्वतीसाधनायामेव दिवानिशं संलग्नो दृश्यते।

---